॥ श्रीः ॥

महाकविश्रीभारविप्रणीतं

# किरातार्जुनीयं

श्रीचित्रभानुप्रणीतया शब्दार्थदीपिकाख्यया व्याख्यया समेतम्।

---

## प्रथमः सर्गः।

शिवं महः शार्ङ्गिशिवात्मविग्रहं समस्तमङ्गल्यमधीश्वरं परम्।
जगत्क्रियातत्फलजन्मकारणं प्रणौमि भक्त्या प्रणमामि चान्वहम् ॥

परां गिरं तां च गणेश्वरं च तं जगद्गुरुं तं च पराशरात्मजम्।
प्रणम्य तद्भारविकाव्यवारिधेर्विचेतुमाकूतमणीन् यतामहे ॥

स्फुरन्मनाग् भारविभारतीगतं मनोरमं वस्तु गभीरमद्भुतम्।
अपुष्कलो लक्षणलक्ष्यगोचरः श्रमश्च वाचालतरं करोति माम् ॥

गभीरता भारविभारतीषु या प्रसन्नता चानुपदं प्रतीयते।
इयत्तया तामवगन्तुमुद्यतो ध्रुवं सुधासिन्धुतलं दिदृक्षते ॥

प्रवृत्तिशक्त्योरवसादतोऽन्तरा भवेदनिर्व्यूढमिदं तु यद्यपि।
तथापि शब्दार्थनवाध्वबोधकं करोति कामं सुधियां निबन्धनम् ॥

नवा नवे कर्तरि सावधीरणाः समत्सराः केऽपि विदग्धमानिनः।
निबन्धनेऽस्मिन् जनयन्त्युपेक्षणं त्यजन्ति ते रत्नवरं करार्पितम् ॥

रसान्तरज्ञाः पदवाक्यचातुरीविवेचका मानविदो विपश्चितः।
पराकृतेर्ष्याः परितः परीक्षकाः पृथक् परीक्षां कृतिनोऽत्र कुर्वताम् ॥

परीक्षितेऽत्रावहितैः परीक्षकैः क्रमेण दोषाश्च गुणाश्च भान्ति चेत्।
विविच्य वागर्थगतेर्विभावनाद् भवेद् ध्रुवं नः सफलः परिश्रमः ॥


G. P. T. 817. 500. 20-4-93 B

अत्र केचिदाचक्षते— सर्वारम्भेषु सर्वैर्मङ्गलाचरणं क्रियते। मङ्गलाचरणपराणामेवाभीप्सितानि फलानि सिध्यन्ति। "मङ्गलाचारयुक्तानां विनिपातो न विद्यते" इति च स्मृतिः। स्थायियशस्सन्तानफलस्य ग्रन्थस्यारम्भे तु महन्मङ्गलमनुष्ठेयम्। तत्रापि तावदुचितव्यवहारावगतिनिरतिशयसहृदयप्रीतिविशिष्टस्थिरतरकीर्तिसन्तानप्रयोजनस्य लोकोत्तरवर्णनविशिष्टाह्लादरूपरसाभिव्यक्तिनिपुणतरमहाकविकर्मणो महाकाव्यस्यारम्भे तु महत्तरं मङ्गलमाचरणीयमादरणीयं च। 'श्रेयांसि बहुविघ्नानी'ति च प्रसिद्धिः। विघ्ननिवारणं च मङ्गलाचरणेनैव शक्यते। अभिमतमङ्गलाशासनम् अभीष्टदेवतानमस्कृतिश्च मङ्गलाचारतया ग्रन्थारम्भे शिष्टैरनुष्ठीयते। वस्तुनिर्देशश्च श्रोतृविशेषप्रवृत्तये ग्रन्थारम्भे कर्तव्य एव। "सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणम्। आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्॥" इति चाभियुक्तोक्तिः। एषां त्रयाणामेकमप्यस्मिन् ग्रन्थे न दृश्यते। अविघ्नेन परिसमाप्तः प्रसृतोऽपि ग्रन्थः शिष्टाचारोपेक्षितुः कर्तुरनाप्ततया बौद्धग्रन्थवदनादरणीयः। किञ्च युधिष्ठिरो वास्य प्रबन्धस्य नायकः स्याद् धनञ्जयो वा। युधिष्ठिरश्चेत् तस्य चरितमादिमध्यान्तव्यापितया प्रतिपाद्येत यथा शिशुपालवधादिषु कृष्णादीनाम्। परमप्रयोजनं च नायकाश्रयमेव वाच्यम्। अस्मिन् प्रबन्धे पाशुपतास्त्रलाभः परमप्रयोजनत्वेन प्रतीयते। स तु धनञ्जयायत्तः। सपत्नोच्छेदसाध्यः साम्राज्यलाभो युधिष्ठिरसंबन्धि प्रयोजनम्। स च मन्त्रे प्राप्यतयोपक्षिप्त एव, न निर्व्यूढः। मध्य एवेतिवृत्तस्यावसानात्। किरातार्जुनीयमितीयं संज्ञापि युधिष्ठिरनायकत्वं न सहते। धनञ्जयश्चेन्नायकः, आदित एवारभ्य स्वतन्त्रतयैव प्रतिपादनीयः, यथा शिशुपालवधादिषु कृष्णादयः इति शिष्टाचरितेष्टदेवतानमस्क्रियाद्यदर्शनेन नायकनिर्णयहेत्वभावेन च शङ्कितदोषोऽयं प्रबन्धो न व्याख्येय इति। अत्र समाधिः— ग्रन्थारम्भेषु प्रतिभाप्रसरणप्रतिबन्धविघ्नसंघातविधायिनं दुरितनिकरं निरसितुं परमदेवतास्तुतिप्रणतिरूपां नमस्क्रियां प्रसन्नदेवताविषयस्वाभिमताभ्यर्थनमर्थीमाशिषं च प्रयुञ्जते महाकवयः। शिष्टाचारपराङ्मुखानां प्रकृतस्याविघ्नेन परिसमाप्तिः प्रसृतिश्च न भवेत्। अस्य तु महाकाव्यस्याविघ्नेन परिसमाप्तिः प्रसरणातिशयश्च तत्कारणभूतं समग्रं मङ्गलाचरणमनुमापयत्येव। ग्रन्थारम्भेषु

'तत्तदु', १. 'तः' ग. पाठः.

कर्तव्यमाशीर्नमस्क्रियारूपं मङ्गलाचरणं तु द्विविधं ग्रन्थाद् बहिरेव कृतं ग्रन्थे-निवेशितं च । एतज्जन्मोपार्जितपुण्योपजायमानाप्रतिमप्रतिभागुणैरनिश्चितप्राचीनजन्मपुण्यप्रकर्षैः प्रतिभाप्रसरणविरोधिसावशेषदुरितनिवारणाय तयोराशीर्नमस्क्रिययोर्ग्रन्थे निवेशः क्रियते । अयं त्वनेकजन्मोपचितपरिपूर्णपुण्यवासनासमुन्मिषितशेमुषीकः परमेश्वरप्रसादातिशयेन मतिमुकुरपरिस्फुरितसमुचितरसविसरनिःष्यन्दिशब्दार्थप्रपञ्चप्रवाहः कविसहृदयानां परमाचार्यः शश्वद् विश्वविषयव्यापिप्रतिभाप्रभारविभारविः परमदेवतास्वरूपनिरन्तरस्मरणनिरस्तसमस्तप्रतिबन्धप्रबन्धः सन् आशीर्नमस्क्रिये न ग्रन्थे न्यवेशयत् । किञ्च स्वयमेव परमेश्वरं प्रसादयितुम् अप्रगल्भानां मन्दाधिकारिणां श्रोतॄणां विघ्नाभिविहतिर्ग्रन्थनिवेशितयोराशीर्नमस्क्रिययोः प्रधानफलम् । श्रोतृजनविघ्नविघातादिप्रयोजनावाशीर्नमस्काराविग्रथितवानयं महाकविः परमेश्वरानुग्रहसमुन्मिषन्मतय एवास्य महाकाव्यस्य श्रवणे मुख्याधिकारिण इत्यसूचयत् । अपिच सकलसमृद्धिमङ्गलैकमूलविमलविद्यामूर्तिपुरुषोत्तमशक्तिविषयं श्रीशब्दं, विश्वसृष्टिविधायिप्रजापतिसमष्ट्यभिव्यक्तिनिमित्तं धर्मतत्त्वं द्योतयन्तं धर्मात्मजाभिधानं युधिष्ठिरशब्दं, मृगव्याधरूपं विरूपाक्षं व्यञ्जयन्तं वनेचरशब्दं च ग्रन्थे निवेशयन्नयं महाकविः मध्यमबुद्धीनां श्रोतॄणामभिमतसिद्धये परमदेवतास्मृतिनिदानमाततान । एवं समस्तदेवतासमष्टिशक्त्यधिष्ठायिनो हरिहराहिरण्यगर्भान् मनसि वचसि चानुसन्दधानः परमभागवतो भारविः शिष्टाचरितं ग्रन्थारम्भोचितं मङ्गलं न कृतवानिति कथमुच्यते । वस्तुनिर्देशस्तु श्रोतृप्रवृत्तिप्रयोजनः कुरुयुधिष्ठिरादिशब्दैर्भारतविषयं प्रबन्धं सूचयता प्रथमश्लोकेनैव विवृत इति निवृत्ताः सर्व एवास्य काव्यस्य श्रवणे प्रवर्तेरन् । भारतानां तु चरितसन्दर्भे कस्मिन् भागे नातिमहती रतिरित्यलं बहुना । नायकस्तु युधिष्ठिरोऽस्मिन् काव्ये भवेत् । स एव हि शेषितया विशेषणादिमध्यान्तेषु प्रतिपाद्यते । आदौ तावदस्य शेषित्वमतिस्फुटमेव । "क्षत्रियस्तनयः पाण्डोरहं पार्थो धनञ्जयः । स्थितः प्रास्तस्य दायादैर्भ्रातुर्ज्येष्ठस्य शासने ॥" (स० ११ श्लो० ४५) "आसक्ता धूरियं रूढा जननी दूरगा च मे । तिरस्करोति स्वातन्त्र्यं ज्यायांश्चाचारवान्नृपः ॥" (स० ११ श्लो० ७७)

१. 'नि' ग. पाठः.

"स्ववंशस्यावदातस्य शशाङ्कस्येव लाञ्छनम् । कृच्छ्रेषु व्यर्थया यत्र भूयते भर्तुराज्ञया ॥" (स० ११ श्लो० ७५) इत्यादिश्लोकैर्मध्ये च तद् व्यज्यते । "आस्तिक्यशुद्धमवतः प्रियधर्म ! धर्मं धर्मात्मजस्य विहितागसि शत्रुवर्गे । सम्प्राप्नुयां विजयमीश ! यया समृद्ध्या तां लोकनाथ! विभुतां वितराहवेषु ॥" (स० १८ श्लो० ४३) इत्यन्ते च विजयसाधनविभुतानिमित्तस्य धनञ्जयपाशुपतास्त्रलाभस्य धर्मात्मजधर्मशेषत्वेन प्रतीतेः । "लभ्या धरित्री तव विक्रमेण ज्यायांश्च वीर्यास्त्रबलैर्विपक्षः । अतः प्रकर्षाय विधिर्विधेयः प्रकर्षतन्त्रा हि रणे जयश्रीः ॥" (स०३ श्लो०१७) इति मन्त्रनिर्णयकरणे द्वैपायनवाक्ये पाशुपतास्त्रलाभ एव मन्त्रफलत्वेनोपक्षिप्तः । स एव निर्व्यूढः । प्रकर्षशब्देन पाशुपतास्त्रलाभ एव विवक्षित इत्युपक्रमोपसंहारयोरेकरूपमेव प्रतिपाद्यं प्रयोजनम् । साम्राज्यकारणे पाशुपतास्त्रे युधिष्ठिरानुजेन धनञ्जयेन प्राप्ते प्राप्तमेव युधिष्ठिरेण साम्राज्यं, न दुर्लभमिति द्योतयितुमितिवृत्तं पाशुपतास्त्रलाभावधि कृतं, न साम्राज्यलाभावधि । किरातार्जुनीयमितीयं संज्ञा केवला युधिष्ठिरस्य नायकत्वं निरोद्धुं न शक्नुयात् । विराटपर्वादिसंज्ञा भारतादिषु पाण्डवानां शेषित्वं न विघ्नन्ति । ननु तत्र ग्रन्थैकदेशानां ताः संज्ञाः । इयं तु किरातार्जुनीयमिति ग्रन्थसमुदायस्यैव संज्ञा । 'अधिकृत्य कृते ग्रन्थे' (४. ३. ८७) इति छप्रत्ययः । तस्मादर्जुनस्य शेषित्वमिति चेत् । नैतदेवम् । भारतमित्येव कृत्स्नस्य भारतस्य संज्ञा । तथापि युधिष्ठिरचरितमेव तत्र प्राधान्येन प्रतिपाद्यते । स्वर्गारोहणे तस्यैव शेषित्वोपसंहारात् । तद्वदत्रापि स्यात् । ननु युधिष्ठिरश्चेदस्मिन् काव्ये शेषितया प्रतिपाद्यते, संज्ञया यदर्जुनस्य प्राधान्यं गम्यते, तत्र किं निमित्तम् । उच्यते । महाकवेर्भारवेरयमभिप्रायः — 'युधिष्ठिरो धर्ममयो महाद्रुम' इत्यत्र श्लोके युधिष्ठिरस्य धर्मवृक्षत्वं रूपितं, स्कन्धादित्वं चार्जुनादीनाम् । तत्रार्जुनस्य भीमादिवत् तदङ्गत्वेऽपि कैटभारिरूपस्य भूभारभूतप्रभूतवैभवभुवनत्रयवित्रासनासुरसंहतिसंहर्तृतया साम्राज्यमुद्रितविमलकुरुकुलसन्तानकर्तृतया च तस्य चरितं प्राधान्येन पृथक् प्रतिपादनीयमिति महाभारततात्पर्यपर्यालोचने प्रतीयते । परमास्त्रप्रभावश्चार्जुनस्य भूभारहरणे साम्राज्यप्राप्तौ च परमं कारणम् । परमेश्वरप्रसादातिशयलभ्यश्च तस्य परमास्त्रप्रभावातिशयः । स्वधर्माराधनाधीनश्च परमेश्वरप्र-

१ 'स' इति मुद्रितपुस्तकपाठः

सादः । प्रसभमभियोक्तरि शौर्योपस्कृतमनौपाधिकमाहवकर्म क्षत्रियाणां स्वधर्मः । बलवत्तरे प्रतिकूलेऽभियोक्तरि शूराणां शौर्यमभिव्यज्यत इति गाण्डीविनः पिनाकिनः समाराधनाय प्रयत्नयज्ञः कथनीय इत्येतदतिगहनं द्वैपायनाम्नायहृदयं द्योतयितुं दयितासम्मितत्वेन परमपुरुषार्थोपदेशपरं किरातार्जुनीयमिदं महाकाव्यमाचार्यश्चकार । ज्यायस्तया साम्राज्यफलस्वाम्येन युधिष्ठिरस्यात्र नायकत्वम् । अर्जुनस्य तत्साम्राज्यसंपादने कर्तृत्वम् । भीमादीनां तु तत्सहायत्वमिति अत्र नायकनिर्णयः । 'अजाद्यदन्तम्' (२. २. ३३) 'अभ्यर्हितं पूर्वमि'ति वाक्यन्यायबलात् परनिपातयोग्यस्यापि किरातशब्दस्य पूर्वनिपातेन किरात एव पूर्वमाहवायार्जुनमाहूतवान् नार्जुनः किरातमिति स्वधर्मभङ्गभयेनैव तपस्यन्नर्जुनो विग्रहमाद्रियत न हिंस्रतयेति तस्य स्वधर्मस्थितिः, किरातरूपस्य पिनाकिनः किरातत्वमकिञ्चित्करमेव सर्वाभिभाविना स्वमहिम्नैव धूर्जटिर्धनञ्जयेनायुध्यतेति तस्यार्जुनस्य प्रतापसामर्थ्यातिशयश्च प्रतीयते । किरातशब्दोऽत्र न वनेचरशब्दमात्रविषयः, किन्तु किरातरूपोपलक्षिते पुरशासने पर्यवस्यतीति अत्र किरातार्जुनीयमिति संज्ञा युक्तैव । तस्मादस्मिन् महाकाव्ये न कश्चिद् दोष आशङ्कनीयः । वीररसोऽस्मिन् प्राधान्येन ध्वन्यते । शृङ्गाराद्भुतशान्तास्तु तमेव पुष्णन्ति । त्रिसर्ग्यां तावदारम्भकार्यावस्थामुद्रितो मुखसन्धिः प्रतिपाद्यते, पुनरर्धाधिकायां द्विसर्ग्यां यत्नान्वितः प्रतिमुखसन्धिः, पुनरर्धाधिकायां पञ्चसर्ग्यां प्राप्त्याशागर्भितो गर्भसन्धिः, पुनः षट्सर्ग्यां नियताप्तिमिश्रोऽवमर्शसन्धिः, चरमे तु सर्गे फलागमसंबन्धो निर्वहणसन्धिरिति सन्धीनां विभागोऽस्मिन् मतिमद्भिरालोचनीयः ॥

श्रियः कुरूणामधिपस्य पालनीं
प्रजासु वृत्तिं यमयुङ्क्त वेदितुम् ।
स वर्णिलिङ्गी विदितः समाययौ
युधिष्ठिरं द्वैतवने वनेचरः ॥ १ ॥

**श्रियः कुरूणामित्यादि ।** स वनेचरः द्वैतवने युधिष्ठिरं समाययौ, कुरूणामधिपस्य प्रजासु वृत्तिं श्रियः पालनीं वेदितुं यमयुङ्क्त । युधिष्ठिर

१. 'मनुपाधिकमनौ' ख. पाठः.

इत्यर्थात् सिध्यति । यथा पूर्ववाक्यगतः शब्दः स्वान्वयोचितशब्दान्तरान्वयेन निराकाङ्क्षोऽपि साकाङ्क्षेणोत्तरवाक्यगतेन शब्देन तदन्वयोचितविभक्त्यादियुक्तः पुनः संबध्यते, तथोत्तरवाक्यगतोऽपि पूर्ववाक्यगतेन संबन्धहेतोः सान्निध्यादेरविशेषादित्युत्तरवाक्यगतो युधिष्ठिरशब्दः समाययावित्याख्यातेन कर्मतया संबध्य निराकाङ्क्षोऽपि साकाङ्क्षेणायुङ्क्तेत्याख्यातेन विभक्तिविपरिणामेन कर्तृतया पुनः संबध्यते । अथवा पूर्ववाक्यगत एव युधिष्ठिरशब्दः । उत्तरवाक्यगतमेवायुङ्क्तेत्याख्यातम् । प्रतिपत्तिपौर्वापर्याधीनं हि वाक्ये पौर्वापर्यं, न पाठक्रममात्रकृतम् । प्रतिपत्तिक्रमस्त्वन्वयक्रमाधीनः । स वनेचरः युधिष्ठिरं समाययावित्यन्वयः पूर्वं प्रतीयते, युज्यते च सः । वनेचरः कीदृश इत्याकाङ्क्षायां तदाकाङ्क्षापूरणाय पश्चादयुङ्क्तेत्यादीनां पदानामन्वयः । सर्वथा युधिष्ठिरशब्दः समाययावित्याख्यातेन कर्मतया संबध्य निराकाङ्क्षोऽपि साकाङ्क्षेणायुङ्क्तेत्याख्यातेन विभक्तिविपरिणामेन कर्तृतयापि पुनरन्वेतुमर्हत्येव । एवं सति नाध्याहारदोषः । पठितेभ्यः शब्देभ्योऽधिकस्यान्यस्याहरणमध्याहारः । युधिष्ठिरशब्दस्तु पठित एव एकस्यां क्रियायां कर्मतयान्वितः पुनः साकाङ्क्षायामन्यस्यां क्रियायां कर्तृतयान्वयायानुषञ्जित इत्यनुषङ्ग एवायं, नाध्याहारः । अयुङ्क्त न्ययुङ्क्तेत्यर्थः । उपसर्गसंसर्गेण योऽर्थविशेषो धातोः प्रतीयते, निरुपसर्गः सोपसर्गो वा धातुरेव तस्य वाचकः, नोपसर्गः । उपसर्गस्तु द्योतकः । तथाचोक्तं—"सन्तमेव चिरमप्रकृतत्वादप्रकाशितमदिद्युतदङ्गे । विभ्रमं मधुमदो दयितानां धातुलीनमुपसर्ग इवार्थम् ॥" (माघ० स० १०. श्लो० १५) इति । किञ्च प्रेषणरूपोऽर्थः क्रियैव । क्रियावचना धातवः, अनेकार्था धातव इति च वदन्त्याचार्याः । तस्माद् युजिरेव नियोगशब्दवाच्यस्यार्थस्याभिधाने समर्थो नेरुपसर्गस्य प्रयोगं नापेक्षत इति सूक्ष्मं सिद्धान्तं स्थूलदृशामभिव्यङ्क्तुमयुङ्क्तेत्युक्तं, न न्ययुङ्क्तेत्यादि । 'प्रजासु वृत्तिं कलयन् न्ययुङ्क्त यं', 'प्रजासु वृत्तिं यमवैतुमादिशत्' इति च सुकरः सन्दर्भः । युजेः स्वरितेत्त्वात् कर्त्रभिप्राये क्रियाफल एवात्मनेपदमित्यात्मनेपदेन नियोगफलं जिज्ञासितज्ञानं युधिष्ठिरसम्बन्धीति ज्ञाप्यते । कुरूणामधिपस्येति । प्रकृष्टतरपुण्यकर्माभिजन्मनः कुरोरादिराजस्य गोत्रभूतापत्यानां राज्ञामधिपस्य पालकस्य प्रधानस्य पत्युरित्यर्थः । कुरुशब्देन स्वाभिधेयसमवेता आभिजात्यादयो गुणा द्योत्यन्त इत्यधिपशब्देन तेषां गुणानां प्रकर्षो द्योत्यते । कुरूणामित्यनेनैव कुरुराज्यस्येति

चार्थो विवक्षितः । प्रजाशब्देन मेदिनीमण्डलान्तर्वर्तिनः प्रवाहरूपेण जायमानाः कुमारतरुणपरिणताः पृथग्विधाः प्राणिनो विवक्ष्यन्ते । प्रजाशब्दोऽपत्यार्थेऽपि वर्तत इत्यनुस्वानशक्त्या अपत्यार्थं द्योतयन् प्रजानामपत्यवत् पालनीयतां द्योतयति । वृत्तिशब्दो रक्षणभरणविनयाधानमाननकरग्रहदण्डप्रयोगादौ व्यापारे वर्तते । प्रजास्वित्यधिकरणे सप्तमी । अधिकरणविशेष एव विषयः । प्रजाविषयां वृत्तिमित्यर्थः । श्रीशब्देन साम्राज्यसमृद्धिरिह विवक्ष्यते । श्रिय इत्येकवचनेन साम्राज्यसमृद्धेरेकसम्बन्धित्वं समग्रत्वं च द्योत्यते । पालनीमिति । श्रियः पालने साधकतमां प्रकृष्टोपकारिकामित्यर्थः । प्रजासु वृत्तिं कुरूणामधिपस्य श्रियः पालनीं वेदितुमिति चान्वयोऽत्र विवक्षित एव । तदा प्रजास्विति सप्तमी प्रसिद्धेऽधिकरणे वर्तते । प्रजाधिकरणां प्रजासम्बन्धिनीं प्रजानां वृत्तिमित्यर्थः । प्रजासु राज्ञः सम्यग्वर्तनं प्रजानां राज्ञि सम्यग्वर्तनेन निश्चलं भवतीति द्विविधोऽन्वयः कथितः । नन्वत्र कुर्वधिपशब्दो धृतराष्ट्रविषयः सुयोधनविषयो वा विवक्षितः । न तावद् धृतराष्ट्रविषयो युक्तः । तस्य जात्यन्धतया सुताधीनतया च प्रजाविषयाया वृत्तेरसम्भवात् । न सुयोधनविषयः । तस्य शकुनिभागिनेयस्य कुर्वधिपत्वासम्भवात् । किञ्च युधिष्ठिरः सुयोधनविषयं शब्दं प्रयोक्तुकामः सुयोधनधार्तराष्ट्रशकुनिभागिनेयादिषु शब्देष्वन्यतममेव प्रायुङ्क्त, न कौरवशब्दमपि, कुतः कुर्वधिपशब्दमिति कविबुद्धौ युधिष्ठिरबुद्धौ च सुयोधनस्य कुरुराजत्वप्रतिभानमनुचितम् । तस्मात् कुरुणामधिपस्येत्यनेन किमत्र विवक्षितमिति चेत् । उच्यते । द्यूतजितो द्यूतच्छद्मना कृतमात्मनः पराजयमपराजयं मन्यमानो मनस्वी महामतिर्युधिष्ठिरो मलिम्लुचोचितच्छलोपजायमानेन पौरजानपदापवादेन विध्यमानस्य विदुरभीष्मादिधिक्कारविषयस्य पौरजानपदानात्मनोऽननुकूलानालोक्य कुरुवंशोचितविशिष्टगुणसम्पादनसहायेन नयेनैव कुरुमण्डलमिव महीमण्डलं जेतुं शक्यं नान्यथेति निरूप्य प्रयत्नेन वंशोचितान् गुणान् सम्पाद्य कुरूणामाधिपत्यं प्राप्य प्रजापालनेन सभूपालं भूमण्डलमात्मसात्करिष्यामीति सुयोधनस्य व्यवसायमालोचयन् तदालोचनं द्योतयितुं कुरूणामधिपस्येत्युक्तवान्, न सुयोधनस्येत्यादि । यद्यपि प्रजाविषयायाः सुयोधनस्य वृत्तेरेव वेद्यत्वं साक्षादुक्तं, तथापि किं कुरवः पालनेनैव सुयोधनस्य वशे स्थिताः न शासनेन, किं तस्यैकस्यैतदाधि-

पत्यं न कर्णशकुनिदुःशासनादिसाधारणं, किमसौ प्रजासु सम्यग्वर्तते प्रजा वा किमस्मिन् सम्यग्वर्तन्ते इत्यादीनां बहूनां वस्तूनां वेद्यत्वं कुरूणामधिपस्ये-त्यनेनैव द्योत्यते। अज्ञातत्वजिज्ञासितत्वे वेद्यत्वं प्रयोजयतः। प्रजाविषया तस्य वृत्तिरिव यथोदितान्येतानि वस्तून्यपि युधिष्ठिरेणाज्ञातानि तदानीं जिज्ञासितानि चेति तेषामपि वेद्यत्वमुचितमेव। एतदुक्तं भवति — स सुयोधनो विदुरभीष्मसौमदत्तिविकर्णादीन् कुरून् प्रकृतिवर्गं कुरुराज्यं च कुरुवंशोचितै-र्गुणैरुपायैः कर्मभिश्च किमधितिष्ठति, स्वाधीनप्रकृतिमण्डलस्तदनन्तरं मेदिनी-मण्डलवर्तिनीषु प्रजासु स्वसाम्राज्यसमृद्धिरक्षणानुगणं किं वर्तते, प्रजा वा तस्मिंस्तत्साम्राज्यसमृद्धिरक्षणानुगुणं किं वर्तन्त इत्यादि वेदितुं युधिष्ठिरो यं न्ययुङ्क्तेत्यत्रैव युधिष्ठिरशब्दो यद्यपि प्रयोक्तुमुचितः कर्त्रपेक्षित्वात् क्रि-यायाः, उत्तरक्रियायाः कर्मान्वयायत्तामिति तच्छब्दप्रयोग एव न्याय्यः, तथा-पि वने तपोधनसंसर्गेऽपि समयसमापनानन्तरं कृत्ये स्वराज्यलाभनिमित्ते युद्धे स्थिरा तस्य मतिः, न नगरे परिभवसमय एवेति द्योतयितुम् उपरि युधिष्ठि-रशब्दः प्रयुक्तः पूर्वत्रानुषक्तः। समाययौ सम्यगाजगाम। आगमनस्य सम्यक्त्वे हेतुमाह — विदित इति। विदितः विदितवान् अवगतवान्। परिस्फुटपरि-समाप्तपर्याप्तावगतिरित्यर्थः। विदित इत्यत्र क्तप्रत्ययेन वेदनस्य परिसमाप्ति-र्द्योत्यते। आगमनस्य सम्यक्त्वकथनेन परिस्फुटता पर्याप्तिश्च तस्य प्रती-यते। ज्ञातुं गतस्य परिस्फुटपर्याप्तज्ञानस्यैवावगमनं समीचीनं, नान्यस्येति विदित इत्यत्र किञ्चित् कर्म नोपात्तम्। तेन महाराजनियोगकरणैकतत्परस्य तस्ये-प्सितद्वेष्योपेक्षाविषयेषु विदिक्रियाकर्मसु बुद्धिसाम्यं गम्यते। तेन सर्वेषु वेद्येषु यथार्थग्राहिणी तस्य मतिः, न रागद्वेषकृतभ्रमान्विता उपेक्षाहेतुकानव-धाना वेति प्रतीयते। ननु प्राकृतजनैर्दुष्प्रवेशा राजादिभूमयः। तेन विदितः समाययाविति कथमुच्यते इत्यत्राह — वर्णिलिङ्गीति। वर्णिनो ब्रह्मचारिणो लिङ्गं चिह्नं यस्यास्ति, स वर्णिलिङ्गी। वर्णिनो हि सर्वत्र बालत्वादशङ्कनीयाः द्विजत्वादप्रतिषेध्याश्च। वर्णित्वभावनया प्रणिधिविधेयेषु तस्योप्रणिधानेशङ्का-निरासार्थं वर्णिलिङ्गीत्युक्तं, न वर्णीत्येव। वर्णिनो लिङ्गं, कृष्णाजिनदण्ड-

१. 'नां वे' क. ख. पाठः. २. 'प्तज्ञानस्यै' क. ख. घ. पाठः. ३. 'ष' ग. पाठः. ४. 'स्व', ५. 'वा' ख. पाठः.

मेखलादि बाह्यमेवासावग्रहीद्, न तद्भावनाम्। मनसा तु स्वकृत्य एव स्थित इत्यर्थः। वर्णिनो राजादिगृहप्रवेशसंभवेऽपि कथमसावेक एव भूयसां चरितानि चारवृत्त्या प्रतीयादित्यत आह — द्वैतवन इति। द्यूतजितो युधिष्ठिरोऽर्धाधिकं वर्षं काम्यके व्यतीत्य द्वैतवने न्यवसदिति भारते प्रतीयते। वनगमनारम्भ एव युधिष्ठिरस्य सपत्नविषयं प्रति चारप्रेषणं युक्तम्। पर्याप्तेनैतावता कालेनैकोऽपि निपुणमतिः प्रणिधिः भूयसां भूयांसि चरितान्यपि वेदितुं शक्नुयादित्येतद् द्वैतवन इत्यनेनैव द्योत्यते। युधिष्ठिरस्य कुरुराजस्यैव चरो यदि कुरुविषये चरवृत्त्या वर्तेत, गूढाकृतिमपि तं द्वित्रैर्मासैरवश्यं तद्विषयवासिनः प्रत्यभिजानीयुः, ततस्तस्य स्वकृत्यं निर्वोढुं न शक्यं स्यादित्यत आह — वनेचर इति। वनेऽप्यसौ चिरमेकत्र नोषितवान्, समन्ततश्चरणशील एव। कुतस्तं पौरजानपदादयो जना युधिष्ठिरसंबन्धित्वेनान्यसंबन्धित्वेन वा प्रतीयुरिति भावः। किञ्च, अनेनैव श्लोकेन अनुस्वनितेन परमप्रयोजनप्रयोजकं प्रतिपाद्यवस्तु च शब्दार्थशक्त्या द्योत्यते। कुरूणामधिपस्य ज्यायसो धर्मराजस्य प्रजासु वृत्तिं सम्राड्विधेयां प्रजाविषयां वृत्तिं भरणरक्षणादिव्यापारं श्रियः पालनीं साम्राज्यसमृद्ध्यनुगुणां शुभानुबन्धिनीं वेदितुं लब्धुं यमयुङ्क्त, समाधिदृक्षा अपश्यत्, धनञ्जय इत्यर्थात् सिध्यति। वर्णिलिङ्गी ब्रह्मचारिचिह्नोपलक्षितः पाशुपतास्त्राधिष्ठायी। पाशुपतास्त्राधिदेवतारूपो रुद्रो ब्रह्मचारिमूर्तिर्भारते कीर्त्यते। विदितः समाधिदृक्षा स्वरूपेण दृष्टः वनेचरः किराताकृतितिरोहितस्वरूपः द्वैतवने द्वितया द्वित्वेन कृतस्य द्वैतस्य विरोधस्य सम्बन्धिनि कारणे वराहादिमृगगणाकीर्णे वने युधिष्ठिरं युद्धे स्वधर्मे स्थिरं शौर्यैकधनं धनञ्जयं शिवः समाययौ सम्यगभिमुखमनुग्रहीतुमाजगामेति। 'कुरुनादिभ्यो ण्यः' (४. १. १७२) इति विहितस्य तद्राजप्रत्ययस्य 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' (२. ४. ६२) इति लुकि कुरूणामिति रूपं कुरुशब्दस्य क्षत्रियवाचकत्वे। जनपदवाचकत्वे तु 'तस्य निवासः' (४. २. ६९) इति विहितस्य प्रत्ययस्य 'जनपदे लुप्' (४. २. ८१) इति लुप्। 'लुपि युक्तवद्व्यक्तिवचने' (१. २. ५१) इति बहुवचनम्। पालनीमिति। 'करणाधिकरणयोश्च' (३. ३. ११७) इति करणे ल्युट्। 'टिड्ढाणञ्—' (४. १. १५) इत्यादिना ङीप्। विदित इति कर्माविवक्षायाम् अकर्मकस्य विदेः 'गत्यर्थाकर्मक—'(३. ४. ७२) इत्यादिना कर्तरि क्तप्रत्ययः। 'गवियुधिभ्यां स्थिरः'

(८. ३. ९५) इति युधिष्ठिर इत्यत्र[1] सकारस्य संज्ञायां षत्वम्[2]। 'तत्पुरुषे कृति बहुलम्' (६. ३. १४) इति वनेचर इत्यत्र सप्तम्या अलुक्। 'सुपि स्थः (३. २. ४) इत्यत्र सुपीति योगविभागेन अधिपूर्वस्य पातेः कप्रत्ययेनाधिप इति रूपम्। अद्यतना मनुजाः कलिबलविलुप्तधर्मबुद्धयः तनुतरबुद्धिबलगुणोत्साहादिगुणाः। अनद्यतनास्तु युगान्तरजन्मानो युधिष्ठिरादयस्तद्विपरीताः परमेश्वरकल्पा इति द्योतयितुमयं महाकविरनद्यतनभूतकालान्वितवस्तुविषयं लङं प्रायुङ्क्त — अयुङ्क्तेति। अद्यतनानां मांसचक्षुषां प्रत्यक्षत्वेन यत् संभाव्यते, तत् सर्वमल्पसारं स्वरूपेण प्रतीत्या वा। युधिष्ठिरादीनां तु स्वरूपगुणक्रियादयोऽसमदृशां दृगात्मविषया एव। अतस्तेषां विज्ञानबलशक्त्यैश्वर्यादिप्रकर्षोऽस्मादृशैर्न परिच्छेद्य इति द्योतयितुं भूतकालसंबन्धिपरोक्षवस्तुविषयं लिटं स्मान्वितं लटं च न प्रयुक्तवान् (?)। अस्मिन् प्रबन्धे सर्वत्र स्वोक्तिषु महानुभावतया प्रतिपाद्यमानानां तेषां युधिष्ठिरादीनामद्यतनवदपरोक्षत्वं यदि सम्भाव्येत, ततस्तच्चरितवर्णनमसत्यप्रतिभासतया युधिष्ठिरादिवद् धर्मादिषु वर्तितव्यमित्युपदेशे न पर्यवस्येत्। धर्माद्युपदेशार्थो[3] हि महतः कवेर्व्यापार इत्यलमतिविस्तरेण ॥ १ ॥

ननु 'कृतप्रणामो द्विषतो जिगीषत' इत्याद्यपादरचने वनेचरस्यागमनानन्तरविधेयं व्यापारं वर्णयितुं तृतीयश्लोक एव पर्याप्तः। तस्मात् किमर्थः कृतप्रणामे[6]'त्यादिद्वितीयश्लोक इति चेत्। उच्यते। स वनेचरो निपुणमतिर्निगूढाकृतिः प्रवृत्तिप्रतिभानावधानबलादखिलमपि रिपुवृत्तान्तं काममवगच्छतु। महानुभावस्य महाराजस्याधृष्यताविशेषेण सहसोपनीतसाध्वसं[7]स्तदग्रे तदप्रियानुबन्धिनो रिपुवृत्तान्तस्य कथनारम्भे[8] तु व्यथेत। तस्मादवगतमपि रिपुवृत्तान्तमखिलमस्खलितमविपर्यस्तं वक्तुं न शक्नुयादिति शङ्का द्वितीयश्लोकेन निरस्यते —

> कृतप्रणामस्य महीं महीभुजे
>
> जितां सपत्नेन निवेदयिष्यतः।

---

१. 'ति स' ग. पाठः. २. 'त्र स्थिरस' क. पाठः. ३. 'र्थोऽभिमतः' ४. 'म्बान' ख. पाठः. ५. 'प्रतिपादयि', ६. 'मस्येति द्वि', ७. 'सात्तद', ८. 'म्भे व्य' क. ख. पाठः.

न विव्यथे तस्य मनो नहि प्रियं
प्रवक्तुमिच्छन्ति मृषा हितैषिणः ॥ २ ॥

कृतप्रणामस्येत्यादि। तस्य वनेचरस्य मनो न विव्यथे न भीतं चलितं च। वर्णित्ववासनया नृपतिसन्निधौ[1] स्वव्यापारविपर्ययेण[2] जाता व्यथा किं निषिध्यत इति चेन्नेत्याह — कृतप्रणामस्येति। तर्हि किंनिमित्ता व्यथेत्यत आह — महीं सपत्नेन जितां महीभुजे निवेदयिष्यत इति। महीं महतीं रत्नाकरमेखलां वसुमतीं, न वनं ग्रामं नगरं जनपदं वा। जितां न जिगीषितां जीयमानां वा। सपत्नेन व्ययादीनां समानेन साधारणेन पत्या सहजेनाभ्यन्तरेण शत्रुणा। बाह्येन शत्रुणा प्रकृतयो न श्लिप्यन्तीति तेन जितायाः प्रत्यापत्तिः स्यादेव। सहजस्याभ्यन्तरस्य शत्रोः प्रकृतिसंबन्धः स्वतोऽस्तीति तेन जिता मही पुनर्दुष्प्रापा। पशुना यजेतेत्यादिवत् सपत्नेनेत्यत्रैकवचनमपि विवक्षितम्। बहुभिः सपत्नैर्जिता मही तद्भेदजननद्वारेण पुनरात्मसात्कर्तुं शक्या। एकेन सपत्नेन जिता तु पुनर्दुष्प्रापतरा। महीभुजे महीपालनभोगाधिकृताय राज्ञे, न निःस्पृहाय आचिन्तितोपनतमहीलाभमात्रतुष्टाय पृथग्जनाय वा। निवेदयिष्यतः निकटे स्ववचसैव वेदयितुमुद्युक्तस्य, एवमस्मै ब्रूहीति न सन्देक्ष्यतः। 'स्वाधीनप्रकृतिना सहजेन शत्रुणा तव भूमिर्जितेति' भूमिपतेरभिमुखमप्रियकथनं कथं कुर्यामिति तस्य व्यथा नासीदित्यर्थः। तस्य मनो न विव्यथ इत्युक्तं, न तु स न विव्यथ इति। अनेनैतद् द्योत्यते — अप्रियकथनोद्यमव्यथाविसंस्थुलं मनो विवेकादिना स नास्तंभयत्। अपितु तस्य मन एवोचितज्ञतया न व्यथितमिति व्यथानिषेधेन व्यथानिमित्ता तदप्रियकथनानिच्छा निषिद्धैव। तस्य मन इत्यनेनैवानुस्वनितेन तथा तद्व्यथानुदयहेतुर्द्योत्यते। तस्य रिपुवृत्तान्तं प्रियमप्रियं वा यथावदवगम्य तथैव वदेति नियुक्तस्य चरस्येत्यस्यार्थस्यावगतेः[3]। ननु पृथग्जना अपि ह्यप्रियश्रवणं न सहन्ते। किं पुनर्महीपतयः। तस्मादनुजीविनः प्रभुसन्निधौ प्रियमेव वक्तुमर्हन्तीति। नेत्याह— नहि प्रियमित्यादिना। हितैषिणः मृषा प्रियं[4] प्रवक्तुं नेच्छन्ति हि। मृषेति प्रियविशेषणम्। असत्यमपरमार्थमित्यर्थः। प्रियं क्षणमा-

---

१. 'पस' क. ख. पाठः. २. 'स्वाचार्यवि ग. पाठः. ३. 'त्यर्थ' क. ग. पाठः. ४. यं तत्क्षण' ख. पाठः.

त्रप्रीतिप्रतारितहृदयम्। प्रवक्तुं प्रसादनाय वक्तुम्। ये नाम स्वार्थैकपराः कितवाः प्रियमात्रकथनादिना प्रभुसुहृदादीन् विलोभयन्तो भ्रमरवदितस्ततः स्वार्थमार्जयन्त्येव, ते प्रभुसुहृदादिसन्निधौ वास्तवमवास्तवं वा प्रियमेवाभिदध्युः। ये पुनरवञ्चकाः स्वभर्तृसुहृदादीनां हितं तदात्वायत्यनुगुणमेव[2] सततमिच्छन्ति, ते स्वविश्वस्तानां स्वभर्तृसुहृदादीनां समक्षं मृषाभूतं प्रियं प्रवक्तुं नेच्छन्त्यपि, कुतो ब्रुवन्तीति कटुकौषधवत् क्षणमात्रमप्रीतिकरस्याप्रियस्य हितस्योक्तौ न व्यथन्ते, हितमेव वक्तुमिच्छन्ति वदन्ति चेत्यभिप्रायः ॥ २ ॥

द्विषां विघाताय विधातुमिच्छतो
रहस्यनुज्ञामधिगम्य भूभृतः।
स सौष्ठवौदार्यविशेषशालिनीं
विनिश्चितार्थामिति वाचमाददे ॥ ३ ॥

**द्विषां विघातायेत्यादि**। स रहसि भूभृतः अनुज्ञामधिगम्य इति वाचमाददे। स इति हितमेव वक्तु[3]मुद्युक्तवान् अप्रमत्तो देशकालविशेषज्ञः। रहसि विविक्ते। 'रात्रेः प्रथमे यामे चराणां दर्शनं, चरमे तु कृत्यविशेषानुष्ठानाय तेषां विसर्जनमि'ति नीतिशास्त्रे चरदर्शनकालस्य नियमितत्वाद् रात्रेः[4] प्रथमे याम इति च सिध्यति। भूभृत इति भूमण्डलवर्तिनो मर्त्यादिप्राणिसमूहस्य विनयपालने एव न केवलं भरणमपि कुर्वतो महाराजस्येत्यर्थः। कीदृशाद् भूभृतः। द्विषां विघाताय विधातुमिच्छतः। द्विषां दुर्योधनादीनां विघाताय कर्शनादिभेदेन विविधाय हननाय। द्विषो विविधं हन्तुमित्यर्थः। विधातुं, करणेतिकर्तव्यतासहितं नियतफलं विधानम्। इच्छतः इच्छापूर्वं तदुपायं विमृशत इत्यर्थः। दुर्योधनादिवधोपायविमर्शनं स्वधर्मभूरक्षणेच्छाकृतं, न द्वेषकृतमिति भूभृच्छब्देन द्योत्यते। द्विषद्वधक्षितिरक्षणोपायविमर्शनसमये स्वावसर[5] एव चरो युधिष्ठिरं समाययौ, न मुनिजनसंवाससुलभशास्त्रार्थनिरू-

---

.स्तद', २. 'मर्थमेव', ३. 'वक्तुमव्यग्रमु' क. पाठः. ४. 'त्राविद्यर्थः। विधातुं' क. ग. घ. पाठः. ५. 'रसमय ए' ख. पाठः.

पणावसर इति च सविशेषणेन भूभृच्छब्देनैव द्योत्यते। अनुज्ञामधिगम्येति। प्रभुगुर्वादिकर्तृका चिकीर्षितस्य कर्मणोऽनुमतिरनुज्ञा। अनुज्ञाशब्देनानुज्ञावबोधकं वचनमिह विवक्ष्यते। अधिगम्येति सादरावधानं गत्वा, गृहीत्वेत्यर्थः। मूर्तस्य प्रसादधनस्येवानुज्ञावचनस्य विस्पष्टतां स्पृहणीयतां च द्योतयितुम् अधिगम्येत्युक्तं, नोपाकर्ण्येति। यद्यपि प्रतिवाक्यं बहवोऽर्थाः प्रतिपाद्यन्ते, तथापि वाक्यसन्दर्भेण शेषितया एकोऽर्थः प्रतिपाद्यत इति द्योतयितुं वाचमित्येकवचनम्। इतिशब्दो वाग्विशेषणम्। अनेन वक्ष्यमाणेन प्रकारेण विशिष्टामित्यर्थः। श्रवणेनैवास्या वाचो गुणः प्रतीयते, न तु मदुक्तप्रत्ययेनेति द्योतयितुं कविना इतिशब्दः प्रयुक्तः। निरस्ततताद्युच्चारणदोषरहितं पदसन्दर्भचारुत्वं सौष्ठवम्, औदार्यमर्थगौरवं, तयोर्विशेषः प्रकर्षः तेन शालिनीं श्लाघनशीलाम्। अन्यवाग्दुर्लभशब्दार्थगुणातिशयामित्यर्थः। विविक्ता असंकीर्णा निश्चिता निर्णीताः अर्थाः अभिधेयाः प्रयोजनानि च यस्याः सा विनिश्चितार्था, ताम्। सन्दिग्धार्थतादिनेयार्थतादिदोषरहितामित्यर्थः। आदद इति। मूर्तद्रव्यविषयमादानममूर्ताया वाचो न संभवतीत्यादानेन वचनं लक्ष्यते वाचः स्फुटतरत्वमयत्नोच्चार्यत्वं च द्योतयितुम्। यथा ग्रथितं रत्नमालाद्युपायनं मूर्ततया स्फुटमस्खलितमविपर्यस्तं हस्तेनादाय भूपतये समर्पयति तथा पूर्वमेव कल्पितां प्रतिभानावधानबलादस्खलितामविपर्यस्तां प्रशस्तोपायनवन्नृपतिप्रीतिप्रदायिनीं वाचं सुकरताल्वादिस्थानसंयोगवायुप्रयत्नेनायत्नेनोच्चार्य[2] भूपतये न्यवेदयदित्यमुमर्थं द्योतयितुम् आदद इत्युक्तं, नोदचारयदित्यादि। द्विषद्वधोपायनिरूपणे सति विविक्ते भूभृतं प्राप्य कृतसमुचितनिजाचारः प्रसन्नेन तेन लब्धामनुज्ञां[3] संगृह्य स्वविदितं वेद्यं तस्मै यथावन्न्यवेदयदित्यनेन तस्य चरस्योचितज्ञत्वमिङ्गितज्ञत्वं हितैषित्वं च[4] प्रतीयते॥ २॥

स्वरिपुवृत्तान्तं वक्तुकामः प्रणिधिरुचितव्यवहारज्ञो निकृत्याद्यसंहितादिदोषरहितो निरं[5]तताद्विकृतममाधुर्यमनिष्टकथनाविनाभूतं[7] पारुष्यं ग्राम्य-

---

१. 'टत्व', २. 'लस्त्वय', ३. 'दत्ताम' क. ग. घ. पाठः. ४. 'च तेन यस्य वचने प्रध्यो निपुणधियः स्निग्धानेव सर्वत्र कृत्येषु युधिष्ठिरो न्ययुङ्क्तेति नृपतेः पुरुषविशेषज्ञत्वं च प्र', ५. 'द्वारादि', ६. 'स्तारादि', ७. 'तं पौरु' ख. पाठः.

तादिकृतमचातुर्यं च स्ववचसि संभाव्यमानमालोच्यानुजीवितया पूर्वमेव भूपतिं प्रसादयति —

क्रियासु युक्तैर्नृप! चारचक्षुषो
न वञ्चनीयाः प्रभवोऽनुजीविभिः।
अतोऽर्हसि क्षन्तुमसाधु साधु वा
हितं मनोहारि च दुर्लभं वचः॥ ४॥

क्रियासु युक्तैरित्यादि। नैसर्गिकक्रोधलोभाद्याक्रान्तस्य नैकृतिकस्य सुयोधनस्य धर्मात्मजेन सह विरोधे सति सद्गुणानुरञ्जिताः प्रजा वशीकर्तुं स्वार्थसाधने गुणार्जने प्रयत्नम् अजातशत्रुणा सुविहितविनयलालनभरणानां प्रजानां प्रागिव तदानीं तत्र युधिष्ठिरे गौरवानुरागाद्यातिशयं च दृष्ट्वा विस्मयमानः पुनरव्याहतममुष्य साम्राज्यमवश्यं भविष्यतीति निश्चित्य हृष्यन्नसौ राजानमभिमुखयति — नृपेति। नृशब्दोऽत्र मनुष्यजातौ वर्तते। पातिरेव गृह्यते न पितिः। नृप! नृणां मनुष्याणामवैषम्येन रक्षक! मनुष्यलोकपालेत्यर्थः। एवमीदृशार्थद्योतकेन नृपेत्यामन्त्रणेन महाराजस्य साम्राज्यप्रत्यापत्तिं द्योतयन् अविश्वास्यतायाः प्रयोजनविघटनेहेतुत्वादमर्षणीयतरोऽत्र कश्चन दोषो नास्तीति प्रत्याययितुं प्रमाणमुपन्यस्यति — अनुजीविभिः प्रभवो न वञ्चनीया इति। प्रभूननुसृत्य निषेव्य तत्प्रसादलभ्येन धनादिना जीवद्भिः कोशदण्डाद्यधिष्ठायिनो निग्रहानुग्रहशक्ताः प्रभवः न वञ्चनीयाः वञ्चयितुं न योग्याः। अनुजीविमात्रस्य प्रभुमात्रे वञ्चनं न योग्यम्। न केषुचित् प्रभुषु केषाञ्चिदनुजीविनां वञ्चनमनुचितमिति भावः। स्वक्रियाफलप्रतीतप्रभुप्रसादलभ्यस्वार्थसिद्धयः प्रभुभिः क्रियासु नियुक्ताः क्रियासु वञ्चनं केचित् कदाचिदपि न कुर्युरिति द्योतयति — क्रियासु युक्तैरिति। चारचक्षुर्दोषे प्रभवोऽन्धसमाः स्युरिति, चारैर्विशेषतस्ते न वञ्चनीया इति द्योतयितुं चारचक्षुष इत्युक्तम्। अनेनानुजीविभिः प्रभूणां वञ्चनस्याशक्यता च द्योत्यते। अनुजीविनां विशुद्ध्यादिगुणान् निकृत्यादिदोषांश्च पृथक्पृथङ्नियुक्तैश्चारैश्चक्षुर्भिरिव पश्यन्त इत्यर्थः। प्रभूणां वञ्चनमनुचितमशक्यं चेत्यनुजीविमात्रेण ज्ञायते। ततो मयाप्येतावद्विदितमिति मद्वचने वञ्चनं न शङ्क-

१. 'युक्तम्' क. ग. घ. पाठः. २. 'क' ख. पाठः.

नीयमित्यभिप्रायः । अतः क्षन्तुमर्हसीति । इदंशब्देन प्रकृते वञ्चनाभावः परामृश्यते । अत इति प्रधानस्य वञ्चनदोषस्याभावादित्यर्थः । क्षन्तुमर्हसि मर्षितुं योग्योऽसि । अमाधुर्यपारुष्यादिरूपं दोषमिति शेषः । वाक्यशेषसामर्थ्येनैव तादृशस्य दोषस्य स्फुटप्रतीतेस्तद्वाची शब्दो न प्रयुक्तः । प्रभुमनोनुवर्तिनामनुजीविनां वचसि माधुर्यादिकृतं साधुत्वमस्त्येव । ततः किं प्रार्थ्यत इत्यत आह — असाधु साधु वेति । वच इति शेषः । व्यवहारौचित्यमजानतां मादृशां वनेचराणां वचनेष्वसाधुत्वमेवौत्सर्गिकं घुणाक्षरवद्यादृच्छिकं साधुत्वमिति भावः । माधुर्यादिकृतं वचनसौन्दर्यं सर्वेषां हृदयमाह्लादयति, असौन्दर्यं तु प्रत्युतैवेति । प्रतिभानवता त्वया प्रयत्नातिशये सति मधुरं वचो विरचयितुं शक्यमित्यत[1] आह — हितमित्यादि । हितं तदात्वायत्यनुगुणार्थतन्निमित्तादिबोधकं[2] माधुर्यादिगुणयुक्तम् । मनोहारि अनर्थानुबन्धरहितमर्थानुबन्धिप्रयोजनं तत्प्रत्यायकश्च पदसन्निवेशः महता प्रणिधानेन लभ्यते वचसि-माधुर्यादिगुणग्रामस्तु[3] महीयसेति मादृशैस्तादृशं वचो लब्धुमशक्यमेवेत्यभिप्रायः । क्षणमात्रप्रीतिदात् सौन्दर्यवतो वचनाच्चिरस्थायि परमसुखमूलं हितं वच एव श्रेय इति द्योत्यते हितशब्दस्य प्रथमप्रयोगेणान्वाचयार्थेन चकारेण च ॥ ४ ॥

स्वदोषमर्षणाभ्यर्थनया हितं[4] मनोहारि च दुर्लभं वच इत्युक्त्या च शत्रुविषयादागतेन तेन शत्रुसमृद्ध्यादिरप्रियोऽर्थः कथयितुमध्यवसित इति ध्वनिते तादृशमप्रियमनुजीविभिः प्रभुसन्निधौ वक्तुं नोचितं प्रभुभिश्च तेभ्यः श्रोतुमिति शङ्का स्यात् । तामपनुदति —

> स किं सखा साधु न शास्ति योऽधिपं
> हिताच्च यः संशृणुते स किं प्रभुः ।
> सदानुकूलेषु हि कुर्वते रतिं
> नृपेष्वमात्येषु च सर्वसम्पदः ॥ ५ ॥

---

१. 'त्याह', २. 'कं', ३. 'तिप्रसादा', 'दिभिर' ख. पाठः,

**स किं सखेत्यादि।** स सखा किं, योऽधिपं साधु न शास्ति। अधिपशब्दस्य सामर्थ्येन तदन्वयोचितं तच्छब्दविशेष्यमनुजीवीति पदमाक्षिप्यते। अनुजीविनः प्रभुणा सह नियन्त्रणव्यवहारान्वयिनः सख्यस्यासंभवात् सखिशब्दस्तस्मिन्नर्थे स्खलद्गतिः स्वार्थान्वितं स्नेहविश्वासहितैषित्वादि लक्षयति। तेन तस्य नैसर्गिकत्वं द्योत्यते। किंशब्दः क्षेपे। सः अनुजीवी नैव नैसर्गिकस्नेहादियुक्त इत्यर्थः। योऽधिपं रक्षणाधिकृतं स्वामिनं साधु सम्यङ् न शास्ति इदमेवं कर्तव्यं नैवमिति नोपदिशति, कृत्यस्खलनादावित्यर्थात् सिध्यति। शासनीय एवानुजीवी शासकानामपि प्रभूणां कृत्यस्खलनादावनुशासनमकुर्वन्नपि दुष्यति। रिपुवृत्तान्तं यथावदवगम्य निवेदयेति प्रभुणा नियुक्तस्तदप्रियप्रतिभासभयादब्रुवन् दुष्यतितराम्। चाटुकारतया हितविरोधि प्रियं वदन् दुष्यतितमामित्यभिप्रायः। अप्रियमपि हितमेवानुजीविना वक्तव्यमित्युक्तम्। प्रभुणापि हितमेव श्रोतव्यमित्याह — हितादित्यादिना। यो हिताद् न संश्रृणुते स प्रभुः किम्। अधिप इति वा प्रभुरिति वा यच्छब्दविशेष्यं पदं प्रकरणाद् वाक्यविशेषाद्वा आक्षिप्यते। हितादिति तदात्वायत्यनुगुणवचनकर्मण इत्यर्थः। न संश्रृणुते इति सम्यक् सतात्पर्यावधानं न श्रृणोति श्रवणद्वारेणावगम्य नावधारयतीति तात्पर्यार्थः। हितादिति पञ्चम्या हितस्य वक्तुर्वचनं श्रोतुरुपयोगहेतुरिति द्योत्यते। 'आख्यातोपयोगे' (१. ४. २९) इत्यपादानसंज्ञायाम् 'अपादाने पञ्चमी' (२.३.२८) इति पञ्चमी। श्रवणकर्मणोऽनुक्त्या हितोक्तं वचनं निखिलमादरेण श्रोतव्यं, न किञ्चिदेवेति द्योत्यते। श्रृणोतेः कर्माविवक्षायां 'समो गम्यृच्छि—' (१. ३. २९) इत्यादिसूत्रेणात्मनेपदम्। अत्रापि किंशब्दः क्षेपे। नैव प्रभुरित्यर्थः। हितवादिन एवानुजीविनः स्वामिकृता रक्षा भवतीति द्योतयितुं पूर्वत्राधिपशब्दप्रयोगः, हितश्राविण एव स्वामिनः प्रभुत्वं भवतीति प्रकाशयितुमुत्तरत्र प्रभुशब्दप्रयोगः इत्यर्थभेदोपपत्तेः प्रक्रमभङ्गदोषो न शङ्कनीयः। अनुजीविना हितमेव वक्तव्यं प्रभुणापि तदेव श्रोतव्यमित्यत्र प्राक्सूचितं हेतुं प्रकटयति — सदानुकूलेष्वित्यादिना। सदानुकूलेषु नृपेषु अमात्येषु च सर्वसम्पदः रतिं कुर्वते

---

१. 'ब्दः स्ख', २. 'सनियन्त्रणव्यवहारान्वयिना सहि' क. पाठः. ३. 'वि', ४. 'र्थः। अधि', ५. 'क्षाधि' ख. पाठः. ६. 'श्राव्यं' क. ग. घ. पाठः. ७. 'मदो', ८. 'व प्रोक्त' ख. पाठः.

हि । सदा सततम् । अनुकूलेषु अनुगुणेषु । अन्योन्यस्येत्यर्थात् सिध्यति । हितश्राविषु हितवादिषु हितकारिषु चेत्यर्थः । नृपेष्विति मनुष्यादीनां प्राणिनां रक्षणे कर्तृषु । अमात्येषु तत्र करणेषु । अमा सह स्वामिभिरविनाभावेन वर्तमानाः सचिवादयोऽपरजीविनोऽमात्यशब्देनोच्यन्ते । तेन तेषामन्यस्वामिसंबन्धाभावो द्योत्यते । अमाशब्दाद् 'अव्ययात् त्यप्'(४. २. १०४) इति त्यप्प्रत्ययः । अथवा सचिववचन एवामात्यशब्दो मनोवधानादिभिर्गुणैरनुजीविनो लक्षयति । तेषां दूतचारादीनां राजनीत्यानुगुण्यमप्यमात्यादीनामिवावश्यकं न विहितं तत्तत्क्रियामात्रमिति द्योतयितुम् । मनुष्यमणिहिरण्यहस्तिगवाश्वादयः सर्वशब्देनेह विवक्ष्यन्ते । तेषां सर्वेषां संपदः सर्वसंपदः । अथवा सर्वाः सम्पदः सर्वसम्पदः । स एवार्थः । समास एव विशेषः । रतिं कुर्वत इति, अप्रयत्नलभ्याः प्रियतमेषु कामिन्य इव रमन्ते इत्यर्थः । कर्त्रभिप्राये क्रियाफले विहितं करोतेरात्मनेपदं सम्पत्सम्बन्धिकर्मोपचयरूपं प्रयोजनं सूचयति । अन्वाचयार्थोऽत्र चकारः । तेन नृपाः स्वहितप्रतिकूलानमात्यान् विहायानुकूलानन्यान् विधाय स्वार्थं निर्वर्तयेयुरिति विशेषतोऽमात्यादिभिरनुजीविभिर्नृपहितानुकूलैर्भवितव्यमिति द्योत्यते । 'यस्य च भावेन भावलक्षणम्' (२. ३. ३७) इति सप्तमी । यस्य जात्यादेः प्रातिपदिकार्थस्य भावेन सकर्मिकयाकर्मिकया वा क्रियया भावस्य तादृश्याः क्रियाया लक्षणमङ्कनमवगमनं क्रियते तद्वाचिनः शब्दाच्च सप्तमी भवतीत्यर्थः । तथाचोदाहृतं — पुष्प्यत्सु चूतेषु गतोऽहमित्यादि । अस्तेरप्रयोगेऽपि अनुकूलेषु सत्स्वित्यर्थः सिध्यति । तेन नृपादीनामनुकूलतया भावः सम्पदां रतिक्रियाया लक्षणं भवतीति नृपामात्यशब्दाभ्यां सप्तमी भवति । अथवा अधिकरण एवेयं सप्तमी । नृपाधिकरणाममात्याधिकरणां च रतिं सम्पदः कुर्वत इति । मिथोऽनुकूलानां नृपाणाममात्यानां च संपद्धेतुका रतिर्भवतीत्यभिप्रायः । अयं तु श्लोकः सामान्याभिधायी विशेषपर्यवसाने सत्यन्यमप्यर्थं द्योतयति — कृत्रिमसौहृदः कर्णादिवर्गः सखित्वेनाभिमतः कुरूणामधिपं सुयोधनं सम्यङ् न शास्ति । यस्तु हितैषी विदुरादिवर्गः सम्यगनुशास्ति, तद्वचनं नासौ बहुमन्यते ।

---

१. 'वु अ', २. 'त्यनुगुणम', ३. 'ति । म', ४. 'दं सम्ब', ५. 'र्थे च' ख. पाठः. ६. 'यापि स्वा' क. ग. घ. पाठः. ७. 'या क्रि', ८. 'या रा भ' ख. पाठः. ९. 'याल', १०. 'मु' क. ग. घ. पाठः.

तस्मादस्य प्रभुत्वं नास्ति स्थिरं, यस्मान्नृपेष्वमात्येषु चानुकूलेषु संपदः स्थिरा भवन्तीति। सोऽयमजय्य इति मतिर्मा भूदिति ॥ ५ ॥

अनुजीविभिः प्रभून् प्रत्येवं वर्तितव्यं, तैरपि तान् प्रत्येवमित्युक्ते स्वात्मनि शङ्क्यमानं पण्डितंमानित्वमनुचितं धाष्टर्यदोषं च परिहरति —

**निसर्गदुर्बोधमबोधविक्लवाः**
**क्व भूपतीनां चरितं क्व जन्तवः ।**
**तवानुभावोऽयमवेदि यन्मया**
**निगूढतत्त्वं नयवर्त्म विद्विषाम् ॥ ६ ॥**

**निसर्गदुर्बोधमित्यादि** । निसर्गदुर्बोधं भूपतीनां चरितं क्व । अबोधविक्लवाः जन्तवः क्व । प्रत्यक्षदृश्योऽपि वस्त्राद्यर्थो गूहनसंवेष्टनादिना कृत्रिमेण हेतुना दुर्बोधो भवति । भूपतीनां तु चरितं गूहनादिना विनापि स्वत एव दुर्बोधम् । पुरोहितामात्यसेनापतिदूतचारपौरजानपदादीनाश्रयविषयदेशकालावस्थादिभिर्नैरुपायैरधितिष्ठतां भूपतीनां तथाविधैरेवोपायैः भूपतीनभिराधयतां पुरोहितादीनां च चरितमविषय एव मानुषमनीषायाः । भूपतिचरितमधिकृत्य बृहस्पतिप्रभृतीनामर्थशास्त्रप्रणयनेनापि[1] न दृश्यम् अनुमानमात्रगम्यं तदिति प्रतीयते । अबोधेनाज्ञानेन विक्लवाः मानसादिप्रवृत्तिषु जडाः प्राग्जन्मपुण्यकृतसत्त्वोन्मेषशून्याः । जन्तवो जन्ममात्रसंस्काराः । बुद्ध्यादिपाटवनिमित्तसत्त्वोन्मेषकारिणैहिकेन पुण्येन च शून्या इत्यर्थः । तस्मादस्मादृशैर्वनेचरादिभिः अतिसंकुचितमनोवृत्तिभिः[2] चतुरुदधिपरिधिभूमण्डलावस्थितवर्णाश्रमादिभिन्नमनुष्यजात्यधिष्ठायिनां भूपतीनां चरितमवश्यानुष्ठेयन्याय्यकर्मातिविस्तृतं[3] लेशतोऽपि कथं ज्ञायेतेत्यभिप्रायः । एवं भूपतिसामान्यस्य चरितसामान्यं प्राकृतबुद्ध्यगोचरमुपपाद्य मतिमद्भिरपि दुर्बोधतरस्य भूपतिविशेषाणां चरितविशेषस्यातिप्राकृतेनात्मनावगमे[4] महाराजानुभावं कारणमाह — तवेत्यादिना । विद्विषां नयवर्त्म मया अवेदि यद् अयं तवानुभावः । विद्विषा-

१. 'तं' ख. पाठः. २. 'पि दृश्यानु' घ. पाठः. ३. 'रीत' ख. पाठः. ४. 'स्याप्रतिकृ' घ. पाठः.

मित्यस्य विशेष्यतया भूपतीनामिति पदमनुषज्यते। ननु शत्रुतः प्रतिनिवृत्तस्य दूतस्य वचने विद्विषामिति विशेषणमुपपद्यते, न चारस्य। यदि शत्रवश्चारं चारतया प्रतीयुस्तर्हि मया विद्विषां नयवर्त्म विदितमित्युक्तिर्युक्तैवेति विद्विषामित्यनेन किं विवक्षितमिति चेदुच्यते — दुस्सहनवपरिभवविधानेन सपत्नेषु नगरे जनपदे वा विशिष्टं द्वेषं कृतवतामित्यमुमर्थं द्योतयद् विद्विषामिति पदमवस्थाकृतं भूपतीनां विशेषं व्यनक्ति। विद्विट्छब्दस्य भूपतिविशेषणतया गान्धारसैन्धवत्रिगर्ताधिपादीनामपि भूपतीनां सुयोधनशत्रुषु विद्वेषो द्योत्यते। वीत्युपसर्गो विग्रहार्थद्योतकः। विगृह्णतां द्विषामित्यर्थः। नीयतेऽनेन फलानुबन्धिनी प्रवृत्तिरित्यर्थशास्त्रोपस्कृता बुद्धिर्नयः। तस्य वर्त्म मार्गः सामाद्युपायाः। निगूढं तत्त्वं यस्य तन्निगूढतत्त्वम्। नयवर्त्मनो विशेषणमेतत्। नयवर्त्मैव तावद् गूढं गोपितं, तस्य तत्त्वमात्यन्तिकैकान्तिकफलनिमित्तं गहनतमं पारमार्थिकं रूपं तन्नितरां गूढम्। कृतविग्रहा हि शत्रवस्तत्प्रकाशने तत्परिवर्तनादिशङ्कया स्वानुपायान् नितरां गोपायन्तीति। विद्विषामिति विशेषणं नयवर्त्मतत्त्वस्य गूढतरत्वे हेतुः। त्वदनुभावं विना भूपतिचरितमपि मया ज्ञातुं न शक्यते यतस्ततस्तादृशां द्विषां तादृशं नयवर्त्मेदृशेन मया विदितं यत्, तत्र भवदनुभाव एवैकं कारणं वर्षे पर्जन्य इवेति तात्पर्यार्थः। अनुभाव इति, दुर्घटघटनापटीयसी शक्तिरित्यर्थः। अनुभावस्यात्यन्तिकं कारणत्वं द्योतयितुं सामानाधिकरण्योक्त्या वेदनेन कार्येणैक्यं संपादितम्। 'उद्दिश्यमानप्रतिनिर्दिश्यमानयोरैक्यमापादयन्ति सर्वनामानी'ति न्यायाद् वेदनस्यायमित्यनुभावैकलिङ्गता। तदनुभावस्यादित्यप्रकाशादेरिवापरोक्षतया विस्पष्टतां द्योतयितुमयमित्युक्तं, न स इति। यन्मम रिपुचरितविषयं वेदनं तदपरोक्षतया विस्पष्टं नवसंस्कारतयाप्रमुषितं चेति द्योतयितुमपरोक्षाद्यतनभूतकालविषयो लुङ् प्रयुक्तः — अवेदीति ॥ ६ ॥

स तु निसृष्टार्थः प्रणिधिरात्मनोऽवञ्चकत्वं हितैषित्वं कृत्स्नावधानं क्रियाफलसिद्धिं विनयं च निवेद्याव्यग्रेण जिगीषुणा राज्ञा जिज्ञासितं रिपुवृत्तान्तं क्रमेण वर्णयति विशङ्कमान इत्यादिना पद्यसन्दर्भेण।

---

१. 'त्युक्तमयुक्तै', २. 'पाना', ३. 'तां विद्धि', ४. 'नीत्य', ५. 'त्त्वन', ६. 'र्त्मैव, तद् गू' घ. पाठः ७. 'यत् तत' ख. पाठः. ८. 'ज्ञा', ९. 'र' घ. पाठः. १०. 'दा' क. पाठः.

विशङ्कमानो भवतः पराभवं
नृपासनस्थोऽपि वनाधिवासिनः ।
दरोदरच्छद्मजितां समीहते
नयेन जेतुं जगतीं सुयोधनः ॥ ७ ॥

सुयोधनो जगतीं जेतुं समीहते । जगतीशब्देन जगत्यां जाता नगरग्रामारण्यराज्यसमुद्रादिवासिनो विविधोपायसाध्या जना लक्ष्यन्ते । ऐकमत्यविधेयं जनानामैक्यं द्योतयितुं जगतीमित्युक्तं, न जनानित्येव । जेतुं वशीकर्तुम् । समीहते सम्यगिच्छति चेष्टते च[1]त्यर्थः । ननु पूर्वमेव तेन जिता, तत् किं जितां जेतुं चेष्टा पिष्टपेषणकल्पेति । तत्राह — दरोदरच्छद्मजितामिति । दरोदरच्छद्मना द्यूतच्छलेन जितां वशीकृताम् । युद्धच्छलं बलधर्मयोर्न्यूनतामात्रज्ञापकम् । द्यूतच्छलं तु धर्माभावस्येव बलाभावस्य लिङ्गमिति तत्कृतो जयो निन्द्यत[2]र इति द्योतयितुं दरोदरेति विशेषणं कृतम् । ननु जनापवादनिदानं दुष्कुलदुर्बलोचितं द्यूतच्छलं न जयसाधनमिति मन्यमानस्तमात्मनः परिवादं प्रमार्ष्टुं पुनर्धर्मेण बलेन वा जगतीं जेतुं समीहत इति, नेत्याह — नयेनेति । सुयोधनपदेन बलाभावो द्योत्यते, दरोदरच्छद्मपदेन धर्माभावः । ननु द्यूतच्छलजितमपि कुरुराज्यं कुरुराजसुतस्य[3] वशं गच्छेदेव, अपरस्य कौरवस्य परिपन्थिनोऽभावात् । कुरुराज्ये तद्वशंगतेऽस्य कुरुराजस्य साम्राज्यमभेद्यमिति जगतीं पुनर्जेतुं तस्य प्रवृत्तिर्नापे[4]क्षितेति चेत् तत्राह — भवतः पराभवं विशङ्कमान इति । भवत इति कर्तरि षष्ठी । भवत्कर्तृकं पराभवं विशङ्कमानो विविधं संभावयमान इत्यर्थः । आगामिनमास्मीयमित्यर्थात् सिध्यति । युधिष्ठिरः किं नीतिबलेनाप्रतर्क्यमप्रतिक्रियं नः पराभवं विदध्याद्, धर्मात्मजः[5] किमपध्यानेनास्मान् धक्ष्यति, स महेष्वासो भीमार्जुनाग्रजः किं पराक्रमेण नः समुन्मूलयेत्, किं वा तस्याजातशत्रोः प्रियचिकीर्षया शक्रादयोऽस्मानुपहन्युरित्यादयो विकल्पभेदा विशब्देन द्योत्यन्ते । विशङ्कमान इति लटा विशङ्कायाः सातत्यं व्यज्यते । कृत्प्रत्ययवाच्यतया सिद्धरूपायाः पराभवशङ्कायाः कर्तृसमवेततया तस्य जगतीं जेतुं

---

१. 'वे' क. पाठः. २. 'त इ' घ. पाठः. ३. 'शगे तस्य', ४. 'क्षे' क. पाठः. ५. 'त् । स घ' घ. पाठः.

समीहा पराभवशङ्कैकहेतुका, न धर्मादिचिकीर्षाहेतुकेति द्योत्यते । स सुयोधनः साम्राज्यस्थः, वयं वनस्था मृगवृत्तयः, तस्मादस्मत्तस्तस्य पराभवशङ्का कुतः स्यादित्येवंविधं विरोधमनुवदति — नृपासनस्थ इत्यादिना । प्रकृतिवर्गपौरजानपदादिव्यवहारदर्शनदण्ड्यदण्डनियोगादिकरणार्थं महाराजस्य सभायां कल्पितमासनं नृपासनं, तत्र स्थितोऽपि । अचलनीयविश्वविषयनियोगशक्तिरित्यभिप्रायः । अनेन तस्य परिभाव्यत्वासंभावना द्योत्यते । वनाधिवासिन इति युधिष्ठिरस्य परिभवशक्त्यसंभावना द्योत्यते । अपिशब्दः कुरुराजकर्मकस्य तापसकर्तृकस्य परिभवस्य विरोधं द्योतयति । आधिराज्यस्थितोऽपि सुयोधनो भवत्कर्तृकं परिभवं[1] विशङ्कमानः स्वीकृतं भूमण्डलं न जितं मन्यते, पुनस्तद्विजयाय सततमवहितश्चेष्टते[2] । तस्मात् स्वसाम्राज्यप्रत्यापत्तये भवता प्रयत्नो विधेय इति तात्पर्यार्थः ॥ ७ ॥

ननु विनयस्तन्त्रावापरूपस्य[3] नयस्य मूलम् । विनयो नाम त्रिवर्गशास्त्रविहितस्य सदाचारस्याचरणं वश्येन्द्रियता च । आस्तिक्यधैर्यमाधुर्यादिगुणगणस्तस्य कारणम् । स तु सौबलभागिनेयस्य कुतः स्यादिति शङ्कामनूद्य स तु धृतराष्ट्रसुतस्य स्वभावः प्रबलेन हेतुना परिवर्तित इत्याह —

> तथा विजिह्मः स भवज्जिगीषया
> तनोति शुभ्रं गुणसम्पदा यशः ।
> समुन्नयन् भूतिमनार्यसङ्गमाद्
> वरं विरोधोऽपि समं महात्मभिः ॥ ८ ॥

तथा विजिह्म इत्यादि । सः गुणसम्पदा शुभ्रं यशस्तनोति । तथा तेन प्रकारेण गूढविषान्नदानादिना । विजिह्मो विशेषेण नैकृतिकः विवृतकुटिलभावो[4] वा । तथापि जिह्म इति पाठे तथा जिह्मोऽपीत्यन्वयः । गुणानां प्रशंसाहेतूनां धर्माणां धैर्यमाधुर्यादीनां सम्पदा समृद्ध्या । शुभ्रं स्वच्छं वचनीयरहितम् । यशः प्रशंसारूपां ख्यातिम् । आत्मन इत्यर्थात् सिध्यति । तनोति विस्तारयति करोति वा । तस्य महाराजस्य यशस्संपादनस्य पौरजानपदसम्बन्धी

---

१. 'वं श', २. 'विहृतं चेष्ट', ३. 'पस्य', ४. 'लस्वभा' घ. पाठः

यशस्यो व्यापारः फलमिति तनोतीति परस्मैपदेन द्योत्यते । गुणसम्पदा यशस्तनोतीत्यनेन तद्गुणानां प्रभूतत्वं प्रख्यातत्वं च द्योत्यते । तस्य यशो भवति प्रथत इति वा यशः कर्तृतया नोक्तं, किन्तु यशस्तनोतीति कर्मतया । तेन तस्य तदीप्सिततममिति द्योत्यते । तस्य सुयोधनस्य गुणयशस्सम्पादने तदिच्छायां वा को हेतुरिति तत्राह — भवज्जिगीषयेति । भवतो जिगीषा भवज्जिगीषा । भवत इति कर्मणि षष्ठी । जेतुमिच्छा जिगीषा । हेतौ तृतीया । भवच्छब्दः प्रशस्यतमं युष्मदर्थमाह । प्रशस्यगुणं त्वां जेतुमिच्छा तस्य गुणसम्पादनादौ हेतुः, न स्वभाव इत्यर्थः । सम्पदिच्छाहेतुका तस्य भवज्जिगीषा, न धर्मरुचिहेतुकेत्याह — भूतिं समुन्नयन्निति । भूतिं हस्त्यश्वधनधान्यादिसम्पदम् । समुन्नयन् सन्ततमूर्ध्वं नयन् उपचयं प्रापयन्नित्यर्थः । 'लक्षणहेत्वोः क्रियायाः' (३. २. १२६) इति हेतौ शतृप्रत्ययः । भूतिसमुन्नयनमेवेष्यमाणतया तस्य त्वज्जिगीषाहेतुर्न धर्मरुचिरित्यर्थः । ननु शकुन्यादिसंसर्गिणस्तस्य सुयोधनस्य युधिष्ठिरजिगीषामात्रेण कथं स्वभावः परिवर्तित इति चेत् तत्राह — अनार्यसङ्गमादित्यादि । अनार्यसङ्गमाद् महात्मभिः समं विरोधोऽपि वरम् । अनार्यैः सङ्गमात् सख्यरूपात् सम्बन्धाद् महात्मभिः समं विरोधरूपोऽपि सम्बन्धः श्रेयानित्यर्थः । वरमित्यव्ययम् । अनार्यसङ्गमादित्यत्र 'पञ्चमी विभक्ते' (२. ३. ४२) इति पञ्चमी । अचिरेण स्वानुगुणवासनाधानशक्त्याधिक्यमत्र वरत्वं विवक्षितं, न प्रशस्यतरत्वम् । अन्यथा महात्मसम्बन्धो वरं, नानार्यसङ्गम इति वाच्यम् । अविश्वास्यस्यापक्रमैरुपक्रोशपरिभवैकविषयस्य दुर्जनस्य शीले दुर्जनस्यापि सहसा निर्वेदो भवत्येव । पुनर्जिह्मोपायेन तत्तदभिमतं सम्पादयमानो दुर्जनो दुर्जनबहुमानः सन् सजातीयैः स्वसंसर्गिणि स्वशीलं क्रमेण सङ्क्रमयति । तद्बहुमानशैथिल्ये पुनरपि तच्छीलं शिथिलीभवत्येव । सज्जनस्तु प्रख्यातगुणगणः सकलविश्वासबहुमानविषयः समुपनतसकलाभिमतस्पृहणीयशीलः कदाचित् केनापि स्वसम्बन्धेन यत्रकुत्रापि स्वसंसर्गिणि सद्य एव स्वशीलमुन्मीलयति । पुनरपि तद्बहुमानस्यानपायादबाधितं तत्र तदुपचीयत एवेत्येतत् सर्वमनेन

१. 'या । भवत इ', २. 'न उप' घ. पाठः. ३. 'स्य वक्रमतेर्दुर्जनस्योपक्रमे उप', ४. 'स्यापि' ख. पाठः.

वाक्येन द्योत्यते। ननु महात्मनां प्रतिसम्बन्धिनो दुरात्मानः, अनार्याणामार्याः। तत्कथमनार्येति महात्मभिरिति चोक्तं, न पुनरनार्येत्यार्यैरिति दुरात्मेति महात्मभिरिति वेति। अत्रोच्यते — अनार्यार्यौ दुरात्ममहात्मानौ वा वक्तुं नेदं वाक्यं प्रयुक्तं, सज्जनो यथा स्वसंसर्गिणि स्वशीलं सङ्क्रमयति न तथा दुर्जन इति वक्तुमनार्यपदसन्निधौ तत्प्रतिसम्बन्धिसमर्पकतया प्रयुक्तो महात्मशब्दः आर्यत्वान्वितं स्वार्थमभिधत्ते न केवलं महात्मपदसन्निधौ तथाप्रयुक्तोऽनार्यशब्दो दुरात्मत्वविशिष्टं स्वार्थं वक्ति। तत्रानार्यैर्दुरात्मभिरित्युक्ते सदाचारैरनभिगम्यैर्दुर्बलात्मभिः दुष्टात्मभिरिति प्रतीयते, आर्यैर्महात्मभिरित्युक्ते तद्विपरीतैरिति ॥ ८ ॥

ननु गुणसम्पदा स यशस्तनोतीति कथं निश्चीयते। यतोऽसन्तोऽपि गुणा मनुजपतीनां मनुजैः ख्याप्यन्त एव। तस्मान्न जनप्रशंसामात्रेण तस्य गुणसद्भावो निश्चेतुं शक्य इति चेत्। तत्राह —

कृतारिषड्वर्गजयेन मानवी-
मगम्यरूपां पदवीं प्रपित्सुना।
विभज्य नक्तंदिवमस्ततन्द्रिणा
वितन्यते तेन नयेन पौरुषम् ॥ ९ ॥

कृतारीति। तेन सुयोधनेन पौरुषं वितन्यते। पौरुषं पुरुषस्य सामान्यविशेषात्मकेनाऽवश्यानुष्ठेयः शास्त्रविहित आचारः। वितन्यते विशेषेण सोपस्कारं क्रियते। सदाचाराचरणरूपेण विनयेन कार्येणाव्यभिचारिलिङ्गेन तत्कारणभूतस्तस्य गुणगणोऽनुमीयत इत्यभिप्रायः। क्रीडाविनोदेच्छया तेन कदाचित्पौरुषं क्रियेतापि। तावता तस्य नात्यन्तिकगुणसद्भाव इति चेत्। तत्राह — नक्तंदिवं विभज्येति। रात्रिं दिनं चाष्टधा विभज्य प्रथमे दिवसभागे भूपतिरात्मनो रक्षाविधानमायव्ययौ च चिन्तयेत्। द्वितीये पौरजानपदानां कार्याण्यास्थानगतः पश्येत्। तृतीये स्नानस्वाध्यायादिभोजनानि कुर्वीत। चतुर्थे स्वबुद्ध्यौचित्यानुसारेण स्वमन्त्रिभिर्निर्वर्तितेषु पौरजानपदकार्येषु न्यायलभ्यानि हिरण्यादिधनानि प्रतिगृह्णीयात्। कोशाद्यधिकृतांश्च स्वकृत्येषु वि-

१. 'त्वना', २. 'ख्यापि' क. ख. ग. पाठः.

नियुञ्जीत। पञ्चमे मन्त्रिपरिषदा सह पत्रसम्प्रेषणेन वा मन्त्रयेत्, चारगुह्यबोधनीयानि च बुध्येत्। षष्ठे सुहृदादीनां भावविशेषं पश्यन् स्वैरं विहारं कुर्यात्, स्वबुद्ध्या मन्त्रतत्त्वं विवेचयेद्वा। सप्तमे हस्त्यश्वरथानायुधीयांश्च पश्येत्। अष्टमे दृष्टस्य सैन्यस्य सेनापतीनां तत्सुहृदां च भक्तिशक्त्युत्साहादि चिन्तयेत्, प्रतिष्ठितेऽहनि सन्ध्यामुपासीत। प्रथमे रात्रिभागे चरादीन् गूढपुरुषान् पश्येत्। द्वितीये स्नानभोजनं कुर्वीत। तृतीये गीतवाद्यनृत्ताद्यभिनन्देत्। चतुर्थे प्रियाभिः पत्नीभिः सह रमेत। पञ्चमे शयीत। षष्ठे तूर्यघोषेण प्रबुद्धः शास्त्रमितिकर्तव्यतां च चिन्तयेत्। सप्तमे गूढमन्त्रं कुर्याद्, गूढपुरुषान् प्रेषयेद्वा। अष्टमे ऋत्विगाचार्यपुरोहितसखिस्वस्त्ययनादीनि प्रतिगृह्णीयात्, चिकित्सकमाहानसिकमौहूर्तिकांश्च पश्येत्, ततः सन्ध्यामुपासीत इत्यादिनक्तन्दिवविभागो नीतिशास्त्रेषु निगद्यते। तत् सूचयति — विभज्य नक्तन्दिवमिति। कालसमुदायैक्यं सूचयता द्वन्द्वैकवद्भावेन पौरुषमित्येकवचनेन च पृथग्विधमप्येकशेषिनिष्ठतयैकं पुरुषकर्मेति व्यज्यते। नक्तंदिवमित्युक्तं नाहोरात्रमिति। तेनैतत्सूच्यते — जन्तूनां स्वापकाले रात्रौ स तु विशेषेण स्वोचितं कर्म करोति, न जनव्यापारकाले, जनप्रत्ययार्थं दिन इति। प्रमाणमूलमेव नक्तंदिवविभागेन तस्य पौरुषाचरणं न स्वोत्प्रेक्षादिमूलमित्याह — नयेनेति। नयशब्दः प्रतिपाद्यप्रतिपादकत्वसंबन्धेन नयप्रतिपादकं शास्त्रं लक्षयति। करणे तृतीया। शुक्रादिप्रणीतं नीतिशास्त्रं तस्य तथाविधेयपौरुषाचरणे करणमित्यर्थः। ननु स्वप्रवृत्त्यायत्तप्राणयात्रः पृथग्जनोऽपि दुःखरूपां प्रवृत्तिमविरतं न करोति, किं पुनस्सुखोचिता महीपतय इत्यत आह — अस्ततन्द्रिणेति। अस्ता तन्द्री अलसता येन सोऽस्ततन्द्रिः तेन। स्वाभाविकीं तन्द्रीं विवेकधैर्यादिगुणैर्निरस्तवतेत्यर्थः। 'गोस्त्रियोरुपसर्जनस्य' (१. २. ४८) इति ह्रस्वत्वम्। तन्द्रीनिरासेन तन्द्रीसहचारिणी निद्रापि निरस्तेति प्रतीयते। ननु मनष्षष्ठानीन्द्रियाणि सुखप्रियाणि दुःखरूपां पुरुषप्रवृत्तिं निवर्तयन्ति, कामक्रोधवशानि च तानीति चेत्।

---

१. 'श्येत् स्वै', २. 'चिन्तये' क. ख. ग. पाठः. ३. 'धांश्च' क ग. घ. पाठः. ४. 'षादीन्', ५. 'नृत्तवाद्यान्यभि', ६. 'सखीभिः' क. पाठः. ७. 'नाभि', ८. 'यनार्थं' क. ख. पाठः.

तत्राह — कृतारिषड्वर्गजयेनेति। अरिसंबन्धिनामरिभूतानां वा षण्णां वर्गाणां जयः कृतो येन स तथोक्तः, तेन। मनष्षष्ठानीन्द्रियाणि च कामक्रोधलोभहर्षमानमदाश्च शत्रवः। कृतारिषड्वर्गजयेनेत्युक्तं न तु कृतषडरिजयेन कृतषडरिवर्गजयेनेति वा। तेनैतद् ध्वन्यते — एते तु शत्रवः सदा संहताः। संघातोऽपि चैषामेकैकस्यैव। तथाहि — चक्षुरादिकमेकैकमिन्द्रियं मनसा सहितं रागादिभिश्च सहकृतं पुरुषं स्वविषये निपातयति। कामादयश्च तत्तदिन्द्रियसंहताः पुरुषं परिभवन्तीति। ननु विषयसुखप्रियस्तत्सुखविरोधीन्द्रियं नेच्छेदपि। कुतस्तस्यारिषड्वर्गजय इति चेत् तत्राह — मानवीं पदवीं प्रपित्सुनेति। मनुना निर्वृत्तां प्रकाशितां वा पदवीं मार्गं, धर्मस्येत्यर्थाद् गम्यते। अथवा स्वर्गादिप्राप्तिसाधनतया पदवीशब्देन धर्मो लक्ष्यते। प्रपित्सुना प्रपत्तुमिच्छता। प्रशब्दः प्रकर्षार्थः। भृशं जिगीमिषुणेत्यर्थः। पदेर्धातोः 'सनि मीमाघुरभलभशकपतपदामच इस्' (७. ४. ५४) इत्यकारस्येसादेशः। 'खरि च' (८. ४. ५५) इति चर्त्वम्। 'सनाशंसभिक्ष उः' (३. २. १६८) इत्युप्रत्ययः। धर्मस्य धर्ममार्गस्य वा मनुसंबन्धित्वकथनेन मुख्यमादिकालीनं धर्मं स प्रपित्सत इति द्योत्यते। धर्मप्रेप्सया कथमिन्द्रियजयेच्छा तज्जयो वा स्यादित्यत आह — अगम्यरूपामिति। अजितेन्द्रियैर्जनैरप्राप्यस्वरूपाम्। अजितेन्द्रियैरपि धर्मैकदेशो धर्मप्रतिनिधिर्वा यद्यपि प्राप्तुं शक्यते, तथापि साक्षाद् धर्मस्य स्वरूपं तैः प्राप्तुं न शक्यमिति द्योतयितुमगम्यरूपामित्युक्तं नागम्यामित्येव। अतिदुर्गमधर्मस्वरूपप्रेप्साबलादेवेन्द्रियादिजयमापादयतीत्यभिप्रायः। प्रबलकृतारिजयो नवं धर्मं प्रपित्सुरर्थशास्त्रानुसारेण पौरुषं वितन्वन् सुयोधनः स्वयमेवाजातशत्रुणा निसर्गाचरितमुख्यधर्मेण धर्मशास्त्रानुवृत्त्या क्रियमाणपुरुषकर्मणा भवता जेतुं शक्य इति चानेन श्लोकेन द्योत्यते॥ ९॥

शास्त्रविहितनित्याचारानुष्ठानरूपे विनये तस्य नैपुणमस्तीत्युक्तं, स्वमण्डलवशीकरणरूपे तन्त्रे च तदस्तीत्याह पद्यसन्दर्भेण।

**सखीनिव प्रीतियुजोऽनुजीविनः**

**समानमानान् सुहृदश्च बन्धुभिः।**

---

१. 'न कृ', २. 'प्रप', ३. गीषु', ४. 'प्सया ब' ख. पाठः.

स सन्ततं दर्शयते गतस्मयः
कृताधिपत्यामिव साधु बन्धुताम् ॥ १० ॥

सखीनिवेत्यादि । स सुयोधनोऽनुजीविनो दर्शयते अनुजीविकर्तृकं दर्शनं कर्मभूत एवानुकूल्येन प्रयोजयतीत्यर्थः । कीदृशाननुजीविनः । सखीनिव प्रीतियुजः । सख्यौ सखीनिवात्मनि प्रीतियुजः स्निग्धानित्यर्थः । प्रीत्या विश्वास-हितैषित्वादयः सखिगुणा उपलक्ष्यन्ते । सोऽनुजीविनः सखीनिव मानयते । तथा मानितास्ते प्रीताः सखायः सखायमिव तं सदा दिदृक्षन्ते । स तान् दर्शयते । तेषां स्वदर्शनव्यासङ्गं कदाचिदपि न करोतीत्यर्थः । सखिषु या मानना सा अनुजीविष्वपि क्रियेत चेत् सखीनां कोपः स्यादित्यत आह — समानेत्यादि । स सुहृदो दर्शयते । बन्धुभिः समानमानान् अविनाभावसंबन्धान् । बन्धुश-ब्देन बन्धुमान उच्यते । बन्धूनां मानैर्माननैः समानः समो मानो माननं येषां ते तथोक्ताः तान् । बन्धौ बन्धूनिर्वात्मनि प्रीतियुज इति भावः । द-र्शयत इत्यस्य पूर्व एवार्थः । अनुक्तसमुच्चयार्थेन चशब्देन सख्योचिताः स-मानवयोभिजन्मादिगुणा राजपुत्रादयः कथ्यन्ते । तर्हि बन्धूनां कोपः स्या-दित्यत आह — बन्धुतामिति । दर्शयत इत्यनुषज्यते । बन्धुतां बन्धुसमू-हम् । कीदृशीं बन्धुतां, कृताधिपत्यामिव । आत्मनिर्विशेषं मानितामित्यर्थः । साधुशब्दः क्रियाविशेषणम् । साधु उचितम् अग्राम्यदर्शनो यथा भवति तथानु-जीविप्रभृतीनां स्वदर्शनेऽनुकूलो भवतीत्यर्थः । तदायत्तेषु स्वकार्येषु नवपरि-चये यदृच्छयाँसावनुजीविप्रभृतिषु प्रवणो भवति चेत्, तावता तेषामात्मनि वि-श्वासाद(यो य ? यस्त)था न स्युरित्यत आह — सन्ततमिति । सन्ततं सततं, तत्कार्येषु स्वकार्येषु नवपरिचये चिरपरिचये विविक्त आकीर्णे चेत्यर्थः । कथं नाम सार्वभौमः सन् असावनुजीविप्रभृतिषु प्रवणः स्यादित्यत्राह — गतस्मय इति । स्मयो नाम परप्रावण्यविरोधी स्तब्धताहेतुर्मानाख्यो दोषः । स गतो यस्मात् स तथोक्तः । अनुजीविप्रभृतीनां तेन सह स्वैरव्यवहारादि नास्तीति द्यो-तयितुं सखीनिवेत्यादिना तेषां सख्यादिभिः सादृश्यमुक्तं न तादूप्यम् ।

---

१. 'न तु क', २. 'सखीन् द' ख. पाठः. ३ 'मान', ४. 'व प्री', ५. 'न कृ' क. ग. घ. पाठः. ६. 'संद' क. पाठः. ७. 'या वासा' क. ग. घ. पाठः. ८. 'त्मवि', ९. 'द सन्ततं स त' क. पाठः. १० 'धि' क. ग. घ. पाठः.

तेनानुजीविप्रभृतयस्तं प्रति स्नेहविस्रंभादियुजोऽपि तस्य प्रभुत्वं न भिन्द-न्तीति तस्याधृष्यत्वं द्योत्यते । अधृष्यत्वं च भूपतेः प्रधानगुणः । तथा-चोक्तं — "भीमकान्तैर्नृपगुणैः स बभूवोपजीविनाम् । अधृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णवः ॥" इति । बन्धुतामित्यत्र 'ग्रामजनबन्धुसहायेभ्यस्तल्'(४. २. ४३) इति तल्प्रत्ययः । दर्शयत इत्यत्र सुयोधनस्य दर्शनकर्मभूतस्यापि दर्शनानुकूल्येन प्रयोजकत्वमुद्भाव्य 'तत्प्रयोजको हेतुश्च' (१.४.५५) इति कर्तृत्वम् । तेन कर्तरि प्रत्ययः । अनुजीविप्रभृतीनां शुद्धे दृशिधातौ कर्तृभूतानां ण्यन्ते कर्मत्वं 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्ता स णौ' (१. ४. ५२) इति । 'णेरणौ यत्कर्म णौ चेत् स कर्तानाध्याने' (१. ३. ६७) इत्यात्मनेपदम् । अत्र केचिदाहुः — 'णेरणावि'त्यादिसूत्रेण नात्रात्मनेपदं स्यात् । तत्र ह्यणौ कर्मभूतस्य णौ कर्तृत्वं कर्मान्तरनिवृत्तिश्च विवक्ष्यते । तथाच वृत्तावुदाहरणम्— आरोहन्ति हस्तिनं हस्तिपकाः, आरोहयते हस्ती स्वयमेव इति । तस्मात् 'णिचश्च' (१. ३. ७४) इत्यात्मनेपदमिति । तेषां वचनं पश्यन्ति भृत्या राजानं, दर्शयते भृत्यान् राजेति भाष्यविरुद्धम् । वृत्तिकारेणापि कर्मान्तरनिवृत्तिर्न[1] विवक्षिता, यदयमाध्यानोपाधावात्मनेपदनिषेधे कर्म प्रायुङ्क्त स्मरति वनगुल्मस्य कोकिलः स्मरयत्येनं वनगुल्मः स्वयमेवेति । 'णिचश्चे'त्यात्मनेपदे भृत्यादिकर्मकं लोकादिकर्तृकं दर्शनं स प्रयोजयतीत्यर्थे भृत्यादीनां सख्यादिसाम्य-प्रख्यापनमात्रमुक्तं न सख्यादिसाम्यप्रापणमिति[2] तस्य स्तोतुं प्रस्तुतस्य भृत्यादिवञ्चनात्मकं महद् दूषणमुद्भाव्येत । अथ भृत्यादिकर्तृकमात्मविषयं दर्शनमानुकूल्येन स प्रयोजयतीत्यर्थः, तदा[3] च 'णिचश्चे'त्यत्र कर्त्रभिप्राये क्रियाफल इत्यधिकारात् स्वक्रियाफलसिद्ध्ये भृत्यादिदर्शनानुकूलो भवतीति[4] तस्य पूर्वोक्तो दोषस्तदवस्थ एवेत्यलं बहुना । 'करेणुरारोहयते निषादिनम्' इति माघः ॥ १० ॥

त्रिवर्गानुष्ठानरूपं पौरुषं तेन वितन्यते भृत्यादयोऽनुकूल्यन्ते चेत्युक्तम् । तत्र द्विधा शङ्का सम्भवति । यद्यप्यसौ धर्मादीननुतिष्ठति, तथापि तेषु यत्र तस्यादरविशेषः तद्विरोधे सति तदितरयोर्बाधः स्यात् । भृत्यादीनां च तं

---

१. 'नि' क. पाठः. २. 'म्यप्रा' ख. पाठः. ३. 'दा 'णि' क. ग. घ. पाठः. ४. 'त्यर्थः । त' ख. पाठः.

प्रत्यनुरागे सत्यपि नैसर्गिके कृत्रिमे वा विरोधे सति मिथो बाधः स्यादिति द्विप्रकारां शङ्कामपनुदति —

असक्तमाराधयतो यथायथं
विभज्य भक्त्या समपक्षपातया ।
गुणानुरागादिव सख्यमीयिवान्
न बाधतेऽस्य त्रिगणः परस्परम् ॥ ११ ॥

असक्तमिति । अस्य त्रिगणः परस्परं न बाधते । त्रयाणां धर्मार्थकामानामनुजीविसुहृद्बन्धूनां[1] पौरजानपदवन्यानां वा गणः सङ्घातः[2] परस्परमन्योन्यं न बाधते न[3] मृदूकरोति । राजसम्बन्धिनो धर्मादयोऽन्योन्यानुबद्धाः संहता एव पुरराष्ट्रयोगक्षेमरूपमेकं प्रयोजनं निर्वर्तयन्तीति द्योतयितुं त्रिगण इत्युक्तं न तु त्रय इति । चतुष्पथसमवेतानां पान्थानामिव धर्मादीनां यादृच्छिको योगो न घातहेतुः संघाते वा न विरोध इति नित्य एव सङ्घाते विरोधो बाधा च प्राप्नोतीति त्रिगणबाधानिषेधेन धर्मादयस्तत्र स्थिरतरा इति द्योत्यते । एकसम्बद्धानामन्योन्यविरुद्धानां धर्मादीनां कथं नान्योन्यबाधेति तत्राह — असक्तमित्यादि । असक्तमिति क्रियाविशेषणम् । असक्तमस्खलितम् । देवादीनां प्रसादनाय क्रियमाणे सपर्यादिसेवाविशेष आराधयतेर्मुख्यो[4]ऽर्थः । सोऽत्र धर्माद्यनुष्ठाने भृत्यादिसम्भावने चोपचर्यते । धर्माद्यनुष्ठानस्यादरपूर्वकत्वं भृत्यादिसम्भावनस्यानुरागहेतुत्वं च द्योतयितुं पश्चात्पठितोऽपि त्रिगणशब्दः आराधयतेः कर्मत्वेन विभक्तिविपरिणामेन त्रिगणमित्यनुषज्यते । यथायथमिति च क्रियाविशेषणम् । यथायथं यथास्वं, धर्मादिस्वरूपानतिक्रमेणेत्यर्थः । 'यथास्वे यथायथम्' (८. १. १४) इति ह्याचार्याः । विभज्य विभागं कृत्वा । सकर्मकत्वाद्[5] धातोर्धर्माद्यनुष्ठानभृत्यादिसंभावनोचिता देशकालादयो विभागकर्मत्वेनाक्षिप्यन्ते । तादृशे धर्माद्यनुष्ठाने तादृशे भृत्यादिसंभावने च हेतुमाह — भक्त्येति । ऐहिकामुष्मिकाभ्युदयहेतुत्वप्रतीतिपूर्विका स्नेहबहुमानविश्वासात्मिका देवादिविषया चित्तवृत्तिर्भक्तिः । से[6]ह धर्मादिविषया विवक्ष्यते । हेतौ तृतीया । भक्त्या असक्तं यथायथं विभज्य त्रिगणमा-

१. 'त्सम्बन्धिनां वा' क. ग. घ. पाठः. २. 'तः अन्यो', ३. 'न क' ख. पाठः. ४. 'धनानि' क. ग. घ. पाठः. ५. 'नां क', ६. 'स्नि' ख. पाठः.

राधयतो भक्तिरपि कुत्रचिदधिका न्यूना वा त्रिगणस्य मिथो विरोधहेतुः स्यादित्यत्राह — समपक्षपातयेति । पक्षे पातः प्रवेशः पक्षपातः । समः पक्षःपातो यस्याः सा समपक्षपाता, तया । एकप्रकारानुबन्धी संघातः पक्षः । धर्मादिसम्बन्धिषु भृत्यादिसम्बन्धिषु च पक्षेषु स्नेहादिकाया मनोवृत्तेः पातः पक्षपातशब्देनेह विवक्ष्यते । धर्मादिष्वविषमपर्याप्तस्नेहयेत्यर्थः । अचेतनायां भक्तौ पक्षपातस्य चेतनधर्मस्यारोपणेन तस्या नैसर्गिकत्वं द्योत्यते । अविषमा नैसर्गिकी पर्याप्ता धर्मादिभक्तिस्तस्य धर्माद्याराधने नियतो हेतुरित्यभिप्रायः । अस्य त्रिगणः परस्परं न बाधत इत्येव न, परस्परोपकारी चेत्याह — सख्यमेयिवानिवेति । यथा सखायः परस्परमुपकुर्वन्ति, तथा धर्मादय इत्यर्थः । एयिवानासेदिवानित्यर्थः । अचेतनस्य त्रिगणस्य सख्यप्राप्तेरारोप्यमाणतां द्योतयितुं परोक्षविषयः क्वसुप्रत्ययः प्रयुक्तः एयिवानिति । सख्यप्राप्तौ हेतुमाह — गुणानुरागादिति । अस्येत्यनुषज्यते । अस्य सुयोधनस्य गुणेष्वनुरागात् स्नेहादित्यर्थः । अथवा सख्यप्राप्तिर्मुख्यैव विधीयते सख्यमेयिवानिति । तत्र हेतुरुत्प्रेक्ष्यते गुणानुरागादिवेति । धर्मादीनामचेतनत्वात् तत्साहित्यं नियमेन परस्परोपचयहेतुः । तद्गुणानुराग एव नारोप्यते, मिथः सख्यप्राप्तिश्च । भृत्यादीनां तु वास्तवं तद्गुणानुरागमनूद्य मिथः सख्यप्राप्तिमात्रमारोप्यते । अस्येत्युक्तं न तस्येति । तेन धर्माद्यनुकूलयिता सुयोधनो मया दृष्ट एव न परोक्तिप्रतीत इति प्रतीयते । अस्य गुणानुरागादित्युक्तं नास्मिन्ननुरागादिति । तेन भवज्जिगीषाकृष्टभवद्गुणसजातीयगुणद्वारतया कृत्रिमस्तत्र भृत्यादीनामनुरागो न नैसर्गिकगुणे भवतीव नैसर्गिक इति द्योत्यते ॥ ११ ॥

धर्माद्यनुष्ठानरूपे विनये भृत्यादिवशीकरणरूपे तन्त्रे चोद्भूतं शङ्काद्वयं तन्त्रेण निरसितुं प्रवृत्तत्वादयं श्लोकोऽत्र पठितो न सखीनिवेत्यतः पूर्वम् । तस्य भृत्याद्यनुकूलनकौशलमुक्तमुपपादयितुं सामाद्युपायप्रयोगनैपुणं प्रतिपादयति — निरत्ययमित्यादिना श्लोकद्वयेन ।

> निरत्ययं साम न दानवर्जितं
> न भूरि दानं विरहय्य सत्क्रियाम् ।

१. 'र्मा', २. 'ई' ख. पाठः ३. 'क्तः । स' क. पाठः. ४. 'प्तिमात्र' ख. पाठः. ५. 'र्मानु' क. पाठः. ६. 'स्यास्य भृ' ख. पाठः.

प्रवर्तते तस्य विशेषवर्तिनी
गुणानुरोधेन विना न सत्क्रिया ॥ १२ ॥

तस्य सुयोधनस्य साम प्रवर्तते । मधुरपदसन्दर्भं प्रियार्थयुक्तं परोपच्छन्दनात्मकं वचनं साम । तद् विषयादिभेदात् प्रभेदेन पञ्चविधं वर्तते भवतीत्यर्थः । प्रयोजनार्थिषु स्वसमेषु परस्परोपकारप्रकाशनं, निस्पृहेषु सूरिषु समुचितगुणसङ्कीर्तनं, समग्रशक्तिषु सुहृत्प्रभृतिषु पूर्वसंबन्धसमाख्यानं, भृत्यादिषु तदात्वायतिप्रदर्शनं, परमेश्वरमुनिगुर्वादिषु तवाहमित्यात्मार्पणं चेति विषयभेदात् पञ्चविधं साम तत्तदवस्थादेशकालादिभेदात् पृथक् पृथगनेकप्रकारम् । निरत्ययमिति । अत्ययः कालातिपातः फलप्राप्तेः प्रागेव मध्ये विरतिश्च, तद्रहितम् । अनतीतकालमाफलोदयानुबन्धं चेत्यर्थः । सोपस्कारं च तदित्याह — न दानवर्जितमिति । दानोपस्कृतं हि साम फलप्रकर्षाय भवतीति तस्य दानं प्रवर्तते । निरत्ययमित्यत्रापि संबध्यते । भूरीति पूर्वत्रापि । भूरिशब्देन बहु विपुलमित्यर्थद्वयं तन्त्रेणावृत्त्या वा विवक्ष्यते । यथानतीतकालमाफलोदयान्तं चानुबद्धमेव साम फलायेति नातीतकालं मध्ये विरतं च, तथा दानमपि । यथा दानं विपुलमेव फलदायि न स्वल्पं, तथा सामापीत्युभयोर्विशेषणयोरुभयत्र निवेशः क्रियते । निरत्ययशब्देन दोषविरह उपलक्ष्यते, भूरिशब्देन गुणान्वयः । दानं च सोपस्कारमित्याह — सत्क्रियां विरहय्येति । आदरसामान्यवचनः सत्क्रियाशब्दः प्रकरणादिह वाचिकमादरविशेषं साम विषयीकरोति । यथा सामरूपा वाचिकी सत्क्रिया सत्कार्यस्य सद्यः प्रीतिं जनयति, तथा बहुमतिरूपा मानसी सत्क्रिया प्रह्वतारूपा कायिकी चेति समस्तसत्कारगुणः साम्न्येवास्तीति द्योतयितुं सत्क्रियामित्युक्तं न सान्त्वनमिति । 'आदरानादरयोः सदसती' (१. ४. ६३) इति सूत्रेण कृञि परतः सच्छब्दस्य गतिसंज्ञायां 'कुगतिप्रादयः' (२. २. १८) इति समासः कृञ आदरार्थता च । सामपूर्वकमेव दानं फलप्रकर्षाय, न कदाचित् साम्नासंबद्धमिति विरहय्येति क्त्वाप्रत्ययेन द्योत्यते । सामदानयोः केवलयोरप्युपायत्वमस्त्येव । किन्तु

१. 'शालिनी' इति मूलकोशपाठः. २. 'द् व' क. ग. घ. पाठः ३. 'लं ना' ख. पाठः. ४. 'राम उ' क. ग. पाठः. ५. 'वचनसामान्यवत्कि' ख. पाठः. ६. 'पी' क. पाठः.

मिथोऽन्वितयोस्तयोः फलातिशयवत्त्वमस्तीति ते परस्परं[१]विरहाभावेन विशिनष्टि न परस्परेण । तेन च स न शास्त्रपठितमात्रं तत् कर्मानुतिष्ठति तत्तदुपस्कार-युक्तमेवोपायादिविधिं फलप्रकर्षाय प्रयुङ्क्त इति तस्य प्रतिभाप्रकर्षः प्रकाश्यते । भूरिशब्दस्य बह्वर्थतया दानस्यापि प्रकारबहुत्वं द्योत्यते । दानं च पञ्चविधं नीतिशास्त्रे निगद्यते —प्रयोजनसिद्धये परेण दत्तस्य स्पृहणीयस्योच्चावचस्य धनस्य तथैव प्रतिपादनम्, स्वयं गृहीतस्य वसनचन्दनादेरनुमोदनं, अपू-र्वस्पृहणीयद्रव्यदानम्, इतःप्रभृत्येतद्धनं मत्पत्रमुद्रादि विना त्वया [३]स्वयं गृह्य-तामिति[४] तस्य स्वयंग्राह्यताप्रवर्तनं, विवादविषयस्य देशादेः प्रतिमोक्षश्चेति । तत्र च तत्तद्विषयादिवशेन तत्तत्प्रकारविषय उत्प्रेक्षणीयः । नन्वत्र श्लोके सामदाने सोपस्कारमुपवर्णिते । उत्तरत्र दण्डोऽपि तथोक्तः । भेदोऽपि सामा-दिवदुपायतया लोके शास्त्रे च कथ्यत इति (त!क)स्मादसाविह विविच्य नोच्यत इति चेत् । उच्यते । सत्यं, भेदोऽप्युपायमध्ये पठ्यते । स तु वेदत्रय-समाहाररूपोऽथर्ववेद इवोपायत्रयसमाहाररूप इति द्योतयितुमत्र पृथङ् नोपव-र्णितः । तथाहि — भिद्यते परेषां बुद्धिरनेनेति भेदो निरुच्यते । अनुकू-लया प्रतिकूलया वा क्रियया परबुद्धिभेदः क्रियते । तत्र मिथः स्निग्धौ रक्तौ वा परस्परसंघातेन पर्याप्तबलावनुकूलौ सुहृदावात्मसात्कर्तुं प्रतिकूलौ दुर्हृदौ बाधितुं वा तयोर्मिथः स्नेहरागापनयनद्वारेण बुद्धिभेदजनको भेदविशेषः सामान्तर्भूत इति प्रतीयताम् । तथाहि सत्यतया प्रत्यायितैर्मधुरशब्दार्थ-सन्दर्भैरुचितैर्वचनैः पूर्वमात्मनो विश्वास्यतामुत्पाद्य पश्चान्मिथः श्लिष्टयोः कैतवादिदोषप्रकाशनेन स्नेहरागावपनीय निपुणधिया बुद्धिभेदः क्रियते । वाग्मिना प्रयुक्तं गुणप्रशंसारूपं सान्त्वनमन्यदोषेषु प्रत्ययमुत्पाद्य भेद्ययोर्बुद्धि-भेदं जनयतीति सामैवात्र भेदकमिति प्रतीयते । आर्द्रताप्रकृतिरनुकूलता-हेतुः पुरुषादिविषया मनोवृत्तिः स्नेहः । स्नेहप्रकर्षो रागः । स्निग्धयोः स्नेहापनय-नाय यावान् प्रयत्नः क्रियते रक्तयो रागापनयनाय ततोऽधिक इति प्रवृत्ति-विशेषानुष्ठानाय भेद्यानां स्नेहरागयोः पृथगपनेयत्वं नीतिशास्त्रेषूक्तम् । यदा संहतयोर्भेद्ययोः स्नेहरागनिवर्तनमात्रेण स्वप्रयोजनं सुलभं, तदा सामैव भेद्य-

---

१. 'रव' ख. पाठः. २. 'ह', ३. 'संगृ', ४. 'ति स्वग्रा' क. ग. पाठः.
५. 'रभे' क. ग. घ. पाठः.

भेदनाय पर्याप्तम् । यदा पुनः संहतयोर्मानिनोः संघर्षोत्पादनद्वारेण, न मिथो विग्रहकरणेनैव स्वप्रयोजनं साध्येत, तदा सामोपस्कृतं दानमप्यपेक्ष्यत इति सङ्घर्षोत्पादनरूपो भेदविशेषो दानान्तर्भूत इति प्रतीयते । अधिकबलानां समबलानां वा भेद्यानां बुद्धिभेदं सामदाने प्रयोजयतः । दुर्बलानामल्प-सत्त्वानां वा भेदनाय सन्तर्जनादिरूपो वाचिको दण्ड एव प्रभवतीति सन्त-र्जनरूपो भेदविशेषो दण्डान्तर्भूत इत्युभयत्रान्तर्भूतत्वाद् महाकविना भेदः पृ-थङ्नोक्त इत्यलं बहुना । अथवा आवृत्त्या पठितो दानशब्दो भेदं वक्तुं शक्नो-तीति सामादिवद् भेदोऽप्यत्र साक्षादुक्त एव । तथाहि — ददातेरिव द्यते-रपि ल्युटि दानमिति रूपं भवति । द्यतिः खण्डनार्थः । खण्डनं भेद इत्यन-र्थान्तरम् । अस्मिन् पक्षे सत्क्रियां सतीं प्रशस्तां क्रियां विरह्य्य भेदो न प्रवर्तत इति योजनीयम् । भेदक्रियायाः प्रशस्यत्वमौचित्यानुरोध इह विव-क्ष्यते । अत्रापि भूरिशब्दस्य बहुविपुलार्थतया भेदस्य बहुविधत्वं विपुलत्वं च प्रतीयते । विषयादिविशेषज्ञता नास्ति चेत् सामदानादिप्रयोगो निष्फल एवेति विशेषज्ञतां तस्याह — विशेषेत्यादिना । विशेषेषु विषयदेशकालाव-स्थानां भेदेषु वर्तनशीला विशेषवर्तिनी । सत्क्रिया आदरः सामदानादिरूपो गु-णानुरोधेन विना न प्रवर्तते । तं तं गुणमनुसृत्यैव तेन सामादि प्रयुज्यत इत्य-भिप्रायः । प्रवर्तत इति सामदानयोः कर्तृत्वमुक्तं न कर्मत्वम् । तेनोत्थानादिवद्-यत्नसाध्यं तस्य सामाद्यनुष्ठानमिति सूच्यते । गुणानुरोधेनेत्यादिना अन्योऽप्यर्थो ध्वन्यते । गुणाः सन्धिविग्रहादयः, तदनुरोधेन तस्य सत्क्रिया प्रवर्तते । सत्क्रिया साम । सत्क्रियेत्युपलक्षणम् । सर्वेऽपि तस्योपायाः सन्ध्यादिगुणानुगुणा एवेति भावः । सामादयश्चत्वार उपायाः स्वमण्डले प्रयोज्याः, सन्ध्यादयः षड्गुणाः प-रमण्डल इत्यौत्सर्गिकी स्थितिः । तत्र सामादिभिरात्मसात्कृताः पौरजानपदादयो मण्डलवासिनः स्वभर्त्रा सम्राजा परमण्डले विधेयानां सन्ध्यादीनां साधने यथा-नुकूलाः कुशलाश्च भवेयुः तथा सामाद्युपायानसौ प्रयुङ्क्त इति तात्पर्यार्थः । श्लोकमध्यवर्तिनी प्रवर्तत इति क्रिया बहूनि कारकवस्तूनि स्वसम्बन्धेन दीप-वद्दीपयतीति क्रियोपलक्षितं मध्यदीपकमिदम् ॥ १२ ॥

१. 'ण मि', २. 'धेन बु' ख. पाठः. ३. 'पायत्र' क. ग. घ. पाठः. ४. 'द्वान् क' क. ग. पाठः. ५. 'दानमित्य' क. पाठः. ६. 'स्यां', ७. 'हुत्वं', ८, ९. 'मादि', १०. 'स्मृ' क. पाठः.

वसूनि वाञ्छन्न वशी न मन्युना
स्वधर्म इत्येव निवृत्तकारणः ।
गुरूपदिष्टेन रिपौ सुतेऽपि वा
निहन्ति दण्डेन स धर्मसंप्लवम् ॥ १३ ॥

वसूनीत्यादि । स दण्डेन धर्मसंप्लवं निहन्ति । धर्मस्य संप्लवो धर्मसंप्लवः । सम्प्लवो विपत्तिः सङ्करश्च । धर्मस्यानाचरणं विपर्ययाचरणं च विपत्तिः । अधर्मसङ्कीर्णता सङ्करः । द्वेष्यतां[1] द्विषतां[2] वा धर्मादिप्रतिकूलानां वा दमनसाधनं दण्डशब्देनोच्यते । निहन्ति नितरां हिनस्तीत्यर्थः । यथा पुनर्धर्मसंप्लवो नोद्भवेत् तथा तमुन्मूलयतीति भावः । स्वतो जनापराग-हेतोर्[3]दण्डस्यानुद्वेजकत्वं[4] द्योतयितुं धर्मपरिपन्थिनिर्मूलनसाधनत्वमुक्तं न दण्डं प्रयुङ्क्त इति कर्मत्वम् । अनाप्तोपदिष्टः स्वोत्प्रेक्षितो वा प्रयुक्तो दण्डो न धर्मसाधनमिति शङ्कामपनुदति — गुरूपदिष्टेनेति । अज्ञातस्य श्रेय-स्साधनस्यार्थस्य श्रद्दधानाय रहस्याख्यानमुपदेशः । गुरुशब्देनोपदेष्टुरा-प्तता द्योत्यते, उपदिष्टेनेत्यत्र निष्ठयोपदेशस्य परिसमाप्तिः । तेन स्वोत्प्रेक्षि-तत्वशङ्का दूरनिरस्तैव । सर्वस्य हि प्रतिकूलेषु स्वत एव तीव्रा मनोवृत्तिर्भवति, अनुकूलेष्वार्द्रेति । द्वेष्येषु द्विषत्सु भूयांसं दण्डं प्रयुञ्जीत प्रियेषु स्वल्पं नैव वा प्रयुञ्जीतेति शङ्कामपाकरोति — रिपौ सुतेऽपिवेति । अपिवेत्येकः शब्दः समुच्च-यार्थः । अथवेवार्थो वाशब्दः तदा रिपौ वा सुतेऽपीत्यन्वयः[5] । रिपौ सुते इति च सप्तमी अधिकरणविशेषे विषये वर्तते । रिपुविषयेण सुतविषयेणा-पीत्यर्थः । वाशब्दस्येवार्थत्वे रिपुविषयेणेव[6] सुतविषयेणापीत्यर्थः[7] । द्वे-ष्येषु प्रधानो रिपुः । प्रियेषु पुत्रः । ताभ्यां द्वेष्यप्रियाः सर्वे सङ्गृहीताः । रिपुः सुतो वा यदा धर्मप्रातिकूलौ दण्डविषयौ स्यातां तदा तुलासम्मितेनैव तयोः समं प्रयुक्तेन दण्डेन धर्ममभिरक्षतीति भावः । यथोचितं प्रयुज्यमानस्यापि दण्डस्य लोभाद्युपाधिसद्भावे धर्मसाधनत्वमानुषङ्गिकमनैकान्तिकं चेति शङ्कां निरस्यति — वसूनीत्यादिना । वसूनि वाञ्छन् न । वसूनि धनानि । जातौ

१. 'द्वि', २. 'द्विषां वा', ३. 'करस्य दण्ड', ४. 'करत्वं' क. पाठः.
५. 'ते वेत्यर्थः । रि', ६. 'ण वा सु', ७. 'ण बापी' ख. पाठः.

बहुवचनम् । 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्' (१. २. ५८) इति । वाञ्छन्नित्यत्र 'लक्षणहेत्वोः क्रियायाः' (३. २. १२६) इति हेतौ शतृप्रत्ययः । तस्य दण्डस्य प्रयोगे वसुवाञ्छा न हेतुरिति भावः । नापि क्रोधजो दण्ड इत्याह — न मन्युनेति । अत्र मन्युशब्दः क्रोधार्थः । तस्य दण्डप्रयोगे मात्सर्यविपर्ययज्ञानादि च कारणान्तरं न शङ्कनीयमित्याह— निवृत्तकारण इति । प्रतिसंबन्ध्याकाङ्क्षी कारणशब्दः सन्निहितं योग्यं च दण्डं प्रतिसंबन्धितया प्रत्याययतीति निवृत्तदण्डकारण इति लभ्यते । अत्यल्पमिदमुच्यते न लोभेन न मन्युना वा स दण्डं प्रयुङ्क्त इति, यानि यानि मात्सर्यादीनि लोकसिद्धानि दण्डकारणानि तानि तानि स्वयमेव तस्मान्निवृत्तानि न तेन विमुक्तानीति भावः । तस्य लोभाद्यनाक्रान्तत्वे हेतुमाह — वशीति । मनआदीनीन्द्रियाणि वशयति स्ववशानि करोतीति वशी । आपाततो हिंसात्मकतया प्रतीतं दण्डं दयाभासेनाधर्मं मन्यमानो गुर्वादिप्रेरणेन यदि स प्रयुञ्जीत प्रतिपत्तिदूषितः स दण्डस्तस्य धर्मसंप्लवोन्मूलने कारणं न स्यादिति शङ्कामपाकरोति — स्वधर्म इत्येवेति । स्वो धर्मः स्वधर्मः । स्वशब्देन दण्डस्याकरणे प्रत्यवायहेतुत्वं द्योत्यते । तेन क्षत्रियजात्यसाधारणो दुष्टदमनरूपो दण्डाख्यो धर्मः क्षत्रियेणावश्यानुष्ठेय इति लभ्यते । स्वधर्म इतीत्युक्त्यैव स्वधर्म इत्यवगम्येति गम्यते । तथाहि — यस्मात् पर इतिशब्दः प्रयुज्यते तदर्थविषयावगतिस्तद्विषयोक्तिर्वा तदा प्रतीयते । अत्र तु स्वधर्मतयावगतो दण्डो धर्मसाधन इत्यौचित्येनेतिशब्दः स्वावच्छेद्यमवगमं दण्डधारणत्वेनाक्षिपतीत्यवगम्येति न साक्षादुक्तम् । अर्थसिद्धस्य क्रियादेरनुक्तिरेव शोभते । "अकृत्वा परसन्तापमगत्वा खलनम्रताम् । अनुत्सृज्य सतां मार्गं यत्स्वल्पमपि तद्बहु ॥" इत्यादिर्भूयान् प्रयोगः । दण्डकर्तव्यतावगमस्याधर्मसंशयकृतामकर्तव्यतावगममिश्रतामेवकारो व्यावर्तयति । अर्थग्रहणरूपे दण्डे लोभो दृष्टकारणं, वधे मन्युः, परिक्लेशे मात्सर्यादीति कारणत्रयनिषेधेन तस्य त्रिविधोऽपि दण्डो नोपाधिदूषित इति द्योत्यते । वसूनां त्रिवर्गसाधनत्वादनुचितविषयत्वेऽपि तद्वाञ्छाया दोषत्वाप्रतिभानात् सततं मनस्यनुस्यूतायास्तस्या नियमनं दुष्करतरम् । कोपस्य कादाचित्कस्य सकलकुत्स्यमानस्य नियमनं तथा न दुष्करमिति लोभक्रोधयोर्विशेषं द्योतयितुं कर्त्रन्तर्गतत्वेनान्त-

---

१. 'न म' ख. घ. पाठः. २. 'णं इया' [illegible] 'ऽसाधा' ख. पाठः.

रक्तया वसुवाञ्छायाः कर्तृत्वकल्पं हेतुत्वं शतृप्रत्ययेन द्योतितम्। कोपस्य हेतुत्वमात्रं तृतीयया प्रत्यायितमित्यर्थभेदोऽस्ति। तेन रीतिभङ्गो न शङ्कनीयः। मायोपेक्षेन्द्रजालानामप्युक्तेषु सामादिष्वेव यथोचितमन्तर्भावं महाकविर्मन्यते ॥ १३ ॥

सुहृन्मध्यस्थशत्रवस्त्रय एव लोके सामाद्युपायविषयाः प्रतीयन्ते, अनुकूलेन प्रतिकूलेन वा कर्मणा तेषां साधनीयत्वेन बाधनीयत्वेन वा प्रतीतेः। उदासीनास्त्वप्राप्तसंबन्धद्वारा स्मृतिपदवीमपि नावतरन्ति। तेन तद्विषयस्तस्योपायप्रयोगो न स्यादिति शङ्कां निरस्यति विभज्य रक्षामित्यादिना —

विभज्य रक्षां परितः परेतरान-
शङ्किताकारमुपैति शङ्कितः।
क्रियापवर्गेष्वनुजीविसात्कृताः
कृतज्ञतामस्य वदन्ति सम्पदः ॥ १४ ॥

स इति पूर्वस्मादनुषज्यते। स परेतरानुपैति परेभ्यः शत्रुभ्यः इतरानुदासीनान् आत्मविषयस्नेहद्वेषरहितानुपैति उपगच्छति। सामाद्युपायैर्वशीकर्तुमिति लभ्यते। उपैतीत्युक्तम्। न समाहूयावर्जयतीत्यादि। तेन तस्य तन्द्रीस्तब्धतादिदोषाभावः क्रियाफलसिद्धिश्च सूच्यते। महाराजस्य स्वयमुपगमेन वशीकृता राजानः सामाद्युपायैः सुजयाः स्युरिति। ते तु परोपजप्ता यदि स्युस्तं विश्वस्तोपगतं छिद्रेषु प्रहरेयुरिति तस्य प्रमादित्वं स्यादिति चेन्नेत्याह — परितो रक्षां विभज्येति। पार्श्वयोः पुरतः पृष्ठतश्च रक्षायै ये विभज्य नियुक्ताः स्वे विधेयाः, रक्षा तैः सदा क्रियत एवेति द्योतयितुं विभज्य (रक्षां) इत्युक्तं, न रक्षिणो विभज्येति। विभागेन नियमिताः शस्त्रिणस्तदा तदा तासु तासु दिक्षु तिष्ठन्तो रक्षन्तीति रक्षा स्थिरतरेति द्योतयितुं विभज्येत्युक्तं न विधायेति। विवेकपूर्वक एव रक्षाविभागो न यादृच्छिक इत्याह[3] — शङ्कित इति। कर्माविवक्षायां कर्तरि क्तप्रत्ययः। परोपजप्ताश्चेदेते न श्रद्धेया इति शङ्कितवानित्यर्थः। अन्वयव्यतिरेककुशलैः अवहितैस्तस्य तादृशी शङ्का-

---

१. 'मभिगमेनाभिमुखीकृ', २. 'मादादिकं स्या' क. ग. घ. पाठः. ३. त्या- 'शङ्कयाह', ४. 'यां क्त' घ. पाठः.

नुमीयत इत्यभिप्रायः। शङ्कितमेते त्वतिशङ्केरन्निति न सामादिसाध्याः स्युरित्याशङ्क्याह— अशङ्किताकारमिति। एतत् क्रियाविशेषणम्। अशङ्किताकारमुपैति। आकारग्रहणमुपलक्षणमिङ्गितचेष्टादेः। आकार इङ्गितं चेष्टा वा। यथा तैर्न शङ्किताः स्युः तथा तानुपैतीत्यर्थः। उदासीनान् परेतरशब्देन ब्रुवंस्तत्स्वभावज्ञानोपायं द्योतयति। परेतरशब्देन परे शत्रवस्तद्विपरीताः सुहृन्मध्यस्थाश्च व्यावर्त्यन्ते। प्रतिकूला रिपूणां चेष्टा, अनुकूला सुहृन्मध्यस्थानां, तदुभयविलक्षणा परेतरेषाम् इति चेष्टया तानवगम्य वशीकर्तुं प्रवर्तत इत्येतदनेन द्योत्यते। ननु निशीथादिकालेषु कार्यवशादतर्कितोपनते परेतरगमने रक्षायां विभज्य नियुक्तानामप्यनुजीविनां कथं सन्निधिः स्यादित्यत्राह — क्रियापवर्गेष्वित्यादि। क्रियापवर्गेष्वनुजीविसात्कृताः सम्पदोऽस्य कृतज्ञतां वदन्ति। अपवर्गः फलप्राप्तिः। अनुजीविभिः क्रियमाणानां क्रियाणां फलप्राप्तिषु सर्वासु, न कुत्रचित्क्रियाफलप्राप्तौ तदभावे वा। अनुजीविसात्कृताः अनुजीव्यधीनाः कृताः। ते स्वेच्छया भोक्तुं शक्या इति लभ्यते। अनुजीविसात्करणे कर्तृतया प्रकरणेन सुयोधन एवाक्षिप्यते। सम्पदो धनधान्यादिसमृद्धयोऽस्य कृतज्ञतां वदन्ति स्फुटमवगमयन्तीत्यर्थः। कृतज्ञेनानेन कृतसम्मानमानातिशयाः सगौरवानुरागाः सर्व एवानुजीविनोऽनादिष्टा अपि स्वयमवहितास्तस्य रक्षाविधिं तदा तदा कुर्वन्तीत्यभिप्रायः। अनुकूलेभ्योऽनुजीविभ्यस्तेन दत्ताभिः सम्पद्भिस्तस्य कृतज्ञतामवगम्य स्वयमुपेत्य सामादि सम्यक् प्रयुञ्जानस्याऽस्य सम्राजस्तेऽनुकूलतया भवन्तीत्ययं चार्थोऽनेन वचनेन ध्वन्यते। 'तदधीनवचने च' (५. ४. ५४) इति सातिप्रत्ययः॥ १४॥

सामादीन् सम्यक् प्रयुञ्जानस्य तस्य प्रभूतेन क्रियाफलेन दैवानुकूल्यमप्यनुमीयत इत्याह अनारतमित्यादिना —

अनारतं तेन पदेषु लम्भिता
विभज्य सम्यग्विनियोगसत्क्रियाः।

---

१. 'त्यर्थः । श' घ. पाठः. २. 'न्द्रियचे', ३. 'ष्टा य' क. ग. घ. पाठः. ४. 'श्च प्र', ५. 'षां चेष्टेति', ६. 'ते । तेन नि', ७. 'त्य सम्य' ख. पाठः.

फलन्त्युपायाः परिबृंहितायती-
रुपेत्य संघर्षमिवार्थसम्पदः ॥ १५ ॥

उपाया अनारतमर्थसम्पदः फलन्ति । अर्थानां धनानां मणिहिरण्य-हस्त्यश्वादीनां सम्पदः समृद्धीः फलन्ति भोग्याकारेण निष्पादयन्तीत्यर्थः । कीदृशीरर्थसम्पदः । परिबृंहितायतीः परिबृंहिता वर्धिता आयतिः शाश्वतमनुब-न्धि[1] फलं याभिस्तास्तथोक्ताः । शक्त्यतिशयद्योतकेन तस्य तदात्वफलस्यो-च्छ्रयेण करशुल्कादेर्नवनव उपचयो जायत इति भावः । अनारतमविरतमवि-च्छिन्नमित्यर्थः । तेनोपायानामर्थसम्पत्फलने कालविलम्बनं प्रतिहतिश्च ना-स्तीति द्योत्यते । कीदृशा उपायाः । तेन पदेषु विभज्य सम्यग्विनियोगसत्क्रिया लम्भिताः । पदेषु स्थानेषु सुहृदादिषूपायविषयेष्वित्यर्थः । विभज्येति अस-म्बन्धिनामुपायान्तरसंम्बान्धिनां चेतिकर्तव्यतादीनामसंकरो विभागः, तं कृत्वे-त्यर्थः । सुष्ठुप्रयोगाः सम्यग्विनियोगाः, त एव सत्क्रियाः पूजा इति समा-नाधिकरणस्तत्पुरुषः । लम्भिताः प्रापिताः । सत्क्रिया इति द्वितीयाबहुवचनम् । लम्भिता इत्युपायविशेषणम् । 'कर्तुरीप्सिततमम्—' (१. ४. ४९) इति सत्क्रियाणां कर्मत्वम् । उपायानां तु 'गतिबुद्धि—' (१. ४. ५२) इत्यादिना । सत्क्रियागतं कर्मत्वं द्वितीययोच्यते । तिङादिभिरनभिधानात् । उपायगतं तु न, निष्ठाप्रत्ययेनाभिधानात् । 'ण्यन्ते कर्तुश्च कर्मण' इति वचनात् । मृदु-दारुणमध्यमेषूपायेषु कश्चिदपि न न्यूनफल इत्याह — संघर्षमुपेत्येवेति । संघर्षः स्पर्धा । स्पर्धया पृथक् पृथगुपायानां फलप्रकर्षेण मिथस्सङ्घर्ष उत्प्रे-क्ष्यते । अचेतनेषूपायेषु चेतनधर्मस्य संघर्षस्यारोपणादुपायानामनुजीविसाम्यं द्योत्यते । यथा ह्यनुजीविनः सेनापतित्वादिषु पदेष्वधिकारेषु सम्यग्विशिष्ट-नियोगरूपां सत्क्रियां लम्भिता मिथः स्पर्धिनोऽहंपूर्विकया स्वामिनोऽर्थसम्पदः फलन्ति, विषयेषु सम्यक्प्रयोगरूपं सत्कारं प्रापिताः सामाद्युपायाः तथा तस्यार्थसंपदः फलन्तीति भृत्यादिवद् विधेयास्तस्योपाया इत्यभिप्रायः ॥ १५॥

सामाद्युपायप्रयोगनैपुणक्रियाफलप्रकर्षकथनेन विशिष्टा मन्त्रशक्तिरु-त्साहशक्तिश्च तस्यास्तीत्युक्तम् । प्रभुशक्तिरपि प्रभूता तस्यास्तीत्याह अनेके-त्यादिना —

---

१. 'न्धि या' क. पाठः. २. 'न तदा' क. ग. घ. पाठः. ३. 'असंकीर्यवि-षया' ख. पाठः.

अनेकराजन्यरथाश्वसंकुलं
तदीयमास्थाननिकेतनाजिरम् ।
नयत्ययुग्मच्छदगन्धिरार्द्रतां
भृशं नृपोपायनदन्तिनां मदः ॥ १६ ॥

नृपोपायनदन्तिनां मदः तदीयमास्थाननिकेतनाजिरं भृशमार्द्रतां नयति। नृपाणामुपायनानि प्राभृतानि नृपोपायनानि । नृपोपायनान्येव दन्तिनो नृपोपायनदन्तिनः तेषाम् । नृपैरुपायनत्वेन दीयमानानां द्विपानामित्यर्थः । दन्तोद्भेद[1]द्योतनद्वारेण द्विपानां यौवनोद्भवं मदबलविजृम्भणमधृष्यताविशेषं च व्यञ्जयितुं दन्तिनामित्युक्तं न हस्तिनामिति। मदशब्देन मदोदये द्विपकटो[2]द्भूतं वारि लक्ष्यते मदस्य दानाम्बुनिष्यन्द[3](नियत?)हेतुत्वनियमं द्योतयितुम् पौरजानपदादीनामभिमुखमात्मानं प्रकाश्य सम्राजः स्थितिरास्थानं तत्संबन्धिनो निकेतनस्य गृहस्याजिरमङ्गणम् आस्थाननिकेतनाजिरम् । अजिरस्य तदीयत्वमुक्तं न निकेतनस्य । तेन तदधिष्ठितायां सभायामिव सभासन्निकृष्टे कुट्टिमेऽपि सर्वे जना निभृततरास्तिष्ठन्तीति तस्याधृष्यताविशेषो द्योत्यते । कीदृशो मदः । अयुग्मच्छदगन्धिः । अयुग्मच्छदशब्देन सप्तच्छदपुष्पमिह विवक्ष्यते । तस्य गन्ध इव गन्धोऽस्येत्यर्थे 'सप्तम्युपमाने—' इत्यादिना बहुव्रीहिः । 'उपमानाच्च'(५. ४. १३७)इतीकारः । अनेनोपायनदन्तिनां मदगन्ध एव बलसंरम्भविक्रमादिवत् प्रतिद्विपत्रासहेतुरिति द्योत्यते । भृशमित्यनेन मदप्रवाहस्थगितभूतले स्खलज्जला जनाः सञ्चरन्तीति द्योत्यते । कीदृशं तदजिरम् । अनेकराजन्यरथाश्वसंकुलम् । अनेकेषां बहूनां नानादिग्देशागतानां नानावंशजानाम् अङ्गवङ्गकलिङ्गादीनां सम्राजं कुरुपतिं सेवमानानां दिदृक्षमाणानां च समागतानां राजन्यानाम् आभिजात्यबलविक्रमादिभिर्गुणैः प्रशस्यतमानां राज्ञां रथैरश्वैश्च संकुलं ससंबाधम् अविरतं विसरत्परागपूरमित्यर्थः । महाराजौपवाह्यं [4]गजमधिरूढः कश्चिदपि राजा तत्र नागत इति तस्याधृष्यताविशेषं द्योतयितुमनेकराजेभरथाश्वसंकुलमिति नोक्तम् । तद्दृष्टिपातमा-

१. 'दनद्यो', २. 'टोद्भेदोद्भ' ख. पाठः. ३. 'न्दनीयहे' ४. 'रथम' क. ग. घ. पाठः.

त्रावधि तत्र तत्र तिष्ठतामुपायनदन्तिनां मदस्तमजिरं भृशमार्द्रतां नयतीत्यनेनोपायनदन्तिनामनन्तत्वं द्योत्यते। कृच्छ्रलभ्यतत्परिवारदृष्टिपातप्रसादैः प्राकृतजनैरशक्यप्रवेशं तदास्थानगृहाजिरं परार्ध्यप्राभृतभृतो भूभृत एव प्रविशन्ति। तेऽपि तद्दर्शनावसरं प्रतीक्ष्य सप्राभृतास्तिष्ठन्तीत्यद्भुता तस्य प्रभुशक्तिरिति नृपोपायनदन्तिशब्देन द्योत्यते। सोपायना नृपास्तत्सभाजिरे तिष्ठन्तीत्यनेनैव तस्य प्रभुशक्तौ प्रतीतायामनेकराजन्यरथाश्वसंकुलमिति विशेषणेनैतद् द्योत्यते अभिमानिनो नृपाः सुयोधनाय स्वयमुपायनप्रदानमनुचितं मन्यमानाः कुलशीलशौर्यादिभिः प्रशस्यतमान् राज्ञः पूर्वमेव तत्सेवायै तत्र समागतान् समन्ततो निरीक्ष्य कुरुपतिदृष्टिपातविषयत्वमात्मनः श्लाघ्यतरमेवामन्यन्तेति॥१६॥

उपायप्रयोगफलं शक्तित्रयं तस्यास्तीत्युक्तम् । उपायविनियोगनैपुणायत्तजनपदादिरक्षासमृद्धिविधानाधीनो जनानुरागश्च तस्यास्तीत्याह सुखेनेत्यादिना —

> सुखेन लभ्या दधतः कृषीवलै-
>
> रकृष्टपच्या इव सस्यसम्पदः ।
>
> वितन्वति क्षेममदेवमातृका-
>
> श्चिराय तस्मिन् कुरवश्चकासति ॥ १७ ॥

तस्मिन् क्षेमं वितन्वति कुरवश्चिराय चकासति । आर्जितस्य धनधान्यादेः पालनं क्षेमम् । तस्मिन् सुयोधने तद् वितन्वति विविच्य तत्र तत्र कुर्वति । कुरुशब्देन कुरुराज्यमिह विवक्ष्यते । कालदैर्घ्यद्योतकं चिरायेत्यव्ययम् । सुयोधनकृतक्षेमजनिता कुरुराज्यशोभा पुनः कालान्तरेऽपि यथा न विरंस्यति तथा कुरवश्चकासति, शोभन्त इत्यर्थः । वितन्वतीत्यत्र 'यस्य च भावेन भावलक्षणम्' (२. ३. ३७) इति सप्तमी । क्षेममात्रकरणं तस्योक्तम् । न योगक्षेमकरणम् । तेन स्फीतोत्साहसमृद्धयः स्वयमेव लब्धयोगाः कुरवो राजायत्तं क्षेममात्रमपेक्षन्त इति जनपदसमृद्धिः सूच्यते। कीदृशाः कुरवः।

---

१. 'दज्ञातिर' क. ग. घ. पाठः.

अदेवमातृकाः प्राणिनामाप्यायकं पयः पयोधरमुखेन प्रस्नुवन् पर्जन्यो देवो माता येषां ते देवमातृकाः। 'नद्यृतश्च' (५. ४. १५३) इति कप् समासान्तः। तथा चोक्तं—'वृष्ट्यम्बुजीवनो[1] देशो देवमातृक उच्यते'। न देवमातृका अदेवमातृकाः। नञत्र विरुद्धार्थोऽन्यार्थो वा। अशुष्यदगाधाम्बुपरिपूर्णसरित्सरस्तटाकादयो नित्यरसवत्केदारभूमयो वृष्ट्यनपेक्षितसस्यादिसम्पत्तय इत्यर्थः। नदीमातृकशब्दोक्तौ जलसद्भावमात्रं प्रतीयते न रसवत्त्वादिः क्षेत्रगुणः। तत्सर्वं प्रत्याययितुमदेवमातृका इत्युक्तम्। पुनश्च कीदृशाः कुरवः। सस्यसम्पदो दधतः सस्यानां व्रीहियवगोधूमादीनां सम्पदः समृद्धीर्दधतः धारयन्तः पोषयन्तो वा। कीदृशीः सस्यसम्पदः कृषीवलैः सुखेन लभ्याः। कृषीवलैः कर्षकैः सुखेनाकृच्छ्रेणानतिप्रयत्नेन लभ्याः लब्धुं शक्याः। य एव सस्यनिष्पत्तये कर्षणवृतिकरणसेचनादिप्रयत्नं कुर्वन्ति त एव यथास्वं सस्यं लभन्ते, न दस्युचोरराजपुरुषादय इति द्योतयितुं जनपदे कर्तरि सिद्धे कृषीवलैरिति[2] कर्तृविशेषोक्तिः। अकृष्टपच्यत्वोत्प्रेक्षणेन सस्यसम्पदामकृच्छ्रलभ्यत्वं द्रढयति। अकृष्टपच्या इवेति[3]। हलैः कृष्टे क्षेत्रे कालेन प्ररोहप्रभृति पच्यन्त इति कृष्टपच्याः न कृष्टपच्या अकृष्टपच्याः, कर्षणादिना विना तृणनीवारादिवत् पच्यमाना इत्यर्थः। अनेनैव श्लोकेन कुरूणां ज्ञातीनां तस्मिन्ननुरागोऽपि द्योत्यते। तस्मिन् क्षेमं वितन्वति कुरवश्चिराय चकासति। मागधादिभ्यो रिपुनृपतिभ्यो रक्षा क्षेमशब्देनात्र विवक्ष्यते। कुरवः सोमदत्तादयो ज्ञातयः। देवशब्देन प्राणिपुण्यापुण्यफलदं दैवमिह विवक्ष्यते। स देवो माता मातृवद् भृतिगुप्त्यादिकरो येषां ते देवमातृकाः। न देवमातृका अदेवमातृकाः। सम्राजस्तस्य पौरुषेणैव क्रियमाणेषु भृतिगुप्त्यादिषु तदर्थं दैवमप्यनपेक्षमाणा इत्यर्थः। तस्मिन् क्षेमं वितन्वत्यपि प्रातिस्विक्यः सम्पदः स्वेच्छाभोग्या न चेदनुजीविभावभावनया कुरूणामपराग एव भवेद्, नानुराग इत्याशङ्क्याह—सस्यसम्पदो दधत इति। सस्यसम्पद इत्युपलक्षणं मणिहिरण्यादिसम्पदाम्। कृषीवलैः सुखेन लभ्या इति, सुयोधनोपेक्षाकृतः परस्परविरोध-

---

१. 'पालितो दे' क. पाठः. २. 'ति वि' क. ग. घ. पाठः. ३. 'ति। कु' ख. पाठः. ४. 'नेह वि' क. ग. घ. पाठः. ५. 'स्नेहश',

कृतौ[1] वा सस्यादिलाभेन व्यासङ्ग इति कृष्याद्यधिकृतपुरुषव्यापारमात्रसाध्या इत्यर्थः। अकृष्टपच्या इवेत्यल्पीयसि प्रयत्ने फलभूयस्तया क्षेत्रपतीनां कुरूणाम-परतन्त्रतया च राज्यान्तरजैः कर्षकैः स्पृहणीयसम्बन्धा इति भावः। जन-पदान्तर्भूतं नगरमिति वा विप्रकृष्टानां जनपदानां क्षेमकृतानुरागद्योतनेन सन्निकृष्टानां नागराणां तादृशोऽनुरागो द्योतित इति वा नगरक्षेमविधानं तत्फलं च समृद्ध्यादि पृथङ् न कथितम्। धर्मार्थानुगुणेन तत्कृतेन रक्षणेन कुरु-जाङ्गलजनाः[3] कुरवश्च ज्ञातयस्तस्मिन्ननुरक्ततरा भवन्तीति तात्पर्यार्थः। 'रजः-कृष्यासुतिपरिषदो वलच्' (५. २. ११२) इति कृषिशब्दाद् मत्वर्थीयो वलच्प्रत्ययः। 'वले च' (६. ३. ११८) इतीकारस्य दीर्घः। 'राजसूय—' (३. १. ११४) इत्यादिना कृषोपपदात् पचेः क्यप्प्रत्ययो निपातितः॥ १७॥

तेन रक्ष्यमाणं कुरुराज्यं कुरुभिः सह कामं तद्वशगं स्यात्। विषया-न्तरकान्तारगिरिगहनादिवासिनः स्वैः स्वैरधिपतिभिः परिपाल्यमाना मनुजाः कथं तद्वशगाः स्युरिति। तत्राह—

उदारकीर्तेरुदयं दयावतः
प्रशान्तबाधं दिशतोऽभिरक्षया।
स्वयं प्रदुग्धेऽस्य गुणैरुपस्नुता
वसूपमानस्य वसूनि मेदिनी॥ १८॥

उदारेत्यादि। अस्य गुणैरुपस्नुता मेदिनी वसूनि स्वयं प्रदुग्धे। मेदिनीशब्देन मेदिनीमण्डलवर्तिनो मनुजा लक्ष्यन्ते, मेदिन्यधिदेवता वा। प्रदुग्ध इति दोहनकर्मभूता मेदिनी दोहनस्य सौकर्यविवक्षया दोहनकर्तृ-त्वेनोच्यत इति कर्मकर्तरि लकारः। स्वयंशब्देन च तद् द्योत्यते। दोहनस्य प्रभूतत्वं प्रशब्दो द्योतयति। किं दण्डभयेन मेदिनी वसूनि स्वयं प्रदुग्ध इति। नेत्याह—अस्य गुणैः उपस्नुतेति। अस्य प्रत्यक्षवदखिलैरनुभूयमा-नस्य। गुणैः प्रशंसाहेतुभिर्धर्मैर्माधुर्यदाक्षिण्यादिभिः। उपस्नुता आर्द्रीकृता। ननु सूरय एव गुणमात्रेण प्रीयन्ते, दुर्जनास्तु स्वार्थानुगुणैर्गुणैरिति सकल-मेदिनीजनस्नेहहेतुः कस्तस्य गुण इति। तत्राह—उदयं दिशत इति। आका-

---

१. 'तः स', २. 'इत्य' क. पाठः. ३. 'ञानां कु' क. घ. पाठः.
४. 'पर्षदो', ५. धेत्वम्। रा' क. पाठः.

ह्लादिभिर्हेतुभिर्दिशतेः सम्प्रदानं मेदिनीति लभ्यते। देयस्यार्थिसात्क-रणरूपं दानं वदता दिशतिना उदयस्याभूतपूर्वत्वं द्योत्यते। तेन मेदिन्यां तस्य तात्पर्यातिशयः। स्वयमुदेतुमशक्तानां दीनानां जनानां दुर्गतिवि-शेषमवगम्य तत्तद्दुर्गतिविघातिनीं सम्पदं स्वयमेव कुरुराजसुतः करोतीति भावः। वसुवर्षणेन मेदिनीजनस्योदयसम्पादने तस्य कोशक्षयः प्रभूतः स्यादिति, तत्राह — अभिरक्षया प्रशान्तबाधमिति। आभिमुख्याव्यवहितया पृथक् पृथक् प्रतिरक्ष्यं क्रियमाणया रक्षया। प्रशान्ता भृशं शान्ता पुनर्यथा नोद्भवेत् तथोपरता बाधा यस्य सः प्रशान्तबाधः तम्। रक्षया स्वयमेव बाधा प्रशान्ता, न तत्प्रशमार्थं पुनस्तस्य प्रयत्नान्तरापेक्षेति द्योतयितुं प्रशा-न्तबाधमित्युक्तं, न परास्तबाधमित्यादि। दायादादिप्रबलविरोधजनितया बाधया यथास्वं क्षेत्रधनादि भोक्तुमशक्तेषु जनेषु रक्षाविधानेन तां तां बाधां प्रशमयन् सुयोधनो नवमुदयं दिशन्निव जनानां प्रीतिं जनयतीति भावः। किं स्वार्थसिद्ध्यर्थं जनानामुदयं दिशति। नेत्याह — दयावत इति। दीना-ननाथानुपकारविषयान् प्रति योगक्षेमाधानरूपमुपकारं स्वार्थानपेक्षया प्रयो-जयन्ती चित्तवृत्तिर्दया, तद्वतः। अनुकम्पयैव मनुष्यमात्रविषये योगक्षेमं कु-र्वत इत्यर्थः। यद्यप्यसौ प्रतिभानावधानोत्साहभूयस्त्वेन दयामात्रप्रयोज्य-मानो मनुष्यविषये योगक्षेममेव कुर्यात् तथापि कथं सर्व एव जनास्तत्कृते तथा प्रतीयुरिति, तत्राह — उदारकीर्तेरिति। उदारा महती कीर्तिर्यस्य स उदारकीर्तिः। तस्यासाधारणैर्गुणकर्मभिः सकलजनैः प्रशस्यमानतया कुरुविषय इव जलधिद्वीपादिष्वपरोक्षवदवभासमानस्येत्यर्थः। यद्यसावनुग्रह-शीलो दण्ड्येष्वपि दयावत्त्वादनुग्रहमेव कुर्यात्, ततोऽस्य दोषसंस्पर्शः स्यादिति, तत्राह — वसूपमानस्येति। उपरिचरश्चेदिराजो वसुः प्रसिद्धः। स उपमानं यस्य स वसूपमानः तस्य। धर्मातिशयलब्धेन विमानेन नभसि चरन् उपरिचरो वसुर्धर्मिष्ठतया प्रसिद्धः। स हि महानुभावेषु सकलनिग्रहानुग्रहसमर्थेषु देवैः सह विवदमानेषु सत्यधर्मस्खलितेषु महर्षिषु परमार्थं पृच्छत्सु तदनिष्टमपि धर्म्यं सत्यमेवोक्तवानिति श्रूयते। अन्तः-स्थितस्य क्षीरस्य वत्सदर्शनादिना निमित्तेन स्तनमुखं प्रत्याकर्षणं मुख्यं स्न-

१. 'स्वेन प्र' ख. पाठः।

वनं गोक्रियात्वेन प्रसिद्धम्। तदत्र मेदिनीक्रियात्वेन प्रयुक्तममुख्यं स्नवनं मेदिन्या गोत्वारोपं द्योतयति। तस्य क्षीरस्यासंजातपीडं गोपालादिना स्तनमुखान्निस्सारणं मुख्यं दोहनम्। आरोपितगोपत्वभूपतिक्रियात्वेन वक्तव्यममुख्यं दोहनमत्र सौकर्यातिशयविवक्षया मेदिनीक्रियात्वेनोक्तम्। माधुर्यदाक्षिण्यादिभिस्तस्य गुणैरार्द्रीकृतहृदयाया मेदिन्याः स्वाभ्यन्तरस्थितानां वसूनां तस्मै देयत्वेनाध्यवसानं स्नवनत्वेनारोप्यते। पुनस्तदुद्भवाप्रतिबन्धेन तेन तस्या वसूनां निस्सारणममुख्यं दोहनं तद् भूपतिकर्तृकमपि सुकरतरमिति द्योतयितुं मेदिनीकर्तृकत्वेनोक्तम्। तद्गुणानुरञ्जिता मेदिनी स्वयमेव तस्मै प्रतिदिवसं स्वाभ्यन्तरस्थितान्यपि वसूनि दिशतीति तात्पर्यार्थः। यथा तृणकम्बलादिभिः शरीरपोषणं दिशता दंशादिभ्यो रक्षता दयावता प्रशस्तेन गोपालेन स्नेहस्नुतपयोधरा सुरभिः सुखेन पयो दुह्यते, तथा करमार्दवादिभिः परिपोषं दिशता दस्युचोरादिभ्यो रक्षता तेन गुणानुरञ्जिता मेदिनी सुखेन वसूनि दुह्यत इत्युपमालङ्कारोऽत्र द्योत्यते। 'दुहिपच्योर्बहुलं सकर्मकयोः' (वा० ३. १. ८७) इति दुहेः कर्मकर्तरि सकर्मकत्वस्य विकल्पनाद् वसूनीति कर्म प्रयुक्तम्। 'न दुहस्नुनमां यक्चिणौ' (३. १. ८९) इति यक्प्रतिषेधः। 'कर्तरि कर्मव्यतीहारे' (१. ३. १४) इत्यत्र कर्तृग्रहणस्य 'शेषात् कर्तरि परस्मैपदम्' (१. ३. ७८) इत्यत्रानुवर्तनात् कर्तरि परस्मैपदं विहितं, न कर्मकर्तरि। तेन प्रदुग्ध इत्यत्र कर्मत्वोपाधिकमात्मनेपदमेव, न कर्तृत्वोपाधिकं परस्मैपदम् ॥ १८ ॥

नन्वसावनुग्रहशीलतया कामं जनानामनुरागविषयोऽस्तु। बलवद्वीरयोधपरिवारविरहितश्चेदसौ सुयोधनो धीराणां[३] भयबहुमतिहेतुर्न स्यादिति सपत्नविषयविजयहेतुरावापस्तेन न सुकरः स्यादिति, तत्राह—

**महौजसो मानधना धनार्चिता**
**धनुर्भृतः संयति लब्धकीर्तयः।**
**न संहतास्तस्य न भेदवृत्तयः**
**प्रियाणि वाञ्छन्त्यसुभिः समीहितुम् ॥ १९ ॥**

**महौजस** इत्यादि। धनुर्भृतोऽसुभिस्तस्य प्रियाणि समीहितुं वाञ्छन्ति। आयुधानां प्रधानं धनुरिति धनुश्शब्देनायुधभेदोऽत्र लक्ष्यते धनुर्वेद इति,

१. 'स' क. पाठः. २. 'रमि' क. ग. घ. पाठः. ३. 'वी' ख. पाठः.

तेनायुधप्रधानं धनुरभिदधानेन धनुश्शब्देनायुधजातिरुपलक्ष्यत इति धनुर्भरणोक्त्या धनुरादिशस्त्रश्रमकृतः शिक्षादाक्ष्यातिशयो द्योत्यते। तेन धनुर्भृच्छब्दः समस्तशस्त्रशिक्षितेषु योधेषु वर्तते। योधानां धनुरविनाभावं द्योतयता धनुर्भृच्छब्देनैवातर्कितोपनतेषु युद्धेषु सुकरसन्नाहास्त इति च द्योत्यते। शिक्षाभ्यासनैपुणावधानवन्तोऽपि बलवीर्याभावे सुदुष्करयुद्धारम्भेषु सहसा चकिताः स्युरिति, तत्राह — महौजस इति। ओजःशब्दो बलवीर्यवाची। महती सकलातिशायिनी ओजसी बलवीर्ये येषां ते महौजसः। महौजसोऽपि प्रतापाभावे परेषां न भयहेतवः स्युरिति, तत्राह — संयति लब्धकीर्तय इति। भयङ्करचतुरङ्गबलसङ्कुले शौर्यामर्षनिकर्षे संयति युद्धे दुर्जयजयादिना लब्धकीर्तयः द्विगुणं प्राप्तयशसः (सःस्व)शिक्षाभूमौ[2] लक्षभेदनादिलाघवेन ख्याताः स्वनामश्रवणेनैव चकितारिवीरा इत्यभिप्रायः। शिक्षाभ्यासबलवीर्यप्रतापेषु सत्स्वपि तात्पर्याभावे कार्यं न साधयेयुरिति, तत्राह — धनार्चिता इति। अर्घ्यादिस्थानीयेन धनेनार्चिताः, संमान्य दत्तधना इत्यर्थः। न साम्नैव न दानेनैव किन्तु सामदानाभ्यां तेन वशीकृतास्तस्मिन्ननुरक्ततरास्तत्कार्यमात्मकार्यमेव मन्यमाना इति भावः। यदि सम्मानदानकृतं[3] तेषां तत्कार्येषु तात्पर्यं, तर्हि सातिशयसम्मानदानप्रयोक्तृभिः शत्रुभिरपि ते हार्याः स्युरिति, तत्राह — मानधना इति। सर्वावस्थासु परान् प्रत्यनम्रताहेतुर्मानो नाम गुणः, स धनं येषां ते मानधनाः। यथा प्राकृतजना धनरक्षार्थं धनविरोधिनं मानं त्यजन्ति, तथा मानिनो मानरक्षार्थं मानविरोधि धनं त्यजन्ति। ततस्ते परेषां सम्मानदानादिभिः कथं वश्याः स्युरित्यभिप्रायः। तेष्वनेकेष्वनेकबुद्धिषु एकैकस्य विशेषेण तत्कार्यं प्रति तात्पर्याभावे संहत्य वयमस्य कार्यार्थं यतेमहीति बुद्धिः स्यात्। तदा तत्कार्यं प्रति तेषां माध्यस्थ्यमौदासीन्यं वा स्यादिति। तत्राह— न संहता इति। तत्कार्यसाधने स्ववर्गसाहित्यं नापेक्षन्ते। अहमेवास्य प्रियाणि साधयेयामिति पृथक् पृथङ् मन्यमाना इत्यर्थः। मिथो निरपेक्षत्वे तेषां स्पर्धया भेदः स्यादिति, नेत्याह — न भेदवृत्तय इति। भेदेन द्विधाभावेन वृत्तिर्व्यापारः शारीरी वाचिकी मानसी च येषां ते भेदवृत्तय इति वैयधिकरण्येन बहुव्रीहिः। गुणादिस्पर्धानिमित्तं शङ्कितं भेदवृत्तित्वं नञा निषिध्यते

---

१. 'सां न शि', २. 'वेधना' क, ग, घ पाठः. ३. 'तेन हा' ख. पाठः.

न पर्युदस्यत इति न भेदवृत्तय इत्युक्तं न स्वभेदवृत्तय इति । भेदवृत्तित्व-निषेधसामर्थ्यादेवाभेदवृत्तित्वं प्रतीयत इति तत् पृथङ् नोक्तम् । तेन सङ्कल्पवचनशयनादिषु मनोवाक्कायव्यापारेष्वभिन्ना इति चार्थः सिध्यति । महौजसो योधा मिथः स्निग्धाश्चेत् संहत्यैनं परिभवेयुः, विरुद्धाश्चेत् तद्विरोधशमनार्थमस्य सततं प्रयत्नः स्यादितीयमपि शङ्का न संहता न भेदवृत्तय इत्यनेन परिहृतैव । ननु स्वार्थपरो लोकः स्वार्थाविरोधेनैव स्वामिनोऽपि प्रियं साधयति । तस्मात् तेऽपि तथेति तस्य नियतं न प्रियान्वेषिण इति शङ्कायामाह — असुभिरिति । स्वप्राणैस्त्यज्यमानैर्यदा तस्य शरीररक्षा वैरिभङ्गो राज्यादिलाभो वा भवेत् तदा तैस्तस्य तादृशानि प्रियाणि कर्तुमिच्छन्ति । तद्वैरिविषयरोषरूषितत्वादगणितदारुणायुधप्रहारवेदनास्तदर्थसाधनाय तृणवत् प्राणानपि त्यजेयुः, किं पुनर्मित्रवित्तादीत्यभिप्रायः । तस्य प्रियाणि समीहितुं वाञ्छन्तीति तेषां मानसी क्रियोक्ता, न पुनरुच्चच्छन्दे वदन्तीति कायिकी वाचिकी वा । तेन नात्मनस्तत्प्रियकारित्वं ख्यापयितुमिच्छन्ति । किन्तु तस्य प्रियाण्यात्मना सम्पाद्यान्यभिसन्धाय सम्यक् सम्पादयन्तीति तेषामुदात्ततातिशयो द्योत्यते । सूक्ष्मेङ्गिताकारज्ञः स युधिष्ठिरप्रणिधिर्निगूढामपि तेषां मानसीं वृत्तिं तथा विज्ञातुं शक्त एव । चराश्चरेक्षणेभ्यो नृपतिभ्यः प्रमाणप्रतिपन्नमेव वदन्ति, न सम्भावितमुत्प्रेक्षितं वा । तथाच महाराजाय युधिष्ठिराय रिपुवृत्तान्तं वक्तुकामेन वाग्मिना वचनोपक्रमे तेनैव प्रणिधिना स्वावगतेः पर्याप्तत्वमुक्तं 'तवानुभावोऽयमवेदि यन्मया निगूढतत्त्वं नयवर्त्म विद्विषामि'ति ॥ १९ ॥

समभिलषिताधिकफलसामाद्युपायप्रयोगो नृपतिशतप्रदीयमानपरार्ध्योपायनप्रवाहो रक्षाविशेषसन्तोषितसगन्धज्ञातिजनपदमेदिनीजनो दुर्वारवीरस्निग्धयोधपरिवारः सन् निखिलानपि नृपतीन् जितानात्मवशान् मन्यमानो धार्तराष्ट्रः कृतार्थम्मन्यतया तत्प्रवृत्तिविशेषावगमाय चरप्रेषणादि न कुर्यात् । ततस्तस्य शत्रुमित्रादिविशेषज्ञानाभावात् प्रमादित्वं स्यादिति शङ्कामपाकरोति — महीभुजामित्यादिना ।

---

१. 'ध' ख. पाठः. २. 'व्यापारवि' क. ग. घ. पाठः. ३. 'राति' ख. पाठः.
४. 'ज्यु', ५. 'जा', ६. 'यौ' क. ग. घ. पाठः.

महीभुजां सच्चरितैश्चरैः क्रियाः
स वेद निःशेषमशेषितक्रियः ।
महोदयैस्तस्य हितानुबन्धिभिः
प्रतीयते धातुरिवेहितं फलैः ॥ २० ॥

स महीभुजां क्रियाः वेद जानाति । क्रियाणां महीभुक्सम्बन्धेन बहुतरत्वं गहनत्वं च द्योत्यते । तथाहि — महीपालनं सचिवपुरोहितादिबहुपुरुषायत्तमिति सचिवादिक्रियाणामविज्ञेयत्वमस्ति । ननु च चक्षुरादीन्द्रियाणि सन्निकृष्टस्यैव विषयस्यावगमे साधनानि, न विप्रकृष्टस्य । चक्षुराद्यनुगतमेव मनो विषयावगतिसाधनं न केवलमिति कैः साधनैरसावेकत्र स्थितो विप्रकृष्टानामनेकदेशवर्तिनां भूपतीनां प्रवृत्तीर्जा[1]नीयादिति, तत्राह — चरैरिति । चराणां करणत्वेन चक्षुरादिवत् स्वाधीनत्वं वेदनस्यानन्यसंक्रान्तिश्च द्योत्यते । वेदनस्य वर्तमानत्वेन चरप्रेषणादिप्रवृत्तेः सातत्यं गम्यते । चक्षुरादीनि हेत्वन्तरसन्निधापितस्य विषयस्यावगमे साधनानि । चरास्तु स्वप्रवृत्त्या विषयसन्निधिमापाद्य तदवगमे साधनानि भवन्तीति चरशब्दशक्त्या द्योत्यते । चरन्तीति चरा इति चरशब्दस्य निरुक्तिः । ननु निश्चिततदात्वायतिफलमेव कर्म साकल्येनानुष्ठीयते । चरैर्भू[2]पतिचरितज्ञानं तु न तथा निश्चितफलमिति नीतिशास्त्रवशेन भूपतीनां प्रवृत्तीर्ज्ञातुं प्रवृत्तोऽपि न साकल्येन जानीयात् । एकदेशेन विदितास्ताः क्रिया न[3] तस्य प्रवृत्त्युपयोगिन्यः स्युरिति, तत्राह— निःशेषमिति । क्रियाविशेषणमेतत् । निरस्ताः शेषाः स्वविषयत्वेनानुपयुक्ता महीभुजां क्रिया यस्मिन् वेदने तन्निःशेषम् । अविद्यमानवेदनाविषयक्रियमित्यर्थः । नक्तंदिवं[4] या भूपतीनां प्रवृत्तयस्ताः सर्वाः स वेत्तीति भावः । ननु चरा यदि भूपतीनां क्रियाः साकल्येन न विद्युस्ताः कथमसौ कार्त्स्न्येन विद्यादिति, तत्राह— अशेषितक्रिय इति । अविद्यमानशेषाः अशेषाः । अशेषाः कृताः अशेषिताः क्रिया येन सोऽशेषितक्रियः । क्रियासामान्यस्याशेषित-

---

१. 'तिं जानी' क. ग. घ. पाठः. २. 'तिं ज्ञातुं' ख. पाठः. ३. 'नास्य' ख. ग. घ. पाठः. ४. 'वमिति या' ख. पाठः.

स्वोक्त्या स्वसमवेतानामनुजीविसमवेतानां च क्रियाणामशेषितत्वं गम्यते । स यथा सर्वाः क्रियाः कार्त्स्न्येन करोति, तथा तस्यानुजीविनोऽपीति भावः । नृपाणां प्रभावप्रतिभानोत्साहलाघवादनुजीविक्रियाणामसाकल्यम् । अयं तु सुयोधनः प्रभूतप्रभावप्रतिभानोत्साहस्तांस्ताननुजीविनः पुष्कलफलान्वितक्रियान् करोतीति तात्पर्यार्थः । चारैर्महीभुजां क्रिया विदन्नसौ तेषां छिद्राण्यपि जानीयात् । छिद्रोपलम्भे सति प्रियाणां दुष्टानां बाध्यानामुपेक्षाम्, अप्रियाणामदुष्टानां बाधां च यद्यसौ रागद्वेषनिघ्नतया कुर्यात् तदा तस्य धर्मादिविरोधः स्यादिति, तत्राह — सच्चरित इति । प्रशस्यचरित इत्यर्थः । छिद्रोपलम्भेऽप्यसौ वशी विशेषविद् यथोचितमेवाचरति, न धर्मादिविरुद्धमिति भावः । नन्वसौ शत्रुमित्रादिषु यथोचितां प्रवृत्तिं विधातुं प्रतिविषयं प्रहितैः प्रणिधिभिः शत्रुमित्रोदासीनमध्यस्थानां महीभुजां तन्त्रावापादिस्वरूपं चरितं सततमवहितो यथा विजानाति, तथैव चतुर्विधाः परेऽपि महीभुजस्तादृशमेव तच्चरितं चारैरवगम्य तत्तदवस्थागतानि निरूढानि तस्य बाध्यत्वबुद्धिलाघवादीन्युपलभ्य तथा तथा तं परिच्छिन्द्युरिति, तत्राह—महोदयैरित्यादि । तस्येहितं फलैः प्रतीयते । ईहितशब्देनेच्छा चेष्टा चाभिधीयते । इहोभयं गृह्यते । धनलिप्सारिपुजिगीषादिरिच्छा । तन्त्रावापादिरूपा चेष्टा । फलैः प्रयोजनैः धनागमसपत्नोन्मूलनादिभिः । फलैरिति करणे तृतीया । फलानां न चक्षुरादिवत् प्रतीतौ करणत्वं, किन्तु धूमादिवल्लिङ्गतया । प्रतीयते अनुमीयते । प्रतीतेः कर्तृविशेषानुक्तौ लोकेनेति कर्तृसामान्यमर्थात् सिध्यति । तस्येच्छा फलैरेव लिङ्गैरनुमीयते नेङ्गितादिभिः । चेष्टा तु दृश्यमानापि तत्तदुपायोपेयविशिष्टेन वास्तवेन स्वरूपेण नावधार्यत इति तच्चेष्टाप्रतीतिः प्रत्यक्षरूपाप्यज्ञातवर्णसङ्केतस्य पत्रस्थवर्णप्रतीतिरिवेति भावः । नन्विच्छया चेष्टया फलमिति फलेन चेष्टानुमीयते, नेच्छा । तत् कथमुच्यते फलेनेच्छानुमीयत इति । उच्यते । इच्छापूर्विकैव चेष्टा फलं जनयति, न केवला । चेष्टाफलयोर्दृश्यत्वे फलेन चेष्टानुमानम् । निगूढतया चेष्टायाः कदाचिदप्यदर्शने फलस्य दर्शने च फलेनेच्छानुमानमिति न विरोधः । ननु प्रवृत्तिलिङ्गानि तस्य फलानि यदि स्वल्पानि स्युस्ततोऽस्याल्पस्याल्पसन्तोषा[३]-

---

१. 'विषयः स्या', २. 'क्तौ तेने', ३. 'षत्वापा' ख. पाठः.

लस्यापाटवादयो दोषाः प्रतीयेरन्निति, तत्राह — महोदयैरिति । महानुदय उच्छ्रयो येषां तानि महोदयानि, तैः । अन्येषां येन कर्मणा यत् फलं स्यात्, तस्य तु तेनैव तदधिकतरं फलं भवतीत्यभिप्रायः । ननु महोदयान्यपि फलान्यनर्थानुबन्धीनि चेत् पूर्वस्यापि फलस्योपघातकानि स्युरिति, तत्राह — हितानुबन्धिभिरिति । हितस्यानर्थानुबन्धरहितस्यार्थस्यानुबन्धिभिरनुकूलैः, उपर्युपर्युदेष्यत्फलैरित्यर्थः । शत्रुविजयादिभिः कार्यविशेषैस्तत्कारणविशेषरूपं निगूढमपि मन्त्रोपायप्रयोगादि तस्य कर्म यदि प्रतीयते ततो निपुणमतयस्तद्विनाभाविभिरर्थैः पूर्वमेव चिकीर्षितं क्रियमाणं वा तस्य कर्म प्रतीत्य तत्प्रतिघातं कुर्युरिति, तत्राह — धातुरिवेति । धातुरीश्वरस्येहितं पुण्यापुण्यपाकादि प्राणिसुखदुःखविशेषादिभिः कार्यविशेषैरपि यथा सामान्यमेव प्रतीयते न विशिष्टं, तथास्येहितमपि फलविशेषैः सामान्यमेवानुमीयत इत्यभिप्रायः । आभ्यां श्लोकाभ्यां परमण्डलविजयार्थप्रवृत्तिरूपस्तस्यावापाख्यो नयभागः संगृहीतः । पूर्वश्लोकेन विक्रमसाधनयोधाभिसङ्ग्रहणं[1] तस्य द्योतितम्, उत्तरश्लोकेन तु चरप्रवर्तनमन्त्रनिगूहनादिनयनैपुणमिति विभागः ॥ २० ॥

तन्त्रस्य फलं मण्डलशुद्धिः, आवापस्य तु भूपतिसंश्लेषः । तदुभयं दण्डप्रयोगकृतमपरागपर्यवसायि स्यादिति शङ्कां निरस्यति — न तेनेत्यादिना ।

न तेन सज्यं क्वचिदुद्यतं धनुः
कृतं न वा कोपविजिह्ममाननम् ।
गुणानुरागेण शिरोभिरुह्यते
नराधिपैर्माल्यमिवास्य शासनम् ॥ २१ ॥

तेन क्वचिद् धनुः सज्यं नोद्यतम् । क्वचित् कस्मिंश्चिदुत्सिक्ते प्रियेऽपकारिणि वा कोपविषय इत्यर्थः । उद्यतं वेधनार्थं व्यापारितम् । तस्य सज्यधनुरुद्यमनमेव रिपुकुलक्षपणाय पर्याप्तमिति कुतः शरसन्धानापेक्षेति प्रभावप्रतापातिशयं द्योतयितुं चण्डतापिशुनत्वेन[2] शङ्कितं तदेव निषिध्यते, न शरसन्धानादि । नृपतिप्रधानस्य तस्यायुधप्रधानं धनुरेव करग्रहणयोग्यमिति धनुर्ग्रहणं[3] कृतम् । वीरतया सौम्यतया वा यद्यप्यसौ विपक्षा-

१. 'दि' ख. २. 'तापपि', ३. 'धी' क, ग, घ, पाठः.

दिषु कोपविषयेषु धनुरुद्यमनादीन् न विदध्यात् । तथापि प्रतिकूलदर्शनादिषु कोपजं विकारमाविष्कुर्यात् । ततस्तस्य चण्डतया प्रतीतस्याभिगम्यता न स्यादिति तत्राह — आननं कोपविजिह्मं न कृतं वेति । तेनेति कचिदिति च पूर्वस्मादनुषज्यते । वाशब्देन धनुरुद्यमनं समुच्चीयते । जिह्मं कुटिलं विकृतमित्यर्थः । विशेषेण जिह्मं विजिह्मं कोपेन विजिह्मं, कोपविजिह्मम् । भ्रूभेदभ्रुकुटिनेत्ररागादियुक्तमित्यर्थः । जनोद्वेगहेतुः कोपजो विकारो विकारान्तरलक्षण इति वीत्युपसर्गेण द्योत्यते । कोपविकारस्य क्रियानिर्वर्त्यतोक्त्या तस्य कोपं प्रति वशित्वं द्योत्यते । परमण्डलदमनं धनुरुद्यमनादिसाध्यम् । स्वमण्डलदमनं तु स्वकोपाविष्कारमात्रनिर्वर्त्यमित्युभयसाधनत्वेन प्रसक्तस्योभयस्य निषेधेन तस्य तदुभयं प्रभावमात्रसाध्यं, न प्रयत्नसाध्यमिति द्योत्यते । आवापस्य पूर्वश्लोके प्रतिपादनात् तत्साधनत्वेन प्रसक्तस्य धनुरुद्यमनस्य निषेधः पूर्वं कृत इति हेतुकृतोऽत्र क्रमविपर्यासः । ननु कोपविषयेऽपि कोपस्यानाविष्करणे पृथग्जनैस्तस्य मार्दवं प्रतीयते । ततः स्वमण्डलवासिनोऽपि तस्य शासने नावातिष्ठेरन्, प्रागेव महीपतय इति तत्राह — गुणानुरागेणेत्यादि । अस्य शासनं नराधिपैः शिरोभिरुह्यते वार्यते । शासनं शासनपत्रम् । नराधिपैरिति कर्तरि तृतीया, शिरोभिरिति करणे । स्वप्रीतिसमये स्वापेक्षायां वा न धारणं, किन्तु सर्वकालव्यापीत्यूह्यत इति वर्तमानप्रत्ययेन द्योत्यते । शासनधारणस्य शिरःकरणतोक्त्या तेषां तस्मिन् गौरवातिशयो द्योत्यते । तच्छासनस्यादरणीयता न केवलं, स्पृहणीयता शोभाकरता चास्तीत्याह — माल्यमिवेति[१] । माल्यं मालार्हं सुरभि पुष्पम् । स्पृहणीयत्वशोभाकरत्वादयो माल्यगुणाः क्षणिकाः, शासनस्य तु स्थायिन इति व्यतिरेकं द्योतयितुं शासनस्य माल्यसाम्यमुक्तं, न माल्यत्वं रूपितम् । ननु शासनकरा नराधिपा नराधिपस्यैव तस्य शासनं केन हेतुना शिरसा वहेयुरिति तत्राह — गुणानुरागेणेति । गुणैरनुरागो गुणानुरागः तेन । शौर्यवीर्यमाधुर्यादिगुणनिमित्तेन तद्विषयेणानुरागेणानुस्यूतेन स्नेहप्रकर्षेणेत्यर्थः । गुणहेतुकत्वेनानुरागस्य गौरवयुक्तता नित्यता च द्योत्यते । अतिप्रसिद्धपराध्यर्यगुणहेतुकं सर्वत्र तस्या परोक्षवदवभासनमस्येत्यनेन द्योत्यते । तेन नराधिपानां तदाज्ञानुगत्वकथनेन तस्य नरेन्द्रस्य सार्वभौमत्वं सर्वेषामवगतमिति गम्यते ॥ २१ ॥

---

१. 'ति माला', २. 'गमित' ख. पाठः

एवं युधिष्ठिरविजिगीषानिर्वर्तितगुणगणविनयस्य सुयोधनस्य तन्त्रावापसौष्ठवप्रयोजनं सामाद्युपायप्रयोगप्रावीण्यं सन्ध्यादिविधाननैपुणं च द्योतितमुपपादितं च। तत्रेयमाशङ्का स्यात्। स्वत एवार्थकामप्रवणः सुयोधनो धर्ममप्यर्थकामशेषत्वेनाद्रियते। व्यवहारदर्शनदण्ड्यदण्डनादिरूपं धर्ममर्थोपायतया काममसौ नियमेनानुतिष्ठेत्, परिणयनादिरूपं तु कामोपायतया। विविधवित्तव्ययकारिण्युपवासादिशरीरक्लेशबहुले यज्ञादिरूपे तु धर्मे नायमभिरमेत। नराधिपे धर्मानभिरते नरा अपि तादृशाः स्युः। धर्मानुबन्धविरहे महतीनामपि विभूतीनां विपर्यासः स्यादिति तत्राह — स यौवराज्य इत्यादिना।

स यौवराज्ये नवयौवनोद्धतं
विधाय दुःशासनमिद्धशासनः।
मखेष्वखिन्नोऽनुमतः पुरोधसा
धिनोति हव्येन हिरण्यरेतसम्॥ २२॥

स मखेषु हव्येन हिरण्यरेतसं धिनोति। एकाहीनसत्रनित्यनैमित्तिककाम्यादीनां विविधानां यज्ञानामनुष्ठानं मखेष्विति बहुवचनेन व्यज्यते। हव्येन हविषा। जातावेकवचनं, हविर्व्यक्तीनां बहुत्वात्। हव्यं हवनीयं हवनार्हं, श्रुतिषु मुख्यतया विहितमिति प्रतिनिधिग्रहणं नास्तीति कृत्यप्रत्ययेन द्योत्यते। मखेषु हव्येनेति मखाधिकरणेन मखनिष्पन्नेन हव्येनेत्यर्थः। यथा मेघजलानां शुक्तिसम्बन्धेन मौक्तिकत्वेन निष्पत्तिः, तथा मन्त्रक्रियारूपयज्ञसम्बन्धेनाज्यादीनां हविष्ट्वेन निष्पत्तिः। हिरण्यं हीनतारहितमक्षयं काञ्चनं रेतो जननशक्तं बीजं यस्य स हिरण्यरेता इति यौगिकोऽयमग्निपर्यायो हिरण्यरेतश्शब्दः। तेनाग्नेर्मणिहिरण्यादिसमृद्धिदायित्वं द्योत्यते। धिनोति प्रीणयति। 'अग्निर्वै देवानां मुखमि'ति श्रूयते। तेन तत्प्रीणनोक्त्या सर्वदेवताः प्रीणयतीति द्योत्यते। शुद्धमन्त्रक्रियासंस्कृतं शुद्धमेव हविर्देवताप्रीणने करणमिति हव्यस्य देवताप्रीणनकरणत्वोक्त्या[1] ऋगृत्विगादीनां समस्तानां यज्ञाङ्गानां शुद्धिरुक्तैव। ऋत्विजां मन्त्रतन्त्राण्यनुसन्धाय तत् तद्धविस्तदा तदा तस्यै तस्यै देवतायै स्वयमवहितः समर्पयन् सर्वदेवतानां[2] प्रीतिं जनयतीति भावः। मखेषु सत्सु हव्येन हिरण्यरेतसं धिनोतीति वान्वयः।

१. 'नोक्त्या', २. 'म्मतानां' ग. घ. पाठः.

तदा 'यस्य च भावेन भावलक्षणम्' (२. ३. ३७) इति सप्तमी । पदार्थस्वरूपानुस्यूतायाः सत्ताक्रियायाः पदार्थप्रतीतौ शब्दं विनापि प्रतीतिरस्तीति तद्वाची शब्दो न प्रयुक्तः । ननु सुयोधनो यशोर्थितया धार्मिकतया वा यद्यपि मनोवाक्कायेष्वप्रमत्त एव यज्ञाननुतिष्ठेत्, तथाप्यर्थकामवासनानुस्यूतस्यास्य स्पर्धया धर्ममाचरतो मणिहिरण्यहस्त्यश्वादिदक्षिणानां दीर्घोपवासभूशयनादिक्लेशदायिनां यज्ञानामनुष्ठाने तस्य मनसि खेदः स्यादिति तत्राह—अखिन्न इति । 'खिद दैन्ये' इति पठ्यते । दीनताप्रतीत्या कृते कर्मण्यनुतप्तोऽत्र खिन्नशब्देन विवक्ष्यते । न खिन्नोऽखिन्नः, वित्तराशिव्ययेन क्लेशातिशयेन च नानुतप्त इत्यर्थः । युधिष्ठिरजिगीषोपचितैर्गुणैः युधिष्ठिरप्रकृतिं प्रापित एवेति भावः । अखिन्न इत्युक्तं, न तु हृष्ट इति । तेन यज्ञक्रियाजनितमनुतापं विवेकेन निवर्तितवान्, न तु युधिष्ठिरवद्यज्ञक्रियया प्रहृष्ट इति द्योत्यते । वर्णवयोवस्थाकालादिभेदैर्नियमिताधिकाराः केचिद् यज्ञाः । केचित्तु शास्त्रापर्युदस्तानां वर्णानां साधारणाः । एक एव यज्ञः कामनया भिद्यत इति दुरधिगमभेदयाथात्म्यानुष्ठानात् यज्ञाननुज्ञाय स्वतन्त्रः सन्नसावविचार्य यदि कुर्यादनर्थानुबन्धकृदधर्मः स्यादित्याशङ्क्याह—पुरोधसानुमत इति । पुरोधाः पुरोहितः । पुरोहितत्वं न द्विजा(दि ? तित्व)मात्रकृतं किन्तु गुणहेतुकम् । साङ्गवेदविद्यातपोनुभावक्रियाकौशलकुलक्रमान्वयहितैषित्वादयो गुणाः पुरोहितत्वहेतवः । तैः समस्तैर्गुणैर्युक्तेनाप्तेन गुरुणा । द्विजोत्तमेनेत्यर्थः । अनुमत इति । अस्मिन् यज्ञे तवेयमभिरुचिः समुचितैव । तस्मादनेन यज्ञेन देवानां प्रीणनं कुरुष्वेत्यनुज्ञात इत्यर्थः । अनुशिष्ट इत्युक्तौ गुरुनियोगकृता तस्य यज्ञाभिरुचिरिति प्रतीयते । वेदित इत्युक्तौ तदानीं तदुपदेशकृतं तस्य यज्ञविज्ञानमिति प्रतिभाति । तदुभयशङ्कानिवृत्त्यर्थमनुमत इत्युक्तं न त्वनुशिष्ट इत्यादि । विज्ञाते चिकीर्षिते कर्मणि संवादहेतुर्गुरुसुहृदादेर्मनोवृत्तिरनुमतिर्न त्वज्ञातज्ञापनं नाप्यप्रवृत्तप्रवर्तनमिति । ननु क्रतुक्रियाप्रबन्धदीक्षिते तस्मिन्ननवेक्षिततन्त्रादिकृत्ये क्रमोपचितेन पौरजानपदानामविनयेन पुरे जनपदे चोपप्लवः स्यात् । ततश्च प्रतापावनता रिपुनृपतयश्च रन्ध्रान्वेषिणस्तत्प्रभावविघाताय व्याप्रियेरन् । ततश्च प्रभुत्वायत्तस्य परिपालनरूपस्य स्वधर्मस्यापचयः स्यादिति तत्राह—

१. 'कृत', २. 'र्थ्यावेदवि', ३. 'नाप्र', ४. 'तेऽस्मि' क. ग. घ. पाठः.

दुःशासनं[1] यौवराज्ये विधायेति । दुःशासनमनन्तरजं भ्रातरम् सगौरवस्नेहातिशयमिति लभ्यते । यौवराज्ये युवराजकर्मणि विधाय नियुज्येत्यर्थः । कृत्वेति वा । करणं स्थापनम् । युवराजीकरणम् अभिषेकादिना[2] विधिना युवराजोचिताभिः प्रकृतिभिर्योजनम् । राज्यगुप्तौ नियुज्येत्युक्तौ नरेन्द्रानुजस्यापि तस्यानवाप्तप्रकृतिस्वाम्यस्याप्रभोः प्रकृतयस्तन्त्रादिकृत्ये तथा न विधेयाः स्युरिति शङ्का स्यात् । तन्निवृत्त्यर्थं यौवराज्ये विधायेत्युक्तम् । दुःखेन शासनीयो दुःशासन इति दुःशासनशब्दस्य निरुक्तिः । तेन तस्यानियम्यत्वं प्रभुत्वं च प्रतीयते । नवयौवनोद्धतमिति । नवेन प्रत्यग्रेण प्रारब्धेन यौवनेन तारुण्येनोद्धतम् उद्गतःउपचितबलवीर्यविक्रमादिगुणम् । रिपुकुलोन्मथनादिसमर्थमि[3]त्यर्थः । ननु बलवीर्यविक्रमादियुक्तो दुःशासनः क्रमेण महाराजत्वमप्यभिलषेदिति तत्राह — इद्धशासन इति । इद्धं दीप्तं शासनमाज्ञा यस्य स इद्धशासनः । अभिमतत्वबहुमतत्वालङ्घ्यत्वनियमः शासनस्य दीप्तिरिह विवक्षिता । आत्मोचितं युवराजकर्मापि तच्छासनेनैव[4] दुःशासनः करोति । कुतस्तस्य महाराजत्वाभिलाषप्रसङ्ग इत्यभिप्रायः । यौवराज्यविधानस्य हुताशनप्रीणनक्रियां प्रति पूर्वकालत्वं द्योतयता विधायेति क्त्वाप्रत्ययेन यज्ञादिस्वधर्माविघाताय दुःशासनं युवराजं कृतवान्, न स्वोपभोगपौष्कल्यायेति व्यज्यते । क्रमसमावर्जितधैर्यगाम्भीर्यादिगुणगणहेतुकेनेन्द्रियशमरूपेण विहितनित्याचारानुष्ठाननियमरूपेण च विनयेन जनितात्मगौरवान् पौरजानपदान् गुप्त्यादिविधिना सामादिप्रयोगसौष्ठवेन चात्मसात्कृत्य बलवीर्यविक्रमनीतिप्रकर्षनिर्वर्त्येन सन्धिविग्रहादिविधाननैपुणेन सभूपालानि मण्डलान्तराण्यावर्ज्य दुःशासनादिसोदरसचिवसमूहविनिहिततन्त्रादिकृत्यः कुरुराजसुतो हुताशनमुखनिखिलदेवताप्रीतिविधायिनो धनधान्यादिसमृद्धिदायिनो विविधान् यज्ञान् सम्यगनुतिष्ठतीति तात्पर्यार्थः ॥ २२ ॥

एवं धार्तराष्ट्रस्य[6] नीतिमत्त्वं बलवत्त्वं धार्मिकत्वं चोपपादितम् । तत्रेयमाशङ्का स्याद् — एवमधिराजगुणैरेव कुरुमण्डलमिव भूमण्डलं यदि सुयोधनोऽधितिष्ठति, प्रभावप्रतापादियुक्तादस्मात्[7] सपत्नात् पुनरस्माभिस्तद्राज्यं ग्रहीतुं न शक्यं स्यादिति तत्राह —

---

१. 'द्द' ख. पाठः. २. 'दिविधानाद् यु' क. ग. घ. पाठः. ३. 'मृद्धमि' ख. पाठः. ४. 'न दुः' घ. पाठः. ५. 'वर्त्तीन्याव' क. ग. घ. पाठः. ६. 'त्वं धा', ७. 'प्रता'

प्रलीनभूपालमपि स्थिरायति
प्रशासदावारिधि मण्डलं भुवः।
स चिन्तयत्येव भियस्त्वदेष्यती-
रहो दुरन्ता बलवद्विरोधिता ॥ २३ ॥

प्रलीनेत्यादि। स भियश्चिन्तयत्येव। भीशब्देन भयहेतवो विपदो लक्ष्यन्ते अप्रतीकारतया तासां भयहेतुत्वनियमं द्योतयितुम्। 'चिति स्मृत्यामि'ति स्मरणमात्रे पठितोऽपि चिन्तयतिर्निश्चितानिष्टविषयायां मनोवृत्तिसन्ततौ वर्तते विपश्चिन्तायाः स्थायित्वं द्योतयितुम्। चिन्तयतीति वर्तमानप्रत्ययेन तस्य विपत्प्रतीकारोपायाप्रतिपत्तिः प्रत्याय्यते। विपच्चिन्तैव तस्य क्रिया नान्या काचिदित्यवधारणमवगमयन्नेवकारस्तस्याः प्राबल्यं सर्वक्रियास्वनुस्यूतिं च सूचयति। चिन्ताफलं धैर्यावसादादि न सुयोधनस्यैव, तत्सुहृदां कर्णशकुन्यादीनां चास्तीति चिन्तयतीति परस्मैपदेन द्योत्यते। नयेन जितमपि कुरुराज्यं तस्य छद्मद्यूतादिदोषाननुस्मरद् न सम्यङ् नियम्यं स्यादिति तन्नियमनोपायानुपलम्भकृता किं तस्य चिन्तेति, नेत्याह — भुवो मण्डलं प्रशासदिति। भुवो भूमेर्मण्डलं वलयम्। चतुर्दिक्सम्बद्धां वसुमतीमित्यर्थः। प्रशासत् प्रभुत्वेन शासत्। कृत्येषु प्रवर्तयन्नकृत्येभ्यो निवर्तयन्नित्यर्थः। समस्ताया भुवः प्रशासने कुरुराज्यप्रशासनं किं वक्तव्यमित्यर्थः। ननु सामुद्रिकाणामविधेयत्वे मणिहिरण्यादिसमृद्धिर्न स्यात्। जलधिद्वीपास्पदैर्दस्युभिः पुरराज्यसम्पदां विलोपश्च भवेदिति द्वीपवासिनामविधेयत्वेन जाता किं तस्य चिन्तेति, नेत्याह — आवारिधीति। अत्राभिविधावाङ् वर्तते। अभिविधिरभिव्याप्तिः। 'आङ् मर्यादाभिविध्योः' (२. १. १३) इत्यव्ययीभावसमासः। एतत् प्रशासदित्यनेन सम्बध्यते। यथापत्रिगर्तं वृष्टो देव इत्यनेन त्रिगर्तान् वर्जयित्वा वृष्ट इति गम्यते, तथा आवारिधीत्यनेन वारिधीनभिव्याप्येति प्रतीयते। सरत्नाकरां वसुमतीमात्मवशां कुर्वन्नित्यर्थः। ननु दण्डनमितानां महीपतीनां चण्डतया तस्मिन्ननुरागो न स्यात्। साम्ना वशीकृतानां तु मृदुतया न बहुमानः। स्नेहबहुमानयोग एव दृढतरो हृदयसंश्लेष इति चण्डतया मृदुतया वा कृतेन भूपतिहृदयविश्लेषेण किं तस्य चिन्तेति, नेत्याह — प्रलीनभूपालमिति। एतद् भूमण्डलविशेषणम्। प्रलीनाः प्रकर्षेण श्लिष्टाः भूपाला राजानो यस्य तत्

प्रलीनभूपालम् । प्रलीनत्वस्य सुयोधनविषयत्वमर्थात् सिध्यति । क्रियाविशेषणं वा प्रलीनभूपालं[1] प्रशासदिति । गौरवानुरागकरमेव चण्डत्वं मार्दवं वा स दर्शयति न विपरीतमिति । तेन तस्मिन्नतिश्लिष्टा भूपतय इति भावः । प्रधानानां भूपतीनां प्रलीनत्वकथनेन भूमण्डलवर्तिनां सर्वेषां शुल्ककरादेरायतेर्ग्रहणे समाहारे च नियुक्तानामपाटवनिकृत्यादिभिर्दोषैरायतेरस्थिरत्वं स्यात् । तेन किं तस्य चिन्तेति, नेत्याह — स्थिरायतीति । एतदपि भूमण्डलविशेषणं क्रियाविशेषणं वा । निपुणतराः प्रशस्यतरा एव पुरुषास्तेनायतिग्रहणादौ नियुज्यन्ते । तेन तद्दोषकृतं तस्यायतिचलनं न शङ्कनीयमिति भावः । गुणविनयप्रकर्षैकसाध्यं गुणवतां विनीतानां भूपतीनां श्लेषणं, प्रेष्यपुरुषपरीक्षादिरूपतन्त्रायत्तमायतिस्थैर्यं, विप्रकृष्टानां गिरिदुर्गाश्रयाणां जलधिद्वीपास्पदानां च नियमनं प्रतापविक्रमादि विना न शक्यमिति प्रतापविक्रमाविष्करणरूपस्यावापस्य फलं भूमण्डलप्रशासनमिति त्रिविधस्य नयस्यैतत् फलत्रयमुक्तम् । अपिशब्दः प्रशासदित्यनेन सम्बध्यते । स भुवो मण्डलं प्रशासदपि भियश्चिन्तयत्येवेत्यन्वयः । सर्वेषां विपदो निवर्तयतः प्रभोः स्वविपच्चिन्तनमयुक्तमित्यपिशब्देन विरोधमनूद्य भियश्चिन्तयतीत्यनेन प्रभुत्वविरुद्धं फलं दर्शयति । एवमात्मनो विपत्प्रसङ्गाभावे सति किन्निमित्ताः स विपदश्चिन्तयतीति तत्राह — त्वदेष्यतीरिति । त्वत्तः एष्यतीः अचिरादागामिनीः । सन्निकृष्टे भविष्यतिकाले लट्प्रत्ययो वर्तते । युधिष्ठिरनयविक्रमानुभावहेतूनां विपदां बहुत्वं भिय इति बहुवचनेन विवक्ष्यते । पृथग्जनप्रतिपन्नं सुयोधनस्य प्रभुत्वं युधिष्ठिरस्याप्रभुत्वं च पश्यंस्तस्मादेव युधिष्ठिरादेष्यतीनां विपदां तस्य सुयोधनस्य चिन्तनं च निश्चिन्वन् वनेचरो विस्मयवशादहो इत्याह । ईदृश्यामपचयदशायामेव तादृशोदयस्य तस्य रिपोर्भयं जनयतीत्याश्चर्यस्तवानुभाव इति भावः । स एव प्रणिधिः पुनर्धीरतया धीमत्तया विस्मयवशतामतीत्य नैसर्गिकं सुयोधनस्य दौर्बल्यं युधिष्ठिरस्य प्राबल्यं च निरूपयन्नुचितैव तस्य भवत्प्रभवपरि[2]भवीचन्तेत्येतदुपपादयति — बलवद्विरोधिता दुरन्तेति । विरोधशीलो विरोधी, बलवद्भिर्विरोधी बलवद्विरोधी, तस्य भावो बलवद्विरोधिता । दुरन्ता दुःखपरि-

१. 'लं वा प्र' घ. पाठः. २. 'द्वा' ख. पाठः. ३. 'वत्परि' क. घ. पाठः.

णाम । यद्यपि बलवद्विरोधः क्वचित्कदाचित् सद्योऽनर्थहेतुर्न भवति, तथाप्यपथ्य-निषेवणवद् दारुणपरिणाम इत्यभिप्रायः । 'आच्छीनद्योर्नुम्' (७. १. ८०) इती-वर्णान्तमात्रान्नुमो विकल्पितत्वाद्व्यतीरित्यत्र नुमभावः । प्रशासदित्यत्र 'जक्षि-त्यादयः षट्' (६. १. ६) इति शासेरभ्यस्तसंज्ञकत्वाद् 'नाभ्यस्ताच्छतुः' (७. १. ७८) इति निषेधान्नुमभावः ॥ २३ ॥

स भियश्चिन्तयतीत्यत्र किं गमकमिति तत्राह —

कथाप्रसङ्गेन जनैरुदाहृता-
दनुस्मृताखण्डलसूनुविक्रमः ।
तवाभिधानाद् व्यथते नताननः
सुदुःसहान्मन्त्रपदादिवोरगः ॥ २४ ॥

कथाप्रसङ्गेनेत्यादि । सः तवाभिधानाद् व्यथते । अभिधानान्नाम्नो व्यथते बिभेति । अभिधानादिति जातावेकवचनम् । तेन युधिष्ठिर इति वा धर्मात्मज इति वा अजातशत्रुरिति वा यानि तस्य नामानि, तेभ्यः सर्वेभ्यो बिभेतीति लभ्यते । अभिधीयतेऽनेन क्रियागुणादिरर्थ इत्यभिधानस्य निरुक्तिः । तेन गौणानि तस्य नामानि न डित्थादिशब्दकल्पानीति गम्यते । 'भीत्रार्थानां भयहेतुः' (१. ४. २५)इत्यपादानसंज्ञायाम् 'अपादाने पञ्चमी'(२. ३. २८) इति पञ्चमी । सुयोधनस्य भावं परीक्षितुकामैर्वाग्भिस्तदनिष्टस्य द्विषदभिधानस्य व्यथाहे-तुत्वेनोपपादने सति स यदि धैर्यं जह्यात् तावता तदभिधानस्य व्यथाहे-तुत्वं न निश्चितमित्याशङ्क्याह—जनैरुदाहृतादिति । जनैर्लोकैरुदाहृताद् उदा-हरणविवक्षयोक्तादित्यर्थः । जनैरित्युक्तं न व्यासादिभिरिति विदुरादिभिरिति वा । तेन तादृशप्रभावस्य सम्राजस्तस्य समक्षमेव तद्वैरिणस्तव गुणान् वर्णयितुं प्राकृता अपि जनाः प्रगल्भन्त इति सर्वातिशायी तवानुभाव इति द्योत्यते । विनयादिगुणवता महाराजेन तेनानुरञ्जितास्तदप्रीतिकराणि तद्वैरिणो गुणा-तिशयद्योतकान्यभिधानानि व्यवसायपूर्वकमुदाहरणविवक्षया कथमभिदध्यु-रित्याशङ्क्याह —— कथाप्रसङ्गेनेति । कथानां प्रसङ्गेनानुबन्धेनेत्यर्थः । हेतौ तृ-

१. 'ति प्रविवे' क. ग. घ. पाठः. २. 'स्य प' ख. पाठः.

तीया। 'कथ वाक्यप्रबन्धे' इति धातोर्निष्पन्नः कथाशब्दः प्रश्नप्रतिवचनप्रायवाक्यप्रबन्धरूपः । प्राज्ञप्रवीरादिपुरुषाणां गुणविशेषान् जिज्ञासमानैः पुरुषैः प्रवर्त्यन्त इति तादृशीनां कथानामनुबन्धो युधिष्ठिरगुणानुस्मृतिहेतुतया जनानां युधिष्ठिराभिधानोदाहरणहेतुः, न सुयोधनानुरागविरोधिनी तदप्रियविवक्षेति भावः। युधिष्ठिर इत्युक्तौ वीर्यातिशयः, धर्मात्मज इत्युक्तौ धार्मिकत्वातिशयः, अजातशत्रुरिति नीतिमत्तातिशयः इति तादृशा गुणास्तवाभिधानश्रवणे प्रतीयमानास्तस्य व्यथां जनयन्तीति भावः। युधिष्ठिराभिधानश्रवणे युधिष्ठिरवीर्यादिस्मृतिकृता सुयोधनस्य भीतिः पुनर्न विरमति, प्रत्युत युधिष्ठिरानुजस्य धनञ्जयस्य विक्रमानुस्मरणेन क्रमेण वर्धत एवेत्याह — अनुस्मृताखण्डलसूनुविक्रम इति। अनुस्मृत आखण्डलसूनोर्धनञ्जयस्य विक्रमो येन स तथोक्तः। अन्वित्युपसर्गो युधिष्ठिराभिधानश्रवणानन्तर्यं द्योतयति। शस्त्रास्त्रसाधना प्रवृत्तिशक्तिर्विक्रमः। आखण्डलसूनुशब्देन धनञ्जयस्योक्तिः तस्य प्रकृष्टां दिव्यशक्तिं दिव्यानुबन्धितां च द्योतयति। स्वयंवरखाण्डवदाहदिग्विजयादिषु दृष्टश्रुतो धनञ्जयस्य विक्रमो युधिष्ठिरप्रभावजनितां सुयोधनस्य भीतिमुपबृंहयितुं पर्याप्त एवेति भावः। महौजसो मारुतेर्महारथयोर्माद्रीसुतयोश्च विक्रमस्मृतिर्धनञ्जयविक्रमानुस्मरणाविनाभूतेति पृथङ् नोक्ता। युधिष्ठिराभिधानाद् व्यथत इत्यत्र किं परिस्फुटं लिङ्गमिति तत्राह — नतानन इति। नतमवाचीनम् (आननं) मुखं यस्य स नताननः। नतानन इत्याननस्य नमनकर्तृत्वमेवोक्तं, न तु नमितानन इति सुयोधनस्य नमने प्रयोजकत्वमुक्तम्। तेनैतद् द्योत्यते—स्वाकारसंवरणार्थं नासौ नमितमुखः, अपितु दुःखातिभारादतर्कितमेवावशमवाग्भूतमुख इति व्यथाविशेषाविनाभूता मुखावनतिस्त्वदभिधानकथानन्तरं दृश्यमाना तस्य तद्धेतुभूतं व्यथाविशेषमवगमयतीति भावः। ननु महाराजः सन्नसौ व्यथाहेतौ सत्यपि न व्यथेत, व्यथमानोऽपि विकारमाच्छादयेदिति तत्राह — सुदुस्सहादिति। सुतरां दुस्सहात् तदानीमुदर्के च सोढुमशक्यात्। क्षणमात्रदुःसहे वस्तुनि दृष्टे श्रुते वा धैर्यालम्बनं विकारगुप्तिर्वा भवेद्, न तु दारुणतरोदर्कस्य सततदुःसहस्य वस्तुन

१. 'तुः सु' क. ग. घ. पाठः. २. 'नुसंब' क घ. पाठः. ३. 'णेनाभि' क ग. घ. पाठः. ४. 'तोपनतमें' ख. पाठः.

उपलब्धावित्यभिप्रायः । ननु दारुणस्यानिष्टस्यापि शब्दस्य शस्त्रादेरिव शरीरानुवेधिमनोव्यथाकरी शक्तिर्न दृश्यत इति, तत्राह—मन्त्रपदादुरग इवेति । पद्यते प्रत्याय्यतेऽनेनार्थ इत्यर्थप्रतिपत्तिसाधनं शब्दः पदं, मन्त्रस्य पदं मन्त्रपदं मन्त्रावयवः । भञ्जय स्तोभयेत्यादेरर्थान्वितान्मन्त्रैकदेशादित्यर्थः । न हि समस्त एव मन्त्रः सर्पस्य व्यथाहेतुर्मन्त्रैकदेशोऽपीति तद्विदां प्रसिद्धिः । "लोकैश्चिन्त्यो न खलु मणिमन्त्रौषधीनां प्रभाव" इति चाहुः । यथा मन्त्ररूपेण शब्दविशेषेणाशीविषस्याशेषाङ्गव्यापिनी व्यथा क्रियते, तथैव युधिष्ठिराभिधानरूपेण शब्दविशेषेण सुयोधनस्य तादृशी व्यथा क्रियत इत्यत्र नासम्भावनेति भावः । युधिष्ठिरप्रतापादिस्मरणजनिता धनञ्जयादिविक्रमानुस्मरणानुसन्तता सुयोधनस्य व्यथा भीष्मद्रोणकर्णादिसामर्थ्यानुसन्धाने विरंस्यतीति शङ्काप्युरगदृष्टान्तेनैव परिहृता । गारुडमन्त्रध्यानादिजनिता यथोरगस्य व्यथा वासुकितक्षकादिमहोरगवैभवभावनया न निवर्तते, तथैव भवत्प्रतापस्मरणोद्भूता सुयोधनस्य व्यथा भीष्मादिपर्यालोचनया न शिथिलीभवेदिति भावः । यथा समस्तमन्त्रोच्चारण इव तत्सारभूतस्य तदेकदेशस्योच्चारणे फणिनो व्यथा भवति, तथैव समस्तानां पाण्डवानां नामसु श्रुतेष्विव तत्प्रधानस्य युधिष्ठिरस्य नाम्नि श्रुतेऽपि सुयोधनस्य तादृशी व्यथा भवतीत्ययं चार्थो वाक्यशक्त्या द्योत्यते । उपमेयवाक्यार्थ इवोपमानवाक्यार्थोऽपि तैरेव पदैरवगमयितुं शक्य इति श्लेषान्विता वाक्यार्थोपमेयं, न पदार्थोपमा । तथा मुष्टिमुद्रादिभिः समस्तैर्व्यस्तैरपि फणिनां निवारणं क्रियत इति तद्विद आचक्षते । विषविध्वंसिनीः कथाः प्रसञ्जयतीति क्रियायोगाद् यौगिकं विषवैद्यस्याभिधानं कथाप्रसङ्ग इति । इनशब्दोऽधिपतिवचनः । जनशब्दो वर्गवाची । कथाप्रसङ्गेनजनैः विषविद्याधिपतिवर्गैरित्यर्थः । उदाहृतादुच्चारितात् । एतद् मन्त्रपदादित्यस्य विशेषणम् । मन्त्रपदोदाहर्तॄणां बहुत्वोक्तिरुरगस्य व्यथाप्रकर्षं द्योतयति । आखण्डल इन्द्रः सूनुर्यस्य स आखण्डलसूनुः काश्यपः, तस्य विः पक्षी आखण्डलसूनुविः, काश्यपपुत्रो गरुड इत्यर्थः । अनुशब्दो मन्त्रोच्चारणानन्तर्यं द्योतयति । अनुस्मृतः आखण्डलसूनुवेः क्रमः पदविन्यासो येन सोऽनुस्मृताखण्डलसूनुविक्रमः विषवैद्यः ।

१. 'तो' क., २. 'वृत्तः । लो' ख. पाठः॰

मन्त्रोच्चारणानन्तरं स्वशिरसि गरुडस्य पदविन्यासं चिन्तितवानित्यर्थः। नतानन इत्युरगविशेषणम्। सुदुःसहादिति मन्त्रपदविशेषणं च पूर्ववद् योजनीयम्। जनानुरागसापेक्षतया तेन प्रयत्नसम्पादितं सौम्यत्वधार्मिकत्वादि, दारुणत्वमेव तस्य स्वाभाविकमिति चोरगदृष्टान्तेन द्योत्यते ॥ २४ ॥

एवं तादृशोदयस्य सुयोधनस्य मनसि युधिष्ठिरप्रभावानुसन्धानोपपादनेन तस्मात् सपत्नात् स्वराज्यप्रत्याहरणं महाराजेन शक्यमेवेत्यावेद्य निपुणमतिः प्रणिधिर्भर्तृभक्तिविवशतया शकुनिभागिनेयं तादृशं शत्रुं प्रति शीघ्रं प्रतिविधेयमित्याह — तदाशु कर्तुमित्यादिना।

तदाशु कर्तुं त्वयि जिह्ममुद्यते
विधीयतां तत्र विधेयमुत्तरम्।
परप्रणीतानि वचांसि चिन्वतां
प्रवृत्तिसाराः खलु मादृशां धियः ॥ २५ ॥

तत्रोत्तरं विधेयमाशु विधीयताम्। तत्रेति तच्छब्देन प्रकृतः सुयोधनः परामृश्यते। अधिकरणविशेषो विषयः सप्तम्यर्थः। उत्तरमूर्ध्वकालसंबन्धि। विधेयं विधातुं योग्यम्। मृदु दारुणं मिश्रं वा कर्मेत्यर्थात् सिध्यति। आशु शीघ्रं विधीयताम्। सेतिकर्तव्यं[1]क्रमावधानं क्रियतामित्यर्थः। चिराय कुरुराज्यमधिष्ठास्यता महाराजेनेति वाक्यशेषः। तदिति हेतुनिर्देशः। स्थिरीकृताधिराज्योऽपि सुयोधनो भवत्प्रतापचकितो भवत्प्रवृत्त्या जेतुं शक्य इति यत् तत इत्यर्थः। अथवा एवं चेदेव कर्तव्यमेवं चेदेवमिति युधिष्ठिरेण कर्तुमध्यवसितं कर्म तदित्यनेन परामृश्यते। ननु सभायां प्रतिश्रुतस्य वनवासादिसमयस्यावसाने स्वयमेव सुयोधनस्तद्राज्यमस्मभ्यं प्रत्यर्पयिष्यति। ततः किं तद्विषयोत्तरक्रियाविधानेनेत्याशङ्क्याह — त्वयि जिह्ममुद्यत इति। जिह्मं कुटिलं कर्मेत्यर्थात् सिध्यति। कर्तुमुद्यते विधातुमुद्युक्त इत्यर्थः। यद्यपि सुयोधनः स्वार्थसिद्धये सर्वत्र ऋजुनैव वर्त्मना वर्तते, तथापि पूर्वं त्वां प्रति प्रयुक्तस्य छद्मनः स्वार्थसिद्धिहेतुतामवधारयन् भूयोऽपि त्वयि छद्मद्यूतादिकं जिह्ममेव कर्तुमिच्छत्युत्सहते, न त्वृजुना वर्त्मना वर्तितुमित्यभिप्रायः। ननु जिज्ञासितः समस्तोऽपि रिपुवृत्तान्तो विज्ञात एव। अतस्तद्विषयो विधिरस्माभिः सर्वदा विधातुं शक्य एव।

1. 'व्यतया क' क. ग. घ. पाठः.

ततस्तद्विषयं विधेयं शीघ्रं विधीयतामिति किमुच्यत इति, तत्राह — मादृशां धियः प्रवृत्तिसाराः खल्विति। अहमिव दृश्यमाना मादृशाः। मत्समानवृत्तीनां स्वामिनियोगेन निगूढाकारतया रिपुव्यापारान् विजानतां चाराणामित्यर्थः। 'त्यदादिषु दृशोऽनालोचने कञ्च' (३.२.६०) इति चकारानुकृष्टे क्विन्प्रत्यये सति मादृशामिति रूपम्। धियः बुद्धयः, बुभुत्सिततत्तद्वस्तुविषयावगतय इत्यर्थः। प्रभूताः प्रशस्ता वा वृत्तयो व्यापाराः प्रवृत्तयः। पार्थिवानामित्यर्थात् सिध्यति। तादृशीनां प्रवृत्तीनां तेषामेव संभवात्। प्रवृत्तयः साराः प्रकृष्टं स्वरूपं बलं वा यासां ताः प्रवृत्तिसाराः। अथवा प्रवृत्त्या साराः स्थिराः प्रवृत्तिसारा इति तत्पुरुषः। सर्वथा प्रवृत्त्यारूढा एव चरोपलब्धयो न विचलन्ति न विशीर्यन्त इति। ताः पार्थिवप्रवृत्तीनां कालविलम्बनं न सहन्त इति तात्पर्यार्थः। महोत्साहै-रवहितैर्मतिमद्भिर्मनसि निहिता अपि प्रमितयः कोशगृहनिहितधनसमृद्धिवत् त-दानीमिव कालान्तरे नोपयुज्यन्ते। संस्कारप्रमोषे तत्प्रमोषादित्येतत्सर्वं प्रसिद्धि-द्योतकेन खलुशब्देन बोत्यते। चक्षुरादिगम्याः परेषां व्यापाराः कार्त्स्न्येन चरैरवगम्यन्ताम्। सूक्ष्ममतिदुरधिगमाः संवृतिमतां सपत्नानामभिप्रायास्तु कथमवगम्येरन्। तदभिप्रायेष्वविज्ञातेषु कथं तद्विषयो विधिर्विधातुं शक्यः स्यादित्याशङ्कयाह — परप्रणीतानि वचांसि चिन्वतामिति। एतन्मादृशामि-त्यस्य विशेषणम्। परैः सपत्नैः। कृतानि प्रणीतानि संवरणाय सङ्केतितानि। वचांसि वाक्यानि। चिन्वतामनुस्मृत्य मनसि सङ्घातं नयतामित्यर्थः। एतदुक्तं भवति — निगूढा अपि सपत्नव्यापाराः परिच्छिन्ना एव। तदभिप्रायास्तु मया-न्यैरपि चैरैरपरिच्छेद्या एव। किन्तु तदभिप्रायस्याभ्यन्तरस्य द्वारोद्घाटनाय मया प्रयत्नः कृत एव। तद्यथा तथा तथा तांस्तान् प्रति तैः सपत्नैः कलितानि रहस्यवचनानि मया मनसि धार्यन्त एव। तान्याकर्ण्य तदभिप्रायं विज्ञाय यथोचितं विधास्यति महाराज इति ॥ २५ ॥

इतीरयित्वा गिरमात्तसत्क्रिये
गतेऽथ पत्यौ वनसन्निवासिनाम्।
प्रविश्य कृष्णासदनं महीभुजा
तदाचचक्षेऽनुजसन्निधौ वचः ॥ २६ ॥

१. 'च', २. [illegible] पाठः, ३. 'तदाक' ग. घ. पाठः.

इतीरयित्वेति। अथ महीभुजा तद्वच आचचक्षे। अथानन्तरम्। महीभुजा राज्ञा। तच्चरोक्तम्। वचो वचनम्। आचचक्षे ऊचे। कदा किं कृत्वा कुत्रे-(ति ? त्याह) — इति गिरमीरयित्वा वनसन्निवासिनां पत्यौ गते कृष्णासदनं प्रविश्य अनुजसन्निधौ (इति)। 'ईर प्रेरणे' इति पठितोऽपि धातुरत्र वचनार्थः, अनेकार्थत्वाद् धातूनाम्। अथवा माधुर्यगाम्भीर्यवतीं प्रथमसङ्गमे व्रीलयावनतां दयितां दयितसकाशमिव युधिष्ठिरसकाशं गिरं नीत्वेत्ययमर्थो गिरमिति स्त्रीलिङ्गेनेरयित्वेत्यनेन च द्योत्यते। आत्तसत्क्रिये आत्ता स्वीकृता सत्क्रिया आदरो येन स आत्तसत्क्रियः, तस्मिन्। आत्मना समर्पितामर्थानुबन्धिनीमनवद्यां गिरं गृहीत्वा प्रसन्नेन महाराजेन प्रतिविहितां तदनुरूपां सत्क्रियां प्रीत्या प्रतिगृह्य स वनेचरश्चरितार्थोऽभूदिति द्योतयितुमात्तसत्क्रिय इत्युक्तं न सत्कृत इति। सत्कृत इत्युक्ते राज्ञा सत्क्रिया कृतेत्येव प्रतीयते, न तु तया सत्क्रियया स प्रीत इत्यपि। आत्तसत्क्रिय इत्युक्ते तदुभयं प्रतीयते। पूर्वं वनेचरशब्देनोक्तस्य चरस्य सम्प्रति वनसन्निवासिपतिशब्देनोक्तिस्तस्मै तदानीं महाराजेन कृतं तदनुरूपमादरविशेषं द्योतयति। वने समन्ततो नित्यं वसनशीलानां किरातादीनां पत्यौ भर्तरि नियन्तरीत्यर्थः। तेन तस्मै तदानीं दत्तं सर्ववनेचराधिपत्यं पत्याविंत्यनूदितं, न तु पतिं चकार पतिर्बभूवेति वा विहितम्। तेन महाराजवचनमात्रायत्तं तस्य तदाधिपत्यं, न तत्प्रकृतिसमाहारापेक्षमिति युधिष्ठिरस्य प्रभावातिशयः प्रकाश्यते। ननु वनसन्निवासिनां पत्यौ गते महीभुजा तद्वच आचचक्ष इत्युक्ते वनेचरगमनानन्तर्यं प्रतीयते। तत् किमथशब्देनेति। उच्यते। तस्मिन् गते युधिष्ठिरस्तस्येङ्गिताकारविशुद्धिं वचनविशुद्धिमभिप्रायविशुद्धिं पुनरात्मनः कर्तव्यविशेषं च पर्यालोचयत्। तस्य पर्यालोचनस्यानन्तर्यमथशब्देन द्योत्यते। कृष्णासदनं प्रविश्येति। विद्याविनयविवेकमाधुर्यधैर्यादिभिर्गुणैरियं गरीयसां मनांसि कर्षतीति कृष्णाशब्दस्य निरुक्तिः। "प्रिया च दर्शनीया च पण्डिता च पतिव्रता। ततः कृष्णा धर्मराजमिदं वचनमब्रवीत्॥" इत्यादौ भारते[2] प्रतीयते। सीदत्यस्मिन्निति व्युत्पत्त्या सदनशब्दो गृहे योगरूढः। तेन कार्यनिरूपणानुगुणं स्थानमिति प्रतीयते। कृष्णायाः याज्ञसेन्याः। सदनं निवासम्। प्रविश्य प्रसादनायाभ्यन्तरं गत्वेत्यर्थः। तां स्वगृहमानीय

१. 'ति धा' क. ग. घ. पाठः. २. ... [illegible] घ. पाठः.

तस्यै सपत्नसाम्राज्यकथने प्रागेव परिभवाभिपन्नदग्धचेतसस्तस्याः मन्युशोक-प्रवाहः परिवर्धेत। तद्गृहं गत्वा तादृशोदयस्य सुयोधनस्याध्यवसायमभिधाय तं प्रति किं विधेयमिति कार्यनिरूपणे प्रस्तुते तत्सम्भावनाप्रसादितायास्तस्या मन्यु-शोकवेगः शनैः शाम्येदिति युधिष्ठिरस्यालोचनं कृष्णासदनं प्रविश्येत्यनेन द्यो-त्यते। अनुजसन्निधाविति। अनुजानां यवीयसां सोदराणाम्। सन्निधौ सन्निकर्षे श्रवणगोचरे। न तु तेषु कञ्चिदभिमुखीकृत्येति सौभ्रात्रनिर्वेर्युधिष्ठिरस्य भ्रातृषु समञ्जसत्वं द्योत्यते। सपत्नस्य सुयोधनस्य साम्राज्यश्रवणे तत्क्षणभाविनं भीमा-दीनां भावविशेषमवगम्य तद्विकारनिर्वर्तनेन तान् क्रमेणात्ममतानुगुणान् वि-धास्यामीति युधिष्ठिरस्याध्यवसायः सोदरसन्निधौ चरवचनाख्यानेन प्रतीयते। चरवचनमाचचक्ष इत्युक्तं, न तु चरवचनस्याभिप्रायं आचचक्ष इति। तेन परीक्षको युधिष्ठिरश्चरवचनं भीमादीनभिश्राव्य तदभिप्रायविषयं तेषां बुद्धिविशेषमवगन्तुमैच्छादिति द्योत्यते। महीं भुनक्ति रक्षतीति व्युत्पत्त्या राज-नि योगरूढो महीभुक्शब्दः सपत्ननिरसनेन भूयो युधिष्ठिरस्य महीपालनाध्य-वसायं द्योतयति ॥ २६ ॥

> निशम्य सिद्धिं द्विषतामपाकृती-
> स्ततस्ततस्त्या विनियन्तुमक्षमा।
> नृपस्य मन्युव्यवसायदीपनी-
> रुदाजहार द्रुपदात्मजा गिरः ॥ २७ ॥

निशम्येति। द्रुपदात्मजा गिर उदाजहार। किं कृत्वेति तत्राह— ततो द्विषतां सिद्धिं निशम्येति। ततो युधिष्ठिरात्। द्विषतां शत्रूणाम्। द्विषतामिति बहुवचनेन दुर्योधनादयश्चत्वारो युधिष्ठिरस्य विरोधिनो वि-वक्ष्यन्ते। द्विषतां दुर्योधनकर्णशकुनिदुःशासनानामित्यर्थः। "दुर्योधनो मन्युमयो महाद्रुमः" इत्यत्र वात्सल्यविवशीकृताम्बिकेयावलम्बानां तेषां चतुर्णामेव धर्मराजप्रत्यनीकत्वेनोपक्रमात्। "दुर्योधनस्य कर्णस्य शकुनेः सौबलस्य च। दुःशासनचतुर्थानां भूमिः पास्यति शोणितम्॥" इत्या-

१. 'ब एवाच' ख. पाठः.

दिषु च श्लोकेनु तथैवं हि प्रतीयते । सिद्धिं साम्राज्यलाभम् । दुर्योधनस्य सिद्धिं कर्णादयः स्वसिद्धिमेव मन्यन्ते, न तु ते तद्व्यतिरेकेण प्रातिस्विकीं सिद्धिमपेक्षन्त इति तेषामैकमत्यमेकस्याः सिद्धेर्बहुभिः सह सम्बन्धकथनेन द्योत्यते । निशम्य श्रुत्वा । श्रुतिमात्रेण प्रतीत्य, न विवेकपूर्वं तत्त्वतोऽवगम्येत्यर्थः । चरवचने वक्तुर्विपश्चितो युधिष्ठिरस्य द्विषत्सिद्धिनिशमनक्रियायामपादानत्वं तत इत्यनेन ज्ञापितम् । निशमनोदाहरणक्रिययोर्मध्यवर्तिनीं विमर्शनक्रियां वारयितुं सिद्धिं निशम्योदाजहारेत्युक्तं, न सिद्धं निशम्य विविच्योदाजहारेति । ततस्त्याः अपाकृतीः विनियन्तुमक्षमा । ततस्त्यास्तेभ्यो द्विषद्भ्य आगताः । 'अव्ययात् त्यप्' (४. २. १०४) इति शैषिकस्त्यप्प्रत्ययः । अपाकृतीर्निराकरणानि पणीकरणकेशग्रहणोरुदर्शनरूक्षभाषणादीनि । विनियन्तुं विवेकेन नितरामुपरमयितुं विस्मर्तुं सोढुं वेत्यर्थः । अक्षमा अशक्ता । पापीयान् सुयोधनः पश्चादुच्छेद्यः स्यादित्याशाबलेन पूर्वमपाकृतयः सोढाः । तदानीं तु तत्साम्राज्यश्रवणे तदुच्छेदाशाविनाशादसह्यतराभिरनुस्मृताभिरपाकृतिभिर्दह्यमानहृदयेत्यभिप्रायः । अपाकृतीनां बहुत्वकथनेन तेषामपाकर्तॄणां समस्तानां द्विषतां द्वेषानुबन्धो वध्यता च द्योत्यते । ननु सा धर्मात्मजपत्नी धर्मात्मजवत् प्रागिव तदानीमपि तान् परिभवान् सोढुमर्हत्येव । तत् किमुच्यते अपाकृतीर्विनियन्तुमक्षमेति । इयं शङ्का द्रुपदात्मजेत्यनेन निरस्यते । द्रुपदो हि द्रोणविहितेन परिभवेन दह्यमानस्तत्प्रतीकारमनुपलभ्य भोजनादीन्यपि नाभ्यनन्दत् । ततस्तदात्मजा सता कथमसावप्रतीकारास्तादृशीरपाकृतीस्तदानीं सोढुं शक्नुयादित्यभिप्रायः । गिरो वचनानि । किंप्रयोजनाः । नृपस्य मन्युव्यवसायदीपनीः नृपस्य मनुष्यादीनां परिपालकस्य महाराजस्य युधिष्ठिरस्येत्यर्थः । मन्युव्यवसाययोर्दीपने ज्वलने करणभूता इत्यर्थः । मन्युशब्देन द्विषद्विषयो रोष इह विवक्ष्यते । व्यवसायशब्देन तेषां द्विषामुच्छेदनिश्चयः । ज्वलनाविनाभूतया दीपनक्रियया मन्युव्यवसाययोर्ज्वलनत्वरूपणं गिरामिन्धनत्वरूपणं च द्योत्यते । अथवा मन्युव्यवसायस्य दीपिनीरिति समासः । मन्युविषयो व्यवसायः मन्युव्यवसायः । परिपालनविरोधिषु ज्ञातिषु कोपः कर्तव्य एवेति नि-

---

१. 'व प्र', २. 'यायां वारयतीति सि' ख. पाठः. ३. 'रपा' क. ग. पाठः ४. 'दनि', ५. 'सार्थः । म' क. ग. घ. पाठः.

श्रय इत्यर्थः । गिर इति बहुवचनेन मन्युव्यवहारदीपने गिरः प्रकारबहुत्वं द्योत्यते । उदाजहारेति प्रतिज्ञाहेत्वपेक्षितमुदाहरणजातमुपन्यस्यन्ती जगादेत्यर्थः । उदाहरतिरुदाहरणोपन्यासवति वचनविशेषे हि प्रसिद्धः, वचनसामान्येऽपि क्वचित् प्रयुज्यत इत्येव । उदाजहारेति परस्मैपदेनोदाहरणक्रियाफलं मन्युव्यवसायदीपनं युधिष्ठिरसंबन्धीति द्योत्यते । सम्राजो दुर्योधनस्य शासनानुगाः सर्वे नृपतय इति तस्य वधो जयो वा न सुकर इति युधिष्ठिरस्य मन्युव्यवसायदीपनं तदानीमनर्थकमेवेति शङ्कापि द्रुपदात्मजेत्यनेनैव निरस्यते । तादृशतेजोभिमानविक्रमापत्यसम्पादनेन नैकाक्षौहिणीपतिः पाञ्चालराजः सम्राजमपि तादृशपरिभवविधायिनं सुयोधनं प्रत्यभियोक्तुं युधिष्ठिरानुमतिमात्रमपेक्षत इति सपत्नाभिबोकुर्जामातुर्युधिष्ठिरस्य साचिव्यं विधातुं समस्तं सङ्ग्रामभरं वोढुं च पर्याप्त इति पितुः पाञ्चालराजस्य स्वभर्तृहितविधाने शङ्कितात्पर्ये विज्ञातवत्या याज्ञसेन्यास्तदानीं युधिष्ठिरव्यवसायदीपनमर्थवदेवेति भावः ॥ २७ ॥

महोदयभाजो दुरुच्छेदेनातिनृशंसांस्तान् द्विषतो विचिन्तयन्ती तपोधनान्वितं वनवासाभिनन्दिनं मन्दाभिमानमन्युमजातशत्रुं च पश्यन्ती परिभवाभिषङ्गविधूतधैर्या द्विषद्वधाय महाराजं भर्तारं प्रति अनुचितमनुशासनं विधास्यन्ती विविधसदाचारज्ञा याज्ञसेनी दुःखशोकविवशाया मम विलपितं क्षन्तव्यमिति महाराजं प्रसादयति — भवादृशेष्वित्यादिना ।

भवादृशेषु प्रमदाजनोदितं
भवत्यधिक्षेप इवानुशासनम् ।
तथापि वक्तुं व्यवसाययन्ति मां
निरस्तनारीसमया दुराधयः ॥ २८ ॥

भवादृशेषु प्रमदाजनोदितमनुशासनमधिक्षेप इव भवति । भवानिव दृश्यमाना भवत्सदृशा भवादृशाः, तेषु । अधिकरणविशेषो विषय इह सप्तम्या विवक्ष्यते । प्रमदाजनेन स्त्रीसमूहेन । उदितमुक्तम् । अनुशासनं प्रतिविधेयनियोगः । अधिक्षेप इव भवति आक्रोशवज्जायते । प्रसादेन माद्यतीति प्रमदाशब्दस्य निरुक्तिः । तेन विषादेन शोचतीत्यपि प्रतीयत एवेति हर्षशोकविवशतया विज्ञानशक्तिविकला स्त्री संततमनुशासनीया कथमनु-

शासितुमर्हतीति प्रमदाशब्देन द्योत्यते। बहवः संहता वस्त्वेव वदन्तीत्युत्सर्गः। स्त्रियस्तु बह्वयः संहता अपि वस्तु विवेक्तुं वक्तुं च न शक्नुवन्तीति द्योतयितुं जनशब्दः प्रमदाशब्देन विशेषितः। बह्वीभिः संहताभिः स्त्रीभिरुदितमनुशासनमधिक्षेप इव भवतीत्युक्त्या स्त्रियोदितमनुशासनं कीदृशमिति न ज्ञायत इति द्योत्यते। अनौचित्यातिशयेन प्रतीयमानेन साधारणधर्मेणानुशासनस्याधिक्षेपसाम्यम्। प्रमदाजनोदितमनुशासनम् अधिक्षेपवदनुचिततरमित्यनेन पण्डितजनोदितस्याप्यनुशासनस्यानुचितत्वं द्योत्यते। भवादृशेष्वित्युक्तं न भवतीति। तेन भवद्विषयमनुशासनमियत्तया निश्चेतुं न शक्यमिति द्योत्यते। अधिक्षेपसाम्यस्य वास्तवं द्योतयितुं भवतीत्युक्तं न प्रतिभातीत्यादि। तथापि दुराधयो मां वक्तुं व्यवसाययन्ति। यद्यप्येवमित्यर्थात् सिध्यति। सन्निहितमनुशासनपदं विभक्तिविपरिणामेन वक्तुमित्यत्र कर्मत्वेनानुषज्यते। तेनानुशासनं वक्तुमित्यन्वयः सिध्यति। वचनमात्रव्यवसायश्चेदभिप्रेतः पूर्वार्धसूचिता स्ववचस्यपराधशङ्का द्रौपद्या असङ्गतैव स्यात्, युधिष्ठिरं प्रति तस्या वचनमात्रस्यानौचित्याभावात्। अथवा वचिधातुरत्र वचनविशेषेऽनुशासने वर्तते। विशेषसन्निध्याकाङ्क्षयोः सामान्यवचनशब्दो विशेषे पर्यवस्यति। दुष्टा आधयो मनोभिषङ्गा दुराधयः। केशग्रहणादिपरिभवदुष्टकारणजन्याः, न दैवैकहेतुका इत्यर्थः। दुःसहा आधयो वा दुराधयः। व्यवसाययन्ति निश्चाययन्ति, न सन्देहयन्ति। अनुशासनव्यवसाये दुराधीनां प्रयोजकत्वमुक्तं, न हेतुत्वमात्रम्। तेन तासां प्राबल्यं द्योत्यते। विशेषपर्यवसायि मामित्यस्मच्छब्दैकवचनं साक्षात्परिभूतत्वधैर्याभावस्त्रीत्वादीन् परिभवासहनहेतून् प्रद्योतयद् द्रौपद्या भीमादिभ्यो व्यावृत्तिं द्योतयति। ननु नारी नरं प्रत्येवं ब्रूयात्, पतिं प्रत्येवं, महाराजं प्रत्येवं, पतिव्रता त्वेवमिति श्रुतिस्मृतिसदाचारकल्पिताः सङ्केता अनुचितानुशासनव्यवसायं निवर्तयन्तीति चेत् तत्राह — निरस्तनारीसमया इति। निरस्ता बहिःक्षिप्ता दूरमप-

१. 'द्यो व', २. 'क्त्यैकया स्त्रि' ख. पाठः

सारिता नारीणां स्त्रियां समयाः सङ्केता याभिस्ता निरस्तनारीसमयाः । नारी-मात्रसङ्केतनिरासे पतिव्रतादिविशेषसङ्केतनिरासं प्रति किमु वक्तव्यमित्य-भिप्रायः ॥ २८ ॥

कुरुसभायां प्रतिश्रुतो वनवासादिसमयो न लङ्घनीय इति धर्मात्म-जस्य मतमुपपत्त्यापनुद्य द्विषद्वधाय तं प्रोत्साहयितुं महाराजधर्मपत्नी महाराजेन कृतस्य महीत्यागस्य वनवासादिसमयस्य च धर्मादिविरोधितयानौचित्यमुप-पादयति — अखण्डमित्यादिना ।

अखण्डमाखण्डलतुल्यधामभि-
श्चिरं धृता भूपतिभिः स्ववंशजैः ।
त्वयात्महस्तेन मही मदच्युता
मतङ्गजेन स्रगिवापवर्जिता ॥ २९ ॥

त्वया मह्यपवर्जिता । त्वयेति, भ्रातॄणां बन्धूनां वा तत्र नानुम-तिरिति भावः । महीशब्देन त्यागविषयस्यानल्पत्वं द्योत्यते । अपव-र्जिता अपवादायापकर्षाय च त्यक्ता । त्यागो यशोधर्मोन्नतिविरोधीति भावः । ननु द्विषता हृता मही न मया त्यक्तेति राज्ञः शङ्कामपाकरोति — आत्महस्ते-नेति । चतुर्विधो हि त्यागः मनसा चक्षुषा वचसा हस्तेनेति । तत्र हस्तकरण-त्यागः स्फुटतर इति महीत्यागस्य स्फुटतरत्वं द्योतयितुं त्यागे हस्तः करणत्वे-नोक्तः, न चक्षुरादि । मणिहिरण्यादिपणीकरणे द्यूते च करणभूतः करो मही-त्यागेऽपि करणमेवेति भावः । नदीवेगादिप्रणुन्नस्य हस्त इव तव हस्तो न परतन्त्रः, अपितु स्वतन्त्र एवेति द्योतयितुमात्मेति हस्तविशेषणं कृतम् । स्व-तन्त्रस्य महीत्यागे को हेतुरिति, तत्राह—मदश्च्युतेति । मदं श्च्योततीति क्षर-तीति मदश्च्युत् । तेनान्तर्व्याप्तबहिर्व्यक्तमदेनेत्यर्थः । अकृतार्थतायां कृतार्थ-ताप्रतीतिर्मदः । दिव्यादिव्यविभूतिविस्मापितसमस्तलोके तत्तदभीष्टदानमानादि-मोदितमनुजसमाजे हर्षितवसिष्ठादिमहर्षिजने नन्दितमहेन्द्रादिवृन्दारकवृन्दे निरन्तरापातितकर्मकरीभूतभूपालपरिषद्-परार्ध्यकरप्राभृतपरम्परापारिवाहिनि

१. 'स्त्रीणां स', २. 'दिस', ३. 'क्ता । महीत्या', ४. 'ति भावः । त' क. ख. घ. पाठः. ५. 'त्यक्ति' ६. 'क्षावित', ७. 'त्यागे न' ख. पाठः.

परदुष्करे पुष्कराक्षनेतृके निरन्तराये निर्वर्तिते महाक्रतौ कात्स्न्येन निर्वर्तितो मया त्रिवर्गः[1] । तत् किं त्रिवर्गसाधनेन साम्राज्येन । अतःपरमपवर्गार्थमुद्यमो विधेय इति महाराजस्य कृतार्थताप्रतीतिं महीत्यागे हेतुं तद्धर्मपत्नी मदश्च्युतेत्यनेन द्योतयति, न प्राकृतजनोदितं मदम् । तादृशस्य मदस्य तत्रासम्भवात् । ननु त्रिवर्गानुष्ठानानन्तरमपवर्गार्थिना कृतो महीत्यागो लोकानुमत एवेति, तत्राह — मतङ्गजेन स्रगिवेति । यथा महाद्रिशिरसि महानदीमिव महागजमस्तके शोभातिशयं पुष्यन्तीं पुष्पमालां मदान्धेन मतङ्गजेन निरस्तां निरीक्ष्य (यथा?) लोकः शोचति, तथैव साम्राज्यगुणान्वितेन कृतार्थताभ्रान्तिविगलितविवेकेन भवतापवर्जितां वसुमतीं विलोक्य सकललोको विलपतीत्यभिप्रायः । ननु पूर्वैः पूर्वतरैश्च राजभिः साम्राज्यमुत्सृज्य पावनानि तपोवनानि सेवितानीति श्रूयते । तस्मादस्माकं महीत्यागे वनवासे च को दोष इति शङ्कायामाह — भूपतिभिश्चिरमखण्डं धृतेति । चिरं दीर्घकालम् । तेन यागादिवत् सकृदनुष्ठानान्न पर्याप्तं महीपालनमिति गम्यते । अखण्डमिति क्रियाविशेषणम् । विभक्तावयवार्थः खण्डशब्दः । अखण्डमविभक्तावयवं, कृत्स्नमित्यर्थः । धृतिक्रियागतमखण्डत्वं धार्यमाणमहीगतमखण्डत्वं द्योतयति, कारककात्स्न्याधीनत्वात् क्रियाकात्स्न्यस्य । धृतेति । रक्षणभरणनियमनसाधारणे धृङ्धातुर्वर्तते । तेन धृतेत्यनेन रक्षिता भृता नियमितेति च गम्यते । शब्दशक्तिमूलानुस्वानशक्त्या धृतेत्यनेन प्रीणितेत्यपि प्रतीयते । 'धृङ् प्रीतावि'ति च धातुः पठ्यते । भूपतिभिरित्युक्तं न भूपालैरिति । तेन सहधर्मचारिण्याः पत्न्या इव समस्तपुरुषार्थशेषभूताया भुवो रक्षणादि क्षत्रियैर्यावज्जीवमनुष्ठेयमिति गम्यते । अखण्डं मही धृतेत्यनेन पूर्वेषां[2] भूपतीनां महीधारणकात्स्न्यमुक्तम् । तेन सम्राड्गुणान्वितः क्षत्रियः क्षितिपालनरूपं स्वधर्मं यागादिवत् स्वयमेव कात्स्न्येनानुष्ठातुमर्हति । नासौ धर्मः क्षेत्रादिवद् ज्ञातिभ्यो विभक्तव्य[3] इति द्योत्यते । तेन सुयोधनादिषु त्वया कृतो महीविभागनान्तरीयको महीपालनधर्मविभागो न युज्यत इति व्यज्यते । आखण्डलतुल्यधामभिरिति । अखण्डमैश्वर्यं विज्ञानं वा लाति गृह्णातीत्यखण्डलः । अखण्डल एवाखण्डलः । 'अन्येषामपि दृश्यते' (६. ३. १३७) इति

---

१. 'र्ग इति त' ख. पाठः. २. 'षां महीप' क. ग. ख. पाठः. ३. 'पालनान्त' ख. पाठः.

दीर्घः। पृषोदरादिसूत्रेण वा। एवमिन्द्रे योगरूढ एवाखण्डलशब्दः। इह त्वाखण्डलशब्देनाखण्डलाश्रितं तेजो लक्ष्यते, अव्यभिचारात्। तेनाखण्डलधामतुल्यधामभिरित्यर्थः सिध्यति। धामशब्दस्तेजोवीर्यवचनः। आखण्डलसादृश्यकथनेन पूर्वेषां भूपतीनां समग्रमहीपालनशक्तिर्द्योत्यते। स्ववंशजैरिति स्वस्मिन् वंशेऽन्वये जातैः पुरुप्रभृतिभिरित्यर्थः। सोमवंशस्य पुरुप्रभृतिभिरुपलक्षितस्य युधिष्ठिरेणोपलक्षणं पूर्वराजर्षिसम्बन्धाद् युधिष्ठिरसम्बन्धस्तस्य वंशस्य श्लाघ्यतर इति द्योतयति। तेन तेभ्यो भूपतिभ्यो युधिष्ठिरस्य महीयस्त्वं द्योत्यते। आखण्डलतुल्यधामभिरित्यनेनानुस्वानशक्त्यान्योऽप्यन्वयो ध्वन्यते। आखण्डलतुल्येति युधिष्ठिरस्यामन्त्रणम्। धामशब्दः शक्रसादृश्यहेतुं साधारणधर्ममुपस्थापयति। धामभिरिति बहुवचनेन बहुविधानि तपोविक्रमादीनि युधिष्ठिरसम्बन्धीनि तेजांसि द्योत्यन्ते। एवमनुस्वानशक्त्या द्योतितेन सर्वगुणान्वितस्य युधिष्ठिरस्य समग्रेण शक्रसादृश्येन त्रिभुवनपरिपालनसमर्थस्य भवतो भूपरिपालनसामर्थ्यं किं वक्तव्यमिति द्योत्यते। शोकवेगविवशया मया मदश्च्युतेत्यादिना महाराजस्य दोषो द्योतित इत्यनुतप्ता पुनस्तत्त्वं विमृशती याज्ञसेनी दैवकृतोऽयं महीत्यागो न पुरुषदोषैकहेतुक इति च मतङ्गजदृष्टान्तेनैव द्योतयति। कथम्। उच्यते। "सामान्यवाचिनः शब्दा भवन्ति श्रेष्ठगामिन" इति न्यायेन मतङ्गजशब्दो मतङ्गजश्रेष्ठं महेन्द्रौपवाह्यमैरावतं विषयीकर्तुं शक्नोति। तथैव स्रक्शब्दोऽपि तेनैव न्यायेन प्रशस्यतमायां मालायां वर्तते। यथा मतङ्गजेन गजश्रेष्ठेनैरावतेन स्रक् प्रशस्यतमा मालापवर्जिता दूरं क्षिप्ता तथा वसुमती त्वया सन्त्यक्तेति वाच्योऽर्थः। प्रतीयमानस्तु भूयान्। तथाहि—विनयावनतया विद्याधराङ्गनया सादरं दत्तामुत्तमां स्रजं सङ्गृह्य गुणवतीयं माला महागुणायैव दातव्येति विमृश्य भुवनेषु सञ्चरता दुर्वाससा मुनीन्द्रेण सा मार्गदृष्टाय महेन्द्राय दत्ता। ततो महेन्द्रो मुनिदत्तां महनीयां मालामादाय द्विपाधिराजस्य निजौपवाह्यस्यैरावतस्य मस्तके न्यस्तवान्। ऐरावतस्तु तस्याः स्रजो गुणविशेषं तस्य मुनीन्द्रस्य महानुभावतां दारुणरोषतां चावगच्छन्नपि नियतिनियन्त्रितमतिर्महनीयां मालां महीतले क्षिप्तवानिति प्रतीयमानेन दृष्टान्तगतेनार्थेन विपश्चिता विवेकिनापि त्वया विधिप्रणुन्नेन परिपाल्या वसुमती परित्यक्तेति दार्ष्टान्तिकगतोऽर्थो द्योत्यते। अनेनैवैरावत-

१. 'ह आख', २. 'लाश्रि', ३. '... पाठः

दृष्टान्तेन द्योतिता तदनादररुषितमुनीन्द्रशापशिथिलितायाः शक्रश्रियः क्षीराब्धिमथनादिना प्रयत्नेन कृता प्रत्यापत्तिर्युधिष्ठिरपरित्यक्ताया भुवः प्रत्यापत्ति प्रवृत्तिसाध्यां द्योतयति। ऐरावतः सङ्गनिरास एव कर्ता न पुनः श्रीप्रत्यानयने। तत्र तु महेन्द्र एव कर्ता। युधिष्ठिरस्तु भुवोऽपवर्जने प्रत्यानयने च कर्तेति युधिष्ठिरस्यैरावताद् व्यतिरेकं विमृश्य उपमालङ्कारोऽङ्गीकृतो न रूपकम्। सम्भाव्यमदः सङ्गनिरासकर्ता दिव्यो मतङ्गजः सम्भाव्यकृतार्थताप्रतीतिरूपमदस्य महीत्यागकर्तुर्युधिष्ठिरस्योपमानत्वेनोक्तः। मर्त्यलोकपालकस्य तस्यैवामर्त्यलोकपालक आखण्डलो दृष्टान्तेन द्योतित इत्यलं बहुना ॥ २९ ॥

ननु शकुन्यादिभिर्द्यूतेन जित्वा हृता मही न मयापवर्जिता। तत् किमुच्यते त्वया मह्यपवर्जितेति युधिष्ठिरस्य मतमाशङ्क्य तेषु मायाविषु अमायित्वं तव दोष इत्युपपादयति — व्रजन्तीत्यादिना।

व्रजन्ति ते मूढधियः पराभवं
भवन्ति मायाविषु ये न मायिनः।
प्रविश्य हि घ्नन्ति शठास्तथाविधा-
नसंवृताङ्गान् निशिता इवेषवः ॥ ३० ॥

ये मायाविषु मायिनो न भवन्ति ते पराभवं व्रजन्ति। मायाविष्विति। मायया नित्यान्वितेष्वित्यर्थः। नित्ययोगे विनिप्रत्ययो न सम्बन्धमात्रे। सर्वविषयमेव मायित्वं दोषो न मायाविविषयम्। मायाविविषयं तु अवञ्चनीयताहेतुतया नैपुणनिमित्तं धर्माद्यनुगुणं गुण एवेति द्योतयितुं मायाविष्विति मायाविषयविशेष उक्तः। मायिन इति परप्रयुक्तमायातिशायिमाया इत्यर्थः। अत्र त्वतिशायन इनिप्रत्ययः। 'अस्मायामेधास्रजो विनिः' (५. २. १२१) इति विनिप्रत्ययः। मायाशब्दस्य व्रीह्यादिपाठाद् 'व्रीह्यादिभ्यश्च' (५. २११६) इतीनिप्रत्ययः। क्रियासामान्ये भवत्यर्थे भवतेरप्रयोगे सिद्धे भवन्तीति पुनर्वचनेन मायिभावस्य प्रेक्षापूर्वतयार्जवाभिश्रत्वमर्थानुबन्धित्वं च द्योत्यते। पराभवं व्यसनं पराजयं वा। व्रजन्ति गच्छन्तीत्यर्थः। ते पराभवं व्रजन्तीत्युक्तं न तु तान् पराभवो व्रजतीति। तेन

१. 'याविस्वं' क. ग. घ. पाठः. २. 'त्वा। त्वया' ३. 'न्ति। ते' ख. पाठः.

पराभवप्राप्तावमायिनां स्वातन्त्र्यावगमात् स्वप्रवृत्तिकृतः पराभवो न परप्रवृत्ति-दैवादिकृत इति द्योत्यते । मूढधिय इत्युक्तं न मूढमनस इति । तेन मूढस्य सङ्कल्पविकल्परूपस्य मनसो निश्चयरूपा बुद्धिरालम्बनं भवेत् । सा बुद्धिरेव येषां मूढा विपर्यस्ता तेषां किमालम्बनमिति द्योत्यते । बलवीर्याविक्रमादिहानिः परिभवहेतुर्न त्वमायित्वम् । तत् कथममायान् मायाविनो मायामात्रेण परिभ-वन्तीत्याशङ्क्याह — शठास्तथाविधान् प्रविश्य घ्नन्ति हीति । निगूढहिंसा-निपुणाः शठाः । तथा तेन प्रकारेण विधा क्रिया व्यापारो येषां ते तथा-विधाः तान् । तच्छब्दः प्रकृतममायित्वमृजुत्वं परामृशति । थाल्प्रत्ययः प्र-कारार्थः । तेन प्रकारेणार्जवेन निष्पन्नक्रियानित्यर्थः । प्रतिवस्तुनियतो धर्म-विशेषः प्रकारः । आर्जवनिष्पन्नक्रियत्वं कथं बाध्यताहेतुरिति, तत्राह — अ-संवृताङ्गानिति । समन्ततो वृतानि गोपितानि मन्त्रसम्बन्धीनि कर्मारम्भोपा-यादीन्यङ्गानि यैस्ते संवृताङ्गाः । न संवृताङ्गा असंवृताङ्गाः, तान् । संवृता-ङ्गविरोधि विवृताङ्गत्वं व्यञ्जयितुं नञत्र समस्तः । प्रकटितगोपनीयमन्त्रानित्य-र्थः । शठानां घातकत्वे हेतुमाह — निशिता इति । नितरां शिताः सूक्ष्मा नि-शिताः । सूक्ष्मतरग्राहिबुद्धय इत्यर्थः । निशितत्वमात्रं कथं घातहेतुरिति, तत्राह — प्रविश्येति । प्रमादेष्वन्तर्गत्वा, अन्तर्गतमभिप्रायं गृहीत्वेत्यर्थः । घ्नन्ति हिंसन्ति, पुनरनुद्भवाय तेषामभिमतं निरुन्धन्तीत्यर्थः । ऋजून् मायिनो हिंसन्तीत्यर्थः, प्रत्यक्षसिद्ध एव नोपदेशगम्य इति प्रसिद्धिद्योतकेन हिश-ब्देन द्योत्यते । शठा ऋजूनामभिप्रायभङ्गादिरूपं हननं कुर्वन्तीत्येव न, अ-त्याहितमपि (तत् ?ते) कुर्युरित्यभिप्रेत्याह — इषव इवेति । यथा निशितास्ती-क्ष्णतरा इषवः शराः असंवृताङ्गाननामुक्तकवचान् प्रकटतरवक्षोहृदयाद्यवय-वान् प्रविश्यापुनरुत्थानाय हिंसन्ति तथेत्यर्थः । अयमभिप्रायः—विदुरादि-मुखेन गुरुशासनं निवेद्य तत्कर्तव्यताप्रत्ययमुत्पाद्य त्वाममायिनं सर्वस्वपणे द्यूते प्रवर्त्य छद्मना जितवन्तः शकुन्यादयो नृशंसाः पुनरपि भवतोऽभिप्रायभङ्गादि-परिभवमिहागत्य प्रमादेष्वत्याहितं वा कुर्युरिति । निशिता अपि शराः स्वय-मचेतना वेद्धृपुरुषायत्तवेगगतयो व्यंसनच्छेदनादिसमर्थैर्यथा कदर्थीक्रियन्ते, तथैव तीक्ष्णस्वभावाः सुयोधनादयः स्वल्पतरबुद्धिबलशक्तयो भीष्माद्यायत्त-

१. 'ण विधि... ' ... पाठः

प्रवृत्तिवेगाः सर्वातिशायिप्रवृत्तिशक्तिभिरस्माभिः बाधितुं शक्या इत्ययं चार्थ इषुदृष्टान्तेन द्योत्यते । अन्यथा द्विषत्सु मायाविष्वार्जवेनास्माकं कार्यसिद्धिर्न स्यादिति तात्पर्यार्थः ॥ ३० ॥

स्वाभाविकं शकुनिभागिनेयस्य मायाविल्वमजातशत्रोरार्जवं च निरूप्य तेषु द्विषत्सु त्वया कृतमार्जवं न युक्तमिति याज्ञसेन्योक्तम् । सैव पुनर्जतुगृहादिषु द्विषद्विहितां निकृतिं मोघीकृतवतो युधिष्ठिरस्यावञ्चनीयत्वमवधार्य त्रिवर्गपर्याप्तिप्रतीत्या कृतार्थम्मन्यतया त्रिवर्गसाधनीं श्रियं जिहासुः त्वमेव तां परैरपहारितवान् न तु छलेन बलेन वा परे हृतवन्तः । तच्चायुक्तमित्याह —— गुणानुरक्तामित्यादिना ।

गुणानुरक्तामनुरक्तसाधनः
कुलाभिमानी कुलजां जनाधिपः ।
परैस्त्वदन्यः क इवापहारये-
न्मनोरमामात्मवधूमिव श्रियम् ॥ ३१ ॥

त्वदन्यः क इव जनाधिपः परैः श्रियमपहारयेत्[1] । इवशब्दो वाक्यालङ्कारार्थः । क इत्येवार्थः । नञ्शब्दः स्वसम्बन्धिनोऽस्वविष (यं ! यत्वं) विषयीकरोति । किंशब्दस्तु स्वसम्बन्धिनः कुत्सितत्वं द्योतयन् निषेधं विषयीकरोति । क इवेति विषयव्याप्तेः[2] किंशब्दः प्रयुक्तः न नञ्शब्दः । जनाधिप इति, सम्राडित्यर्थः । तेन परैरनपहार्यत्वं श्रियो द्योत्यते । परैः, सपत्नैरित्यर्थः । तेन सपत्नहारितायाः श्रियः प्रत्याहरणं दुष्करमिति द्योत्यते । श्रियं साम्राज्यसमृद्धिम् । अपहारयेद् अपकर्षाय पराधीनां कुर्यात् । अात्मश्रियोऽपहारयितुः कस्यचिद् भूतस्य भवतो भाविनो वा न प्राप्तिरिति द्योतयितुमपहारयेदिति सम्भावनार्थो लिङ् प्रयुक्तः, न प्रत्ययान्तरमपहारितवानित्यादि । गुणानुरक्तामित्यादि । गुणैः शौर्यवीर्यादिभिरनुरक्तां सततमारूढप्रणयाम् । क्षणमात्रवियोगमप्यसहमानामिति लभ्यते । कुलजां कुले वंशे जाताम् । स्वस्मिन्नित्यर्थात् सिध्यति । स्ववंशकाश्रयामित्यर्थः । मनोरमामिति धन-

१. 'तान् मे' ख. पाठः. २. 'त् । क इति विषय' क. ग. घ. पाठः. ३. 'अत्र श्रि' ख. पाठः.

धान्यादिसम्पत्सम्पादनेन विशिष्टयज्ञदानादिधर्मशेषतया दुर्लभपरार्ध्योपभोगहेतुतया च तत्तदिच्छान्वितं मनः कृतार्थीकृत्य रमयन्तीं ह्लादयन्तीमित्यर्थः । अनुरक्तसाधन इति अनुरक्तं सततं स्निग्धमन्योन्यस्मिन्नात्मनि च साधनं करणममात्यजनपदसेनादि यस्य सोऽनुरक्तसाधनः । अमात्यादीनां साधनशब्देनोक्त्या गुणोत्तरं जनाधिपं प्रति तेषां शेषतैव नियता न जातु शेषितेति द्योत्यते । कुलाभिमानी, कुलं वंशं स्वमित्यर्थात् सिध्यति, ताच्छील्येनाभिमन्यते आत्मीयत्वेन जानातीत्यर्थः । अन्येषु स्ववंश्येषु सत्स्वपि स्ववंश्यां श्रियं रक्षितुमर्हतीति भावः । स्वाश्रितायाः श्रियः परैरपहारणमनुचितमित्येव न, प्रत्यवायहेतुश्चेत्याह — आत्मवधूमिवेति । आत्मनः पत्नीमिवेत्यर्थः । वधूमित्युक्तेऽन्यसंबन्धिनोऽनुक्तावात्मवधूमित्यर्थे सिद्धेऽपि यत्पुनरात्मशब्देन विशेषणं तेनात्मीयाया वध्वा अन्यसंबन्धायोग्यता द्योत्यते । दृष्टान्ते विशेषणत्रयं यथोचितं योजनीयम् । कुलजां प्रशस्ते कुले जातामित्यर्थः । अन्यदभिन्नार्थम् । एतदुक्तं भवति । समस्तैः सम्राड्गुणैरन्वितस्त्वमनुरक्तामात्मवंशोचितामात्माश्रितां श्रियं सपत्नैरपहारितवान् यत् तत् तादृशोऽन्यो जनाधिपो न कुर्यादिति ॥३१॥

परैरपह्रियमाणामात्मनः श्रियमपवर्गार्थितया यद्यहमुपेक्षितवान्, तर्हि किं मया सावधिर्वनवासः कृत इति, न स्वेच्छाकृतो मे साम्राज्यविश्लेषः, किन्तु सम्प्रति प्रतिकूलदैवेष्वस्मासु विद्विषां छलं फलितमिति युधिष्ठिरस्य मतमाशङ्क्य यदि छलेन परैरपहृतं राज्यं, तर्हि तेषु नैकृतिकेषु वैरिषु कुतस्तव कोपो न भवतीत्याह — भवन्तमित्यादिना ।

> भवन्तमेतर्हि मनस्विगर्हिते
> विवर्तमानं नरदेव! वर्त्मनि ।
> कथं न मन्युर्ज्वलयत्युदीरितः
> शमीतरुं शुष्कमिवाग्निरुच्छिखः ॥ ३२ ॥

भवन्तं मन्युः कथं न ज्वलयति । मन्युः कोपः, रिपुविषय इत्यर्थात् सिध्यति । कथं केन प्रकारेण न ज्वलयति न दीपयतीत्यर्थः ।

१. 'दिशे' क. ग. घ. पाठः. २. 'न्तीमि' ख. पाठः. ३. 'न शे' क. ग. घ. पाठः. ४. 'र्ह इति' ख. पाठः. ५. [illegible] ऽनुक्ताश्चात्म', ६. 'मम' क. ग. घ. पाठः.

सर्वथा ज्वलयितुमर्हतीति भावः। क्षत्रियत्वं तेजस्वित्वमसकृदपकृतत्वं चेत्याश्रयगताः द्वेषानुबन्धनित्यापकारित्वादयो विषयगताः प्रकारा इत्याश्रयविषयगतानां कोपहेतूनां प्रकाराणां बहुत्वं कथमित्यनेन द्योत्यते। कथं भवान् न कुप्यतीत्युक्तौ वैरिषु कोपमात्रस्यौचित्यं प्रतीयते[3] न तदुच्छ्रयस्येति द्विषदुच्छेदहेतोः कोपोच्छ्रयस्याभ्यर्हितत्वप्रतीयते भवन्तं मन्युः कथं न ज्वलयतीत्युक्तं न तु भवान् न कुप्यतीति। उदीरित इति। 'ईर गतावि'ति पठ्यते। उद्धतः धैर्यविवेकविनयादीनधःकृत्य[4] प्रवृद्ध इत्यर्थः। मन्युर्न ज्वलयतीति कथं[5] ज्ञायत इत्यत्राह — मनस्विगर्हिते वर्त्मनि विवर्तमानमिति। वर्त्मशब्देन वनवासतपश्चर्यादि कर्म लक्ष्यते। सत्यरक्षार्थं वनवासादिकर्म क्रियत इत्येव न, तस्येप्सितप्राप्तिसाधनत्वं युधिष्ठिरेणावधार्यते चेति द्योतयितुं वर्त्मनीत्युक्तम्[6]। वनवासादिकर्मणः ईप्सितप्राप्तिसाधनत्वं प्रातीतिकं न वास्तवमित्याह — मनस्विगर्हित इति। मनस्विभिः स्वाधीनमनोभिः महोत्साहशक्तिभिर्गर्हिते निन्दिते। विवर्तमानं विशेषेण व्याप्रियमाणं हिमातपवर्षभूशयनादिक्लेशानविगणय्य तपश्चर्यादिधर्ममभिनन्दन्तमित्यर्थः। वैरिणा विहितस्य परिभवस्यानन्तरं मुनिवृत्तिमास्थितः कथं तस्मै कुप्यतीति ज्ञायत इत्यभिप्रायः। कैश्चिन्मनस्विभिर्गर्हितो[9] वनवासो मनस्विभिरेवाद्रियत[10] इति चेत् तत्राह — नरदेवेति। नरैः क्रीडति नरेषु द्योतते नरान् जिगीषतीत्याद्यर्थयोगान्नरदेवशब्दः क्षत्रिये रूढः। परिपालनादियोग्यो नरदेवो भवान् मुनिसेवितं वनवासमाद्रतुं नार्हतीति भावः। ननु नरदेवाश्च वनवासे तपसि धृतादराः श्रूयन्त इति चेत् तत्राह — एतर्हि[11] इति। एतर्हि अस्मिन् काले यौवने परिभवसमये चेत्यर्थः। जितशत्रवः कृतार्थाः[12] पुत्रसङ्क्रामितश्रियः पूर्वे नरदेवाः वनवासमाद्रियन्ते। त्वं तु रिपुनिराकृतोऽकृतार्थः श्रीपरिच्यावितोऽनपत्यः कुतो वने वस्तुमर्हसीति भावः। 'काल' इत्यधिकृत्य 'इदमो र्हिल्' (५. ३. १६) इति र्हिल्प्रत्ययः। 'एतेतौ रथोः' (५. ३. ४) इतीदम एतादेशः। ननु परिभवमात्रस्मरणेन[13] न मन्युपरवशतया वयं[14] ज्ञातीनां कदनं कृत्वा पौतकिनो[15] भवि-

१. 'तं प्रकारत्रयं द्वे', २. 'नां प्र' क. ग. घ. पाठः. ३ 'ते त' ख. पाठः.
४. 'विवेकधैर्यविन' क. ग. घ. पाठः. ५. 'थं तज्ज्ञा' घ. पाठः. ६. 'क्तं न व' ख. पाठः.
७. 'दिकर्मणामीप्सि', ८. 'नो', ९. 'तोऽपि व' क. ग. घ. पाठः. १०. 'श्रि' ख. पाठः.
११. 'र्हि एतस्मिन्' क. ग. पाठः. १२. तो व', १३. 'त्रेण न', १४. 'वंशज्ञा',
१५. 'पापिनो' ख. पाठः.

व्याम इति चेत् तत्राह — अग्निः शमीतरुमिवेति । शमीगर्भस्तरुः शमीतरुः । मध्यमपदलोपी समासः । शमीगर्भस्याश्वत्थस्यारणित्वं श्रुतौ विधीयते इत्यरणीभूतोऽश्वत्थ इति सिध्यति । अश्वत्थस्याग्न्याविर्भावाधिकरणत्वं द्योतयितुं शमीतरोः शुष्कमिति विशेषणं कृतम् । दृष्टान्तस्य शमीतरोर्विशेषणेन शुष्कत्वेन दार्ष्टान्तिकस्य युधिष्ठिरस्य रिपुपरिभूतत्वरूपं शुष्कत्वं द्योत्यते । तेन युधिष्ठिरस्य रोषाविर्भावाधिकरणत्वमभिव्यज्यते । उच्छिख इति, उद्गतज्वाल इत्यर्थः । उच्छ्रित एव मन्युर्मन्युमन्तं दीपयति नोत्पन्नमात्र इति मन्योरुदीरितत्वविशेषणं कृतम् । उद्गतज्वाल एवाग्निः स्वाधारं दीपयति नाभिव्यक्तमात्र इति अग्निरुच्छिखत्वेन विशेषितः । यथा ह्यरणावुत्पद्य गार्हपत्यादिषु सङ्क्रान्तोऽग्निररणिं गार्हपत्यादींश्च दीपयत्येव, नतु काष्ठादिवद् दहति, तथैव भवत्याविर्भूय भीमादिषु संक्रान्तो मन्युर्भवन्तं भीमादींश्च शोभयत्येव, नतु दुर्मतीनिव दूषयतीत्ययं चार्थः शमीतरुदृष्टान्तेन द्योत्यते । एतदुक्तं भवति — अरणीभूते मथ्यमानेऽश्वत्थेऽभिव्यक्तो गार्हपत्याद्याधारो दुरितदाहकः पावक इव रिपुपरिभूयमाने भवत्यभिव्यक्तो भीमाद्याधारो दुष्टतमद्विषत्कुलप्लोषी रोषः समस्तभुवनाभ्युदयसम्पादक इति सुयोधनादिवधे न कश्चिद् दोष आशङ्कनीय इति ॥ ३२ ॥

ननु परिभवपरिहारहेतुः कोप एवेति नियमो नास्ति । क्वचित् कोपः, क्वचित् क्षमा, क्वचिदुपेक्षेत्यादि नयविद आहुः । तत् किमुच्यते अद्य कोप एवोचित इति शङ्कायामाह —

> अवन्ध्यकोपस्य विहन्तुरापदां
> भवन्ति वश्याः स्वयमेव देहिनः ।
> अमर्षशून्येन जनस्य जन्तुना
> न जातहार्देन न विद्विषादरः ॥ ३३ ॥

अवन्ध्यकोपस्येत्यादि । अवन्ध्यकोपस्य देहिनो वश्या भवन्ति । वन्ध्यो निष्फलः कोपो यस्य स वन्ध्यकोपः । तदभावतदन्यतद्विपरीता नञर्थाः । अत्र तु तद्विपरीतो गृह्यते, अधर्म इत्यादिवत् । यथा वन्ध्यशब्देन नैष्फल्य-

१. 'ह्यते'। [illegible]

नियमः प्रतीयते, तथैव तद्विपरीतार्थेनावन्ध्यशब्देन साफल्यनियम इति। नियतकोपफलस्येत्यर्थः। तेन कोपपरतन्त्रस्याविवेकाधीनस्य कोपफलमेव न स्यात् कुतस्तु नियम इति रोषसम्भवान्महानपनयः स्यादिति शङ्का निरस्तैव। देहिनो देहवन्तः, देहस्यात्मीयतया रक्षणभरणपोषणान्यभिलषन्तो मनुष्यादय इत्यर्थः। वश्या इति। 'वश कान्तावि'ति धातोर्निष्पन्नो वशशब्द इच्छार्थः। वशस्य हिता वश्याः इच्छानुविधायिन इत्यर्थः। भवन्तीति। परमार्थतो वश्या भवन्ति, न छद्मना वश्यतया प्रतिभान्तीति भावः। स्वयमेवेति। तद्व्यापारस्य लेशमप्यनपक्षेन्त इत्यर्थः। प्रतिकूलकारिषु अव्यभिचरितं कोपफलं पश्यन्तो देहादिभङ्गभीत्या तत्प्रतिकूलानि दूरतः परिहरन्तः तदनुकूलान्येवाचरन्तीत्यभिप्रायः। ननु यद्यप्यवन्ध्यकोपस्य देहिनो वश्या भवन्ति, तथापि ते तस्मिन्नानुरज्यन्ति प्रत्युत तदपकारस्मरणादपरज्यन्ते चेति जनापरागनिमित्तदुरितकारकास्तदन्तरान्वेषिद्विषत्कृताश्चापदस्तस्य भवन्त्येवेति दण्डेन जनवशीकरणं दुरन्तमेवेति चेत् तत्राह—आपदां विहन्तुरिति। आपदां व्यसनानाम्। विहन्तुर्विशेषेण हिंसितुः, नाशयितुरित्यर्थः। उचितकोपफलप्रदानेन देहिनो वशीकुर्वाणस्यावन्ध्यकोपस्य यद्यप्यापदो भवन्ति, तथाप्यसौ तत्तदुपायैस्तासां विघातं स्वयमेव विधास्यति। उत्साहनीतियुक्तस्य तेजस्विनस्तस्य यथा देहिनां वशीकरणमप्रतिबन्धं वर्तते, तथैव व्यसननिरसनमपीति दण्डेन दण्ड्यानां त्रासनं स्वन्तमेवेति तात्पर्यार्थः। एवमपकारिविषयकोपफलप्रकाशनस्यान्वयमुखेन फलमुपपाद्य व्यतिरेकमुखेनोपपादयति— अमर्षशून्येनेत्यादिना। अमर्षशून्येन जनस्य न आदरः। अमर्षशून्यविषयो जनस्य संबन्धी आदरो बहुमानो न भवति प्रतिभाति चेत्यर्थः। अमर्षशब्देनामर्षकारणभूतः कोपो लक्ष्यते अमर्षोपस्कृतस्यैव कोपस्य फलवत्त्वं न केवलस्येति द्योतयितुम्। शून्यशब्देन तुच्छवाचिना वन्ध्यार्थो लक्ष्यते वन्ध्यस्य फलजननाशक्तस्य सत्तैव नास्तीति द्योतयितुम्। अमर्षे शून्यः अमर्षशून्यः। 'सप्तमी शौण्डैः' (२. १ ४०) इति सप्तमीसमासः। तेनामर्षशून्येनेत्यस्य वन्ध्यकोपेनेत्यर्थः सोपस्कारः सिध्यति। अमर्षशून्योऽप्या-

१. 'थोऽव' क पाठः. २. 'ननु को' घ. पाठः.. ३. 'ज्यन्त्येवेति',. ४. 'त्ता जनापकारकारितन्दुरितहेतुकास्त', ५. 'दर्शने दे' क. ग. घ. पाठः. ६. 'य' ख. पाठः. ७. 'नसं', ८. 'र्षा नाद', ९. 'नो अ' क [illegible] पाठः.

भिजात्यादिभिरुपाधिभिर्यद्यप्यादरविषयः स्यात्, तथापि स्वगुणहेतुकस्तत्रादरो नास्तीति द्योतयितुममर्षशून्येनेत्युक्तं नामर्षशून्य इति। अमर्षशून्यं महान्तो नाद्रियन्त इत्येव न, प्राकृता अपि नाद्रियन्त इति द्योतयितुं जनस्येत्युक्तं, न वीराणां, धीमतामित्यादि च। नन्वदृष्टदोषा जनाः स्निह्यन्तः स्निह्यन्तमाद्रियन्ते, दृष्टगुणा द्विषन्तो द्विषन्तं निन्दन्तीति स्नेहद्वेषहेतुकावादरानादरौ न तेजस्वितागुणसद्भावनिमित्ताविति चेत् तत्राह — न जातहार्देन न विद्विषेति। जातहार्दविद्विष्शब्दावमर्षशून्यविशेषणत्वेनोक्तौ। अर्थसिद्धत्वाज्जनविशेषणत्वेनानुक्तौ जनविशेषणत्वेनापि योजनीयौ। तथासत्येव जातहार्देनामर्षशून्येन जातहार्दस्य जनस्य नादरः विद्विषा अमर्षशून्येन विद्विषो जनस्य नादर इति परिपूर्णो वाक्यार्थः सिध्यति। मित्रामित्रयोस्तदादराभावस्य पृथक् प्राधान्यप्रतीत्यर्थमुभयत्र नञ् प्रयुक्तः, एकत्र नानुषञ्जितः। स्वत एव जातं नोपकारादिभिर्जनितं हार्दं स्नेहो यस्य स जातहार्दः। हार्दशब्देनोक्तिः स्नेहस्य सदा दर्शनाद्यभावेऽपि हृद्यनुस्यूतत्वं द्योतयति। जातहार्देनेति, नैसर्गिकेण बन्धुनेत्यर्थः। विशेषेण द्वेष्टि विच्छेदार्थमपि यतत इति विद्विट्। तेन नैसर्गिकेण शत्रुणेत्यर्थः। यथा दोषैकदर्शिनः शत्रोरमर्षशून्यो नादरविषयस्तथा गुणैकदर्शिनो बन्धोरपीति भावः। नन्वादरहेतुश्रीवीर्यविज्ञानादिगुणयुक्तः सन्नमर्षशून्यतामात्रेण कथमनादरविषयः स्यादिति तत्राह — जन्तुनेति। जननमात्रव्यापारेणेत्यर्थः। जन्मनोऽनन्तरं ये व्यापारास्ते सर्वे स्वोत्कर्षेच्छाप्रवर्तकेन परोत्कर्षामर्षेणैव प्रयोज्यन्त इत्यमर्षाभावे वीर्यादिगुणाः सन्तोऽपि नोपकारका इति तेजस्वितैव गुणानां गुणत्वमावहतीति भावः। केचित् त्वादरशब्दं दरशब्दं च तन्त्रेण प्रयुक्तं मन्यमाना जातहार्देनेत्यनेनादरशब्दं विद्विषेत्यनेन भयार्थं दरशब्दं योजयन्ति। एकेनैव शब्देन समीहितसिद्धौ द्वयोः कल्पनमिति तेषां कल्पनागौरवं स्यादेव। वीर्यविक्रमादिगुणान्वितं भवन्तमपहाय सर्वे देहिनस्त्ववन्ध्यकोपस्य सुयोधनस्य वश्या जाताः। ततस्तूर्णं स्वसाम्राज्यफलाय देहिनामात्मसात्करणाय तादृशे सुयोधने विद्विष्यवन्ध्यकोपो भवेद् भवानिति तात्पर्यार्थः। अन्ये त्विमं श्लोकमन्यथा व्या-

---

१. 'णामिति धी', २. 'न्ति। तेषामेके', ३. 'नं गौ', ४. 'स्यात्। बी', ५. 'द्विषत्यव' क. ग. घ. पाठः.

चक्षते। अवन्ध्यकोपस्य आपदां विहन्तुश्च देहिनः स्वयमेव वश्या भवन्ति। अवन्ध्यकोपस्येति। आविष्कृतविग्रहसामर्थ्यस्येत्यर्थः। आपदां विहन्तुरिति। आपद्विघातादिना उपकर्तुर्व्यक्तानुग्रहशक्तेरित्यर्थः। एतदेव व्यतिरेकमुखेन दर्शयत्युत्तरार्धेन — अमर्षशून्येन विद्विषा जनस्यादरो न भवति। जातहार्देन जन्तुना जनस्यादरो नेत्यत्रानुषज्यते। जन्तुनेति। अनुपकर्त्रेत्यर्थः। शत्रुश्चेन्निग्रहासमर्थो जनस्य नादरणीयः स्याद्, बन्धुश्चेदनुग्रहासमर्थस्तथैवेति भावः। अस्मिन् व्याख्याने चकाराध्याहारो व्यवहितान्वयश्च जन्तुशब्दस्यानुपकारार्थाभिधानाशक्तिरित्येते दोषाः स्फुटा एवेत्यत्र सहृदया एव प्रमाणमित्यलं बहुना॥ ३३॥

एवमुपपत्तियुक्तेषु द्विषदाभियोगफलेषु वाक्येषूदाहृतेष्वप्यलक्षितकोपचिह्नमजातशत्रुमालोक्य सञ्जातचिन्ता समुचितज्ञा याज्ञसेनी भीमादिसोदरक्लेशोपवर्णनेन सोदरवत्सलस्य[3] युधिष्ठिरस्य धैर्यं शिथिलयितुं प्रकारान्तरेणात्मपक्षमुपपादयति — परिभ्रमन्नित्यादिना श्लोकत्रयेण।

परिभ्रमँल्लोहितचन्दनोचितः
पदातिरन्तर्गिरि रेणुरूषितः।
महारथः सत्यधनस्य मानसं
दुनोति नो कच्चिदयं वृकोदरः॥ ३४॥

परिभ्रमन्नित्यादि। वृकोदरः सत्यधनस्य तव मानसं नो दुनोति कच्चित्। सत्यधनस्येत्यसाधारणविशेषणाकाङ्क्षितं तवेति विशेष्यपदमन्वयार्थमापतत्येव। कीदृशो वृकोदर इति तत्राह — पदातिरिति। पद्भ्यां[4] सततं गच्छतीति पदातिः। तेनाविरतगमनजनितक्लेशविशेषो द्योत्यते। गमनस्य सातत्यमेव न, कौटिल्यं चास्तीत्याह — परिभ्रमन्निति। परितः सर्वदिक्षु अनवस्थया चङ्क्रम्यमाणः, क्वचिदपि स्थितिसुखमलभमान इति लभ्यते। गमनस्य कौटिल्ये हेतुमाह — अन्तर्गिरीति। अन्तर्गिरि गिरेरन्तः। शर्कराकण्टकाद्या-

---

१. 'अप ख. पाठः. २. रस्याध्या', ३. 'स्य धै' क. ग. घ. पाठः. ४. 'पादाभ्यां' ख. पाठः.

चिते विषमतमे पर्वतमध्य इत्यर्थः। पूर्वमेवंविधं गमनक्लेशं कदाचिदपि नानुभूतवानित्याह — महारथ इति। महान्तो बृहन्तः प्रकृष्टाश्च परार्ध्यकाञ्चनविततचित्रपरिकराः सदश्वयुक्ता रथा यस्य सः। पूर्वं भुवनकक्ष्यास्वपि स्वेच्छानुविधायिना रथेन स्वैरं सञ्चरितवान्। इदानीं शिलोच्चयमध्येऽपि पद्भ्यामेव परितश्चङ्क्रम्यत इति बलापचयहेतुरस्य वनवासक्लेश इति भावः। रेणुरूषित इति। चरणचङ्क्रमणभूशयनपरिवर्तनजनितेन पांसुना परिदिग्धवर्णकान्तिरित्यर्थः। लोहितचन्दनोचित इति। शशरुधिरारुणं हरिचन्दनमिह लोहितचन्दनशब्देनोच्यते। क्वथ्यमानं महाकटाहनिचितं निखिलमपि जलं यद्बिन्दुमात्रसंपृक्तं सद्य एव शिशिरीभवति, तस्य लोहितचन्दनस्योचितो योग्यः। उचितशब्दोऽभ्यस्तेऽपि वर्तत इति लोहितचन्दनोऽभ्यस्त इति चार्थः सिध्यति। यः पूर्वं हरिचन्दनादिभिः प्रभूतैरन्यदुर्लभैर्भोगैः सुखाग्रभूमिमधिरूढः, स एवेदानीं क्षितिरेणुरूषि(ता ? तत्वा)दिभिः दुस्सहतरैरविरतैः क्लेशैर्दुःखकाष्ठां प्राप्त इत्यभिप्रायः। क्षुत्तृष्णावर्धनो वृकाख्यो जाठरोऽग्निविशेष उदरे यस्यास्ति स वृकोदर इति वृकोदरनाम कैश्चिन्निरुच्यते। तेन तदानीमुपवासभूयिष्ठतया फलमूलमात्राशनतया तस्य क्षुत्तृष्णाभिभूतत्वं द्योत्यते। यः पूर्वं विशिष्टशाल्योदनादिमेदुरमनोज्ञरूपः स एव सम्प्रत्युपवासकदशनकर्शितशोच्यशरीरः संवृत्त इति तात्पर्यार्थः। वृकोदरशब्द एव पूर्वोत्तरावस्थानुसन्धानहेतुरित्यवस्थाद्योतकं पूर्ववत् पदद्वयं न प्रयुक्तम्। जटिलतामालिन्यकार्श्यादीनाकृतिपरिवर्तान् अयमित्यभिनयेन दर्शयति। धिनोति प्रीणयतीति मुख्यं धनं मणिहिरण्यादि। तत्सर्वमनादृत्य सत्यमेव धनत्वेनाभिमन्यसे इत्यपूर्वा सत्यपरतेति सोपहास उपालम्भः सत्यधनशब्देन द्योत्यते। 'शिवानि वस्तीर्थजलानि कच्चित्' इतीष्टपरिप्रश्नविषय एव कच्चिच्छब्दः प्रयुज्यते, न प्रश्नमात्रविषयः। 'कच्चिदिष्टपरिप्रश्न' इति चामरसिंहः। अत्र तु सोदरक्लेशदर्शिनो युधिष्ठिरस्य तत्कृततापस्याभावमनुचितमेव युधिष्ठिरस्येष्टतयारोप्य सोत्प्रासं पृच्छति — नो दुनोति कच्चिदिति। सोदरक्लेशदर्शनकृतो धीरप्रकृतेस्तापोऽजातशत्रोर्म-

---

१. 'पूर्वं भुवन', २. 'नीं मूलफलमा', ३. 'त्वं व द्यो', ४. 'कच्चित', ५. 'त्य'. दाविष्टप्र' क. ग. ब. पाठः ६. 'तस्य यु', ७. 'र्शिनस्तपोधीरप्रकृतेरजा' ख. पाठः

नोऽपि वनवासान्न चालयेत्, किं पुनस्तं मनस्विनमिति निश्चित्य वृकोदरं दृष्ट्वा कच्चित् तव मनो न दूयत इति, कच्चित् त्वं न दूयस इति वा नोक्तम् । सोदरवनवासक्लेशजनितस्तापोऽपि धर्मात्मजं वनवासान्न निवर्तयितुं शक्नुयादेवेत्यवधार्य वृकोदरः कच्चित् त्वां न दुनोतीति नोक्तम् । तस्य सोदरस्य वृकोदरस्य क्लेशदर्शनेन वनवासानभिरुच्या च युधिष्ठिरस्य मनः कदाचिद् वनवासव्यवसायात् शिथिलीभवेदिति संशयाना तन्मतज्ञा याज्ञसेनी निषेधमुखेन पृच्छति — वृकोदरः कच्चित् तव मनो नो दुनोतीति । दुनोति तापयति[३] । 'टुदु उपताप' इति पठ्यते । श्नुविकरणी । आत्मनः क्लेशं वनवासानिच्छां चेङ्गिताकाराभ्यामाविष्कुर्वन् वृकोदरो दुनोतीति कर्तृतयोच्यते । इङ्गिताकारव्यज्यमानवनवासानभिरुचिमीदृशं क्लेशमनुभवन्तं सोदरं वृकोदरं दृष्ट्वा तव मनस्तथा किं न तप्यते, यथा वनवासव्यवसायाद् विरंस्यतीति भावः । मन एव मानसं, राक्षसवायसादिवत् स्वार्थिकस्ताद्धितप्रत्ययः । अस्य सोदरस्य क्लेशदर्शनेन गाढं परितप्यत एव मे मनः । अयं त्वस्माकं क्लेशः सपत्नमनभिभूय निवर्तयितुं न शक्यः । विपुलबलसहायः साम्राज्यस्थः सपत्नः सहायसैन्यरहितैः ईदृग्दशैरस्माभिरिदानीं कथं जेतुं शक्यः स्यादिति युधिष्ठिरस्य शङ्कामप्ययं श्लोक एव तन्त्रेणावृत्त्या वा परिहर्तुं पर्याप्त इति तदर्थं महाकविना श्लोकान्तरं न कृतम् । तादृशशङ्कापनोदिन्यर्थान्तरेऽप्ययं श्लोको योज्यते । वृकोदरस्तव मानसं कच्चिन्नो दुनोतीति पूर्ववदेवान्वयः । अभिप्रायस्तु दुर्बलंमन्यतया स्वसाम्राज्यं सपत्नेनाक्षिप्तमुपेक्षितवतस्तव सपत्नोन्मूलनसमर्थस्य वृकोदरस्य वीर्यपर्यालोचने कथं नानुतापो भवतीति । पूर्वं करुणरसद्योतकतया योजितानि पदानीदानीं वीररसव्यञ्जकत्वेन योज्यन्ते । पदातिरिति । वाहननिरपेक्षयोधे पदातिशब्दो वर्तते । वाहनानपेक्षत्वावगमेनायुधेष्वप्यनियमो द्योत्यत एव । करतलमुष्टिशिलावृक्षगदादिभिर्यथेप्सितैः प्रहरणैर्द्विषदुन्मथनसमर्थ इति भावः । बलैकनिर्वर्त्येषु युद्धेष्वेवास्य सामर्थ्यं न धनुर्वेदशिक्षाधीनेषु रथयुद्धेष्विति पदातिशब्देनोद्भाविता शङ्का निरस्यते —

---

१. 'स्य वनवासाभिरुचिक्लेशदर्शनकृत, २. 'रस्तव मनः कच्चिन्न दु' ख. पाठः. ३. 'तापयतीत्यर्थः ।' घ.,'कोपयतीत्यर्थः ।' क. ग. पाठः. ४. 'क्षायाम' क. ग. च. पाठः. ५. मने आयु', ६. 'ष्टिग' ख. पाठः.

महारथ इति । हस्तिहयपदातिरूपाणि स्वसेनाङ्गान्याभिरक्ष्य[1] परसेनाङ्गानि निघ्नन् रथस्थो योधवरोऽत्र रथशब्देनोच्यते । प्रकृष्टो रथो महारथः । रथयुद्धेष्वप्रतिहत इति लभ्यते । अन्तर्गिरीत्यव्ययीभावसमासः । गिरेरन्तरित्यर्थः । परिभ्रमन् परितः सर्वदिक्ष्वविश्रम्य चरन्नित्यर्थः । अन्तर्गिरीति दुर्गदेशोपलक्षणम् । पर्वतीयादियुद्धविधौ पर्वतमध्यादिषु विषमस्थलेषु शिक्षालाघवबलैरस्खलितं चरन् दुर्गयुद्धज्ञानासुन्मथनसमर्थ[2] इति भावः । रेणुरूषित इति । चतुरङ्गसैन्यजन्मना सञ्छन्नमेदिनीगगनादिङ्मण्डलेन रेणुना रजसा रूषितो दिग्धः । स्तुत्यतया प्रस्तुतस्य क्षत्रियस्य समररेणुव्यतिरिक्तेन रेणुना रूषणं न शोभाकरमित्युपपत्त्या समररेणुरेवात्र रेणुशब्देनोच्यत इति निश्चीयते । अस्य सपत्नोन्मथनशक्तिः शिक्षाबलादिभिः सम्भाव्यत इत्येव न, असकृदरिकुलोन्मूलनदर्शनेन निश्चीयते चेत्याह — लोहितचन्दनोचित इति । लोहितशब्दोऽत्र रुधिरार्थः । आरोपितचन्दनत्वं लोहितं लोहितचन्दनम् 'उपमितं व्याघ्रादिभिः'—(२. १. ५६)इत्यादिना समासः । लोहितचन्द उचितोऽभ्यस्तो लोहितचन्दनोचितः । गदाद्यभिघातविभिन्नेभ्यो वैरिशरीरेभ्यश्च्योतता बलवद्वीराणामाह्लादविधायिना रुधिरेण रणशिरस्यनेकवारं सिक्तः । प्रवीरवैरिविदारणेन प्राप्तकीर्तिप्रताप इति भावः । ज्याघातकिणादीन्यसाधारणानि वीरचिह्नान्ययमित्यभिनयेन दर्शयति । वृकस्योदरमिव विरलान्त्रं यस्योदरं स वृकोदर इति कैश्चिद् वृकोदरनाम निरुच्यते । प्रचुरान्त्राणां भीतिरस्तीति प्रसिद्धमेव । देवदैत्यादियुद्धेष्वप्यज्ञातभय इति भावः । आज्ञाकरे प्रवीरेऽस्मिन् सोदरे सति सपत्नेभ्यः सुप्रत्याहारं मणिहिरण्यादि धनमवधीर्य वने वत्स्यामीति वचनस्य सत्यता स्यादित्याशासानः सत्यमेव धनं मन्यते, तदत्र किं वक्तव्यमिति सोपहास उपालम्भः सत्यधनस्येत्यनेन काका ध्वन्यते । युधिष्ठिरस्य सत्यनिष्ठां निर्वर्त्य द्विषद्वधव्यवसायं चिकीर्षोः कृष्णाया वचः कथं सत्यप्रशंसापरं स्यात् । कच्चिन्नो दुनोतीति । वनवासादिसमयविधानविषयमनुतापं किं न करोतीति भावः ॥ ३४ ॥

ननु महास्त्रविदः सुयोधनरक्षिणो भीष्मद्रोणादयः शिक्षितेन बलवीर्यविक्रमशालिनाप्यनेन कथं जेयाः स्युरिति शङ्कायामाह —

---

१. 'सैन्याङ्गा', २. 'संथ...' [illegible]

विजित्य यः प्राज्यमयच्छदुत्तरान्
कुरूनकुप्यं वसु वासवोपमः ।
स वल्कवासांसि तवाधुनाहरन्
करोति मन्युं न कथं धनञ्जयः ॥ ३५ ॥

विजित्येत्यादि । स धनञ्जयः कथं तव मन्युं न करोति । मन्युं रोषं, द्विषद्विषयमित्यर्थात् सिध्यति । कथं केन प्रकारेण । न करोति न निर्वर्तयति । सर्वप्रकारैः कर्तुमर्हतीत्यर्थः । महाराजस्य भवतो दुष्टनिग्रहकारितया आत्मनस्त्वदभीष्टकरणशक्त्या द्विषतां वध्यतया चेति प्रकारार्थः । यः प्राज्यमकुप्यं वस्वयच्छत् । उत्तरार्धे तवेत्यनेनोपस्थापितो युष्मदर्थः सामर्थ्यादिह सम्प्रदानोचितविभक्त्यादियुक्तः समापतत्येवेति तुभ्यमिति नोक्तम् । प्राज्यं प्रभूतं प्रशस्तं वा । सुवर्णरजताभ्यामन्यद् धनं कुप्यं त्रपुताम्ररीतिकादि । ततोऽन्यदकुप्यं सुवर्णरजते । रत्नादीनि च प्रशस्तानि धनान्यत्राकुप्यशब्देन विवक्ष्यन्ते प्रशस्तधनोपलक्षणत्वादकुप्यशब्दस्य । धनस्य न व्यक्तिप्राशस्त्यमेव जातिप्राशस्त्यमप्यस्तीति द्योतयितुमकुप्यमित्युक्तं न प्रशस्तमित्यादि । वसुशब्देन धनमुच्यते । अयच्छददिशदित्यर्थः[2] । अयच्छदित्यनद्यतनभूतकालविषयो लङ्प्रत्ययोऽर्थाद्[3] राजसूयाहरणकालं भूतानद्यतनविशेषमवगमयति । अयच्छदित्युक्तं नानयदिति । तेन पूर्वकल्पितात् किंकरमात्राहार्यात् करादन्यदधिकं धनं स्वयमाहृत्य समानीतवानिति द्योत्यते । धनार्जनस्य प्राशस्त्यहेतुमाह—विजित्येति । विजित्य विशेषेणाभिभूय वशीकृत्य चेत्यर्थः । अभिभवे वशीकरणे च सकर्मको जयतिर्वर्तते । विजयस्यासाधारणत्वं द्योतयितुमन्यदुर्जयं विजेतव्यविशेषमाह — उत्तरान् कुरूनिति । उत्तरकुरुशब्दयोरेकोऽर्थो वाच्यः, यथा विश्वदेवशब्दयोः । अमानुषगम्यमुत्तरसमुद्रावधिजम्बूद्वीपस्य नवमं वर्षमुत्तरकुरुवाच्यम् । उत्तरान् कुरून् विजित्येत्युक्तेऽपि तैरुत्तरकुरुभिरुपदीकृतमिति लभ्यत एव । नवमवर्षविजयोक्त्यैव भारतादीनामष्टानां वर्षाणां विजयो गम्यते । दिव्यास्त्रशक्तिविशेषं द्योतयितुममानुषगम्यस्य दिव्यस्य वर्षस्य विजय उक्तः । उत्तरकुरुविजयिनो दक्षिणकुरुविजयो न

१. 'द्वाधिका', २. 'दिति लङ', ३. 'र्थसामर्थ्यात्', क. ग. घ पाठः.
४. 'रुप' ख पाठः.

दुष्कर इत्युक्तिभङ्गीं द्योतयितुमुत्तरान् कुरूनित्युक्तं न नवमं वर्षमित्यादि । वासवोपम इति । वासव इन्द्र उपमा उपमानं यस्य स वासवोपमः । धनञ्जयं प्रति गुणीभावो दिव्यजनस्य श्लाघ्य एवेति द्योतयितुं वासवदृष्टान्तकथनम् । किञ्च खाण्डवदाहे दृष्टं धनञ्जयस्य वासवादाधिक्यं द्योतयितुं च समञ्जसोचितव्यवहारज्ञया याज्ञसेन्या वासवोपम इत्युक्तम् । अर्थशक्तिमूलानुस्वानजन्मना काका वासवोपमशब्देन वासवादधिक इति ध्वन्यते । तदाधिक्ये प्रमाणसिद्धे तत्साम्योक्त्या तन्न्यूनतोक्त्या च तदाधिक्यं प्रतीयत इति । एवं मणिहिरण्यादेर्धन(ञ्जय ?)स्य जयमात्मसात्करणमवगमयन्त्या योगरूढया धनञ्जयसंज्ञया च दिव्यवर्षविजयो द्योत्यते । शक्रादिचमत्कारकरवीर्यविक्रमः शस्त्रास्त्रसुशिक्षितो धनञ्जयो दिव्यास्त्रविदो[1] भीष्मादीनपि जेतुं शक्नुयादिति भावः। यः पूर्वमेव भवत्साम्राज्यस्योपस्कारमकरोत् स धनञ्जय इदानीमपि त्वदिच्छानुविधायीत्याह — अधुना वल्कवासांसि तवाहरन्निति । वल्को वल्कलं,[2] वल्क एव वासो वल्कवासः, तानि बहूनि वल्कवासांसि त्रिसन्ध्यस्नानाय विभज्य कल्पितानीति भावः । आहरतेः करणमानयनं चार्थः । अत्रोभयं गृह्यते । अधुनाद्य वनवाससमये । तव वल्कवासांसि त्वत्सम्बन्धीनि त्वत्परिधानीयानि वल्कलानि । आहरन् विरचयन् विरचितानि[3] तानि स्नानादिसमये आहरन्नानयन् अभिमुखमर्पयन्निति चार्थद्वयं तन्त्रेणावृत्त्या वा गम्यते । धनञ्जयकर्तृकं वल्कलाहरणं युधिष्ठिरसम्बन्धिपरिधानादिफलमित्याहरन्निति परस्मैपदेन द्योत्यते[4] । धनञ्जयकर्तृकं मन्युकरणं युधिष्ठिरसंबन्धिसाम्राज्यफलमिति करोतीति परस्मैपदेन द्योत्यते । त्रिलोकविजयिनि धनञ्जये वृकोदरे च सोदरे सति सपत्नोच्छेदस्त्वया न दुष्कर इति द्विषद्वधायोद्यमोऽद्य कर्तव्य एवेत्यर्थः । योऽहं नववर्षाणि विजित्य ज्यायसे महाराजाय प्रभूतं प्रशस्तं धनमाहर स एवाद्य सर्वसुकरवल्कलाहरणमात्रमस्य परिचरणं करोमीति खेदरूपो धनञ्जयस्य क्लेशोऽप्यनेन श्लोकेन सूच्यत एव । धनाहरणसमर्थं तमेवाद्य वल्कलाहरं धनञ्जयं पश्यतस्तव कथं दैन्यं न भवतीति च मन्युशब्देन द्योत्यते । मन्युशब्दो दैन्यार्थेऽपि वर्तत इति धीरोदात्तस्य जिष्णोः

---

1 'महास्त्र' क. ग. पाठः. 2. 'त्वक् वल्कलमेव' ख. घ. पाठः. 3. 'नि स्ना' ख. पाठः. 4. 'ते । स, ... वि आव. । यो' क. ग. घ. पाठः.

काश्यादिक्लेशकथनमनुचितमनभिमतं चेति विमृश्योचितज्ञया कृष्णया तादृशः क्लेशो न सूचितः ॥ ३५ ॥

सत्त्वबलाधिकौ मारुतिधनञ्जयौ सुदुःसहमपीदृशं क्लेशं सोढुं शक्नुत एव। तत् किमनयोः क्लेशोपपादनेन समयो निरस्यत इत्याशङ्क्य कामं भीमार्जुनौ विविधं क्लेशं सोढुं शक्नुयाताम्। अपितु सुकुमारतरयोर्नकुलसहदेवयोस्त्वीदृशः क्लेशो बलापचयवैवर्ण्यादिहेतुरित्युपपादयति — वनान्तेत्यादिना।

वनान्तशय्याकठिनीकृताकृती
कचाचितौ विष्वगिवागजौ गजौ।
कथं त्वमेतौ धृतिसंयमौ यमौ
विलोकयन्नुत्सहसे न बाधितुम् ॥ ३६ ॥

यमौ विलोकयंस्त्वं धृतिसंयमौ बाधितुं कथं नोत्सहसे। सर्वथा बाधितुमुत्सहस्वेति तात्पर्यार्थः। सोदरयोः क्लेशासहिष्णुतया स्वाभाविकयोर्धृतिसंयमयोरनपायितया मुनिजनवद् भवतो धृतिसंयमानर्हतया चेति प्रकारबहुत्वं कथमित्यनेन द्योत्यते। स्नेहादिकृतचित्तचापलविरोधिगुणो धृतिः। प्रियद्वेष्यविषयवागादीन्द्रियव्यापारोपरमहेतुर्गुणः संयमः। सोदरक्लेशदर्शने सपत्नापराधप्रथनेऽप्यशिथिलौ तव धृतिसंयमौ सौभ्रात्रतेजस्वितादिगुणविघातितया दोषावेवेति तदुपमर्दाय मन्त्रौषध्याद्युपायप्रयोगस्त्वया कर्तव्य एवेति भावः। यमावेकगर्भप्रभवावित्यर्थः। क्लेशासहत्वादिस्वभावसाम्यं द्योतयितुं यमावित्युक्तम्। वनस्यान्तो निष्ठा वनान्तः। गहनं वनमित्यर्थः। वनान्त एव शय्या वनान्तशय्या, तया कठिनीकृता तत्पूर्वकृतपारुष्या आकृतिः शरीरसन्निवेशो ययोस्तौ तथोक्तौ। पूर्वं सुकुमारदर्शनीयाकृती, इदानीं तद्विपरीतावित्यर्थः। विष्वक् समन्ततः। कचाचितौ कचैः केशैराकीर्णौ कचाचितौ। अकृतकेशसंस्कारावित्यर्थः। अगजौ गजाविवेति पर्वतजातकुञ्जरसदृशावित्यर्थः। गजजातिमात्रे दुर्लभं गुणविशेषं द्योतयितुं अगजाविति गजविशेषणं कृतम्। बलसंरम्भतेजःप्रभृतीनां द्विरदगुणानां

१. 'कावव', २. 'धोपरम' क. ग. घ. पाठः

प्रकर्षः पर्वतयोनितोक्त्या प्रतीयते। जनपदजाता गजा जघन्याः, वनजाता मध्यमाः, पर्वतजाताः प्रशस्ततरा इति हि गजशास्त्रविदां प्रसिद्धिः। बलसंरम्भविक्रमादयो बाह्या एव गुणा गजानां, न त्वाभ्यन्तराः प्रज्ञाविवेकधैर्यादयः। तेऽपि यमयोः सन्तीति तयोराधिक्यं द्योतयितुं गजसादृश्यमुक्तं न गजत्वं रूपितम्। गजविशेषणत्वेनोक्तमगजपदं माद्रीसुतविशेषणतया च योजयितुं शक्यमेव, माद्रीसुतौ शतशृङ्गे पर्वते जाताविति। तेन दिव्यदेशजन्मनोरश्विनन्दनयोर्दुर्जयताहेतुर्दिव्यता द्योत्यते। साक्षाद्वक्तुमनुचितान् कार्श्यादीन् क्लेशानेताविित्यभिनयेन दर्शयति। एताविति पदं धृतिसंयमयोश्च विशेषणतया योजयितुं शक्यमेव। एतावीदृशसोदरक्लेशदर्शनेऽप्यशिथिलौ व्यक्ताविित्यर्थः। विलोकनफलं शोको न कर्तृसंबन्धीति विवक्षया विलोकयन्निति परस्मैपदं प्रयुक्तम्। रक्षणपोषणादिभिरुपस्कृतौ हैमवतौ गजाविव नैसर्गिकश्रीबलविक्रमादिगुणौ सहजाविमौ सम्राजस्तव साम्राज्यं साधयिष्यत इति बलसत्त्वापचयहेतुरनयोर्वनवासक्लेशस्त्वया नैवोपेक्षणीय इत्यभिप्रायः। पर्वतयुद्धवर्णनादिष्वेव यमकं प्रयुञ्जते महाकवय इत्यकाण्डे यमककरणं यथा यमकस्थयोः शब्दयोरैकरूप्येऽपि पृथगर्थसाधकत्वं तथा यमयोरपीति द्योतयति॥ ३६॥

भीमादिसोदरक्लेशदर्शनेऽप्यशिथिलधृतिसंयममजातशत्रुमालोक्य नवीभूताभिषङ्गा महाराजधर्मपत्नी पुनरपि परिभवप्रतीकाराय महाराजमुत्तेजयितुं विस्रम्भबलेन सोपालम्भमाह — इमामित्यादिना।

> इमामहं वेद न तावकीं धियं
> विचित्ररूपाः खलु चित्तवृत्तयः।
> विचिन्तयन्त्या भवदापदं परां
> रुजन्ति चेतः प्रसभं ममाधयः॥ ३७॥

इमां तावकीं धियम् अहं न वेद। इमाम् ईदृशसोदरक्लेशदर्शनेऽप्यशैथिल्येन प्रकटितार्द्रताविपर्ययाम्, ईदृशपरिभवानुभवेऽप्यनाविर्भूतमन्यु-

१. 'न विलोकनक' क. ग. घ. पाठः। २. 'नौ' ख. पाठः।

तयाभिव्यक्तदीप्त्यपचयामित्यर्थः । तावकीं त्वदेकसम्बन्धिनीम् । त्वदन्यस्य कस्यचिदीदृशी बुद्धिर्नास्तीति भावः । धियमिति । संशयात्मनो मनसः स्नेहद्वेषप्रयुक्तार्द्रतादीप्त्यनभिव्यक्तिर्न दोषः, जनानुरागगौरवसम्पादिन्या निर्णयात्मिकाया बुद्धेस्तु दोष एवेति भावः। न वेदेति, आर्द्रतादीप्तिरहितां स्नेहवतीति द्वेषवतीति वा कथं निश्चिनुयामित्यर्थः । अहमिति, लोकवृत्तमात्रदर्शिन्यनार्षदृष्टिरीदृशीं तव बुद्धिं न जानामि । दिव्यदृष्टयो मुनयो जातु जानीयुर्न वेति भावः। नन्वन्तर्बहिर्व्याप्तानां सत्त्वरजस्तमसां संसर्गविशेषेण प्रतिबुद्धि वैचित्र्यमस्तीत्येकरूपतया निश्चेतुं न शक्या बुद्धिरिति, तत्राह — चितवृत्तयो विचित्ररूपाः खल्विति । चित्तस्य मनसो वृत्तयो व्यापाराः सङ्कल्पविकल्पादयः। विचित्ररूपाः शबलात्मानः । खल्विति, अनुभूयन्त इति भावः । अथवा रूप्यतेऽनुमीयतेऽनेनान्तर्वृत्तिरिति रूपं चिह्नम् इङ्गितं चेष्टादि । विचित्रं विविधं रूपं लिङ्गं यासां ता विचित्ररूपाः । बालादीनां रोदनहासादिभिः शबलैर्लिङ्गैः शबलाश्चित्तवृत्तयोऽनुमीयन्त इति भावः । संशयादिशबलवृत्तेः प्रवृत्त्यपर्यवसायिनो मनसः शबलत्वमस्तु । प्रवृत्तिपर्यवसायिन्या निर्णयात्मिकाया बुद्धेस्त्वैकरूप्यमेव युक्तं न शबलत्वमिति भावः । रामादीनां बुद्धयो लक्ष्मणादिष्वार्द्रा राक्षसादिषु दीप्ता इति श्रूयते । रामाद्यनूनगुणस्य लोकोत्तरस्य भवतो बुद्धिं तादृशीं मन्यमाना सम्प्रतीदृशीमनभिव्यक्तसोदरस्नेहामनाविर्भूतारिविषयरोषसंरम्भामार्द्रेति वा दीप्तेति वा कथं जानीयामिति भावः । ननु बुद्धेरार्द्रता दीप्तिर्वा नैमित्तिकी, न स्वाभाविकी । किमद्य तन्निमित्तमिति तत्राह — विचिन्तयन्त्या इत्यादि । परां भवदापदं विचिन्तयन्त्या मम चेतः आधयः प्रसभं रुजन्ति । परां प्रकृष्टां काष्ठां प्राप्तां साम्राज्यविश्लेषपरिभवादिरूपाम् । भवदापदं प्रशस्यतमस्यापदनर्हस्य तवापदं व्यसनम् । विचिन्तयन्त्या विविच्य स्मरन्त्याः। ममानीदृशधैर्यायाः। चेतो व्यवसायाशक्तं मनः । आधयोऽभिषङ्गा दुःखोद्रेकाः। प्रसभं प्रसह्य बलात्कारेण। रुजन्ति भञ्जन्ति, इतिकर्तव्यतामूढं कुर्वन्तीति भावः । त्वं तु ईदृशं व्यसनमनुभवन्नेव न गणयसीति वाक्यशेषः । सपत्नकृते महतीदृशे क्लेशे परिभवे च परिपूर्णे सति किमन्यद् बुद्ध्यार्द्रतादीप्तिनिमित्तं मन्यस इति भावः ॥ ३७ ॥

---

१. 'बन्धामा' ख. पाठः.

धर्मादप्रच्युतस्य मम का विपत्तिरिति धर्मात्मजस्य मतमाशङ्क्य परा-र्ध्यभोगविशिष्टात् साम्राज्यात् प्रच्युतस्य तव वनवासमयीयं दुर्दशा दुःसहे-त्युपपादयति — पुरेत्यादिना ।

पुराधिरूढः शयनं महाधनं
विबोध्यसे यः स्तुतिगीतिमङ्गलैः ।
अदभ्रदर्भामधिशय्य स स्थलीं
जहासि निद्रामशिवैः शिवारुतैः ॥ ३८ ॥

यः स्तुतिगीतिमङ्गलैर्विबोध्यसे पुरा, स शिवारुतैः निद्रां जहासि । विशिष्टगुणोपवर्णनं स्तुतिः । तालल्यानुसारेण गाथावृत्तादिषु षड्जादि-स्वराविष्करणं गीतिः। ते स्तुतिगीती मङ्गलं येषां ते स्तुतिगीतिमङ्गलाः,(तैः)। शब्दतोऽर्थतश्च मङ्गलैकरूपस्तुतिगीतिभिरित्यर्थः । स्तुतिगीतिमङ्गलैरिति विशेषणेनाकाङ्क्षितं तद्योग्यं वन्दिमागधैरिति विशेष्यमापतत्येव । स्तुतिकृतो वन्दिनो गीतिकृतो मागधा इति प्रसिद्धिः । अथवा शब्दैरिति विशेष्यमर्थात् सिध्यति स्तुतिगीतिमङ्गलैः शब्दैरिति । विबोध्यसे पुरेति विशेषणेनानन्यसा-धारणमवबोध्यस इत्यर्थः । पर्याप्तसुप्तिसुखानुभवानन्तरमुपजातसंज्ञालाभो बो-धः । 'पुरि लुङ् चास्मे' (३. २. १२२) इति लङर्थे लट्प्रत्ययः । महा-धनं शयनमधिरूढः । महान्त्यपरिमितानि प्रकृष्टानि च मूल्यभूतानि धनानि यस्य तन्महाधनम् । अधिरूढशब्देन शयनस्योन्नतिर्द्योत्यते। उन्नतो हि प्रासा-दादिरधिरोहणस्य कर्म भवति नावनतः श्वभ्रादिः। शयनस्य मृदुतरस्पर्शतां द्योतयता महाधनशब्देन महाराजस्य सुखसुप्तिः, उन्नतिं द्योतयताधिरूढशब्देन प्रभावातिशयः प्रकाश्यते । महाधनं शयनमधिरूढ इति विबोध्यमानस्य विशे-षणम् । विबोध्यसे जहासीति च मध्यमपुरुषप्रयोगेण त्वमिति विशेष्यपदमाक्षि-प्यते । स्थलीमधिशय्येति । असंस्कृता शिलाकाष्ठकण्टकादिनिचिता भूमिः स्थलीशब्देनोच्यते । असंस्कृतत्वमेव स्फुटीकरोति—अदभ्रदर्भामिति । दभ्रम् अल्पम् । न दभ्रा अदभ्राः, अदभ्रा दर्भा यस्यां सादभ्रदर्भा ताम् । खरस्पर्शैः शिताग्रैर्दर्भैराकीर्णामित्यर्थः । निद्राहानिक्रियां प्रति शयनक्रियायाः पूर्वकालत्वं

१. 'त्यर्थः । पर्या' प म पाठः।

द्योतयताधिशय्येति क्त्वाप्रत्ययेन निद्रायाः स्वल्पत्वं द्योत्यते । शिवाशब्दो दर्शादिशब्दवद् विपरीतलक्षणया जम्बुक्यां रूढः । तिर्यक्षु जम्बुकजातिरमङ्गला । तत्रापि विशेषेण स्त्री । शिवानां जम्बुकीनां रुतैः श्रुतिपरुषैर्वाशितैरित्यर्थः । रुतशब्दो मण्डूकजम्बुकादिध्वनौ प्रसिद्धः । अशिवैरमङ्गलैः, दुर्निमित्ततया मङ्गलविरोधिभिरित्यर्थः । शिवारुतैरिति श्रुतिदुःसहत्वम् अशिवैरित्यमङ्गलसूचकतया मनस्तापहेतुत्वं च द्योत्यते । निद्रां जहासीति । तव निद्रात्याग एव भवति, नेन्द्रियमनःप्रसाद इति भावः । एतदुक्तं भवति— यः पूर्वं प्रासादेषु मृदुतरस्पर्शप्रच्छदपरार्ध्यपर्यङ्कशायी समनुभूतसुषुप्तिसुखः स्वरमाधुर्येण श्रवणतर्पणैर्मङ्गलार्थतया मनोह्लादिभिर्वन्दिमागधशब्दैर्विबोधितः, स एवेदानीं दुर्लभनिद्रः शिलाकण्टकदर्भनिर्भरां स्थपुटतरां स्थलीमधिशय्य तत्क्षणमेव श्रुतिपरुषैरमङ्गलैः शिवावाशितैः निशासमयसामर्थ्यमात्रोपजातां निद्रां त्यजसीति दुर्वचेयं तव दुर्दशेति । 'अधिशीङ्स्थासां कर्म' (१. ४. ४६) इत्यधिकरणस्य कर्मसंज्ञायां 'कर्मणि द्वितीया' (२. ३. २) इति स्थलीमिति द्वितीया ॥ ३८ ॥

अथ वनवाससमये नक्तं सुप्तिसुखं नास्तीत्युक्तम् । दिवा स्थितिसुखमपि नास्तीत्याह—अनारतमित्यादिना ।

> अनारतं यौ मणिपीठशायिना-
> वरञ्जयद् राजशिरःस्रजां रजः ।
> निषीदतस्तौ चरणौ वनेषु ते
> मृगद्विजालूनशिखेषु बर्हिषाम् ॥ ३९ ॥

राजशिरःस्रजां रजः अनारतं यावरञ्जयत्, तौ ते चरणौ बर्हिषां वनेषु निषीदतः । 'राजृ दीप्तौ' 'रञ्ज रागे' इति धात्वोरेकैकवर्णलोपेन निष्पन्नो राजशब्दः प्रतापानुरागयुक्ते क्षत्रिये योगरूढ्या वर्तते । राज्ञां शिरसि स्रजां मालानां शेखरभूतानामित्यर्थात् सिध्यति । रजः परागः । अरञ्जयद् रक्तामनयदित्यर्थः । प्रणाम इत्यर्थात् सिध्यति । अनारतमजस्रम् आस्थानस्थितिसमये सन्ततमित्यर्थः । एतद् रञ्जनक्रियाविशेषणम् । तेन प्रणमतां राज्ञामपरिमितत्वं

व्यज्यते । रञ्जनक्रियाफलं रज्यमानचरणसम्बन्धि न रञ्जकरजस्सम्बन्धि विवक्षितमित्यरञ्जयदिति परस्मैपदम् । तेन प्रणमतां राज्ञां मौलिमालारञ्जनेन चरणयोर्महती शोभा तदानीमभवदिति विभाव्यते । अरञ्जयदिति लङ्प्रत्ययेन साम्राज्यावस्थाया विप्रकृष्टकालता द्योत्यते । मणिपीठशायिनाविति । मणिपीठयोः शयनशीलौ सततकल्पितमृदुस्पर्शास्तरणयोर्मणिमययोः पीठयोः असङ्कुचितं सुखमवस्थितावित्यर्थः । बर्हिषां दर्भाणां वनेषु समूहेषु, निबिडेषु बर्हिःष्वित्यर्थः । मृगाणां हरिणानां द्विजैर्दन्तैरालूना ईषच्छिन्नाः शिखा अग्राणि येषां तानि मृगद्विजालूनशिखानि, तेषु । बर्हिषां वनेष्वित्यनेन पारुष्यं, मृगद्विजालूनशिखेष्वित्यनेन क्षतकरणेन बर्हिषां रुधिरोत्पादकत्वं द्योत्यते । पूर्वं पुष्परजसा रञ्जितौ चरणौ सम्प्रति विषमच्छिन्नदर्भस्पर्शजेन रुधिरेण रज्यत इति भावः । चरक्रियायोगाच्चरणशब्दः पादे रूढः । तेन सततं चरतोः स्थितिसुखं दुर्लभमिति द्योत्यते । निषीदत इति, सङ्कुचिताङ्गं कथञ्चित् तिष्ठत इत्यर्थः । ननु यदि चरणयोः पुष्परजसा रञ्जनं निर्दिश्य रुधिरेण रञ्जनं प्रतिनिर्दिश्यते, ततो रुधिरं रञ्जयतीति प्रतिनिर्देशः कर्तव्यः । अथ मणिपीठशयनं निर्दिश्य बर्हिर्निषदनं प्रतिनिर्दिश्यते, तदा मणिपीठयोरशयातामिति प्रतिनिर्देशः कर्तव्यः इति निर्देशप्रतिनिर्देशवैषम्यं प्रक्रमभङ्गदोषकृदिति चेत् । नैष दोषः । अर्थौचित्य एव निर्देशप्रतिनिर्देशयोरैकरूप्यमाद्रियते । विपर्यये तु विपर्यय एव । महाराजस्य प्रतापप्रकाशनाय राजशिरःस्रक्परागेण चरणरञ्जनं निर्दिष्टम् । रुधिरेण रञ्जनं त्वमङ्गलकल्पतया न प्रतिनिर्दिष्टं, द्योतितमेव । प्रतापप्राधान्यं विवक्षितं, न भोगप्राधान्यमिति मणिपीठयोरशयातामिति निर्देशो न कृतः । पूर्वश्लोके साम्राज्यसमये भोगातिशयो वनवाससमये क्लेशातिशयश्च प्राधान्येन प्रकाशितः । अत्र साम्राज्ये नरेन्द्रवन्द्यतारूपमैश्वर्यं वनवासे नरेन्द्रनिन्द्यतारूपस्तद्विपर्ययश्च प्राधान्येन द्योतितः ॥ ३९ ॥

प्रतिश्रुतं समयं समाप्य धर्मेण बलेन वा साम्राज्यं स्वीकृत्य प्राचीनौ प्रतापभोगावहमेव प्रतिपत्स्ये । तत् किमद्य खिद्यत इति युधिष्ठिरस्य मतमाशङ्क्याह—

---

१. 'द्योत्यते', २. 'र्भसंस्प', ३. 'ते चिरं स' क. ग. घ. पाठः.

पुरोपनीतं नृप! रामणीयकं
द्विजातिशेषेण चिरं यदन्धसा।
तदद्य ते वन्यफलाशिनः परं
परैति कार्श्यं यशसा समं वपुः॥ ४०॥

पुरेति। यत् पुरा द्विजातिशेषेणान्धसा चिरं रामणीयकमुपनीतं, तत् ते वपुरद्य परं कार्श्यं परैति। द्विजातिशब्देनाविनाभावाद् द्विजाद्युपयुक्तमन्नं लक्ष्यते द्विजातिभोजनस्य नित्यतां द्योतयितुम्। द्विजात्युपयुक्तान्नशेषेणान्धसान्नेन विघसाख्येनेत्यर्थः। द्विजातीत्युपलक्षणम्। तेन द्विजातिपितृदेवभूतोपयुक्तशेषेणेत्यर्थः सिध्यति। अथवा द्विजातिशब्देन जातिद्वयमुच्यते। पितृदेवभूतादिर्दिव्यजातिः, मनुष्यादिरदिव्यजातिः। द्विजातिशेषेणेति देवादिमनुष्याद्युपयुक्तशेषेणेत्यर्थः। पुरेति साम्राज्यसमय इत्यर्थः। रामणीयकं रमणीयत्वम्। उपनीतं भृशं प्रापितम्। भृशार्थेऽप्युपेत्युपसर्गो वर्तते। स्वतो रमणीयं विशिष्टस्वादुपथ्यान्नभोजनेनोपचितधातूपचयवर्णस्निग्धतादिप्रकर्षरूपां रमणीयतरतां लम्भितमित्यर्थः। कालदैर्घ्यद्योतकेन चिरमित्यव्ययेन धर्मस्य रम्यस्य पराध्यस्य भोगस्याभ्यासो द्योत्यते। तेन वपुषः क्लेशासहिष्णुत्वं व्यज्यते। यदेतदन्धसेति केचित् पठन्ति। तस्मिन् पाठे प्रागवस्थादर्शनानुसन्धानेवासनया तदानीमपि तद्वपुः[1] प्रागवस्थाविशिष्टतयापरोक्षमेव तया दृष्टमित्येतच्छब्देन द्योत्यते। अद्य वनवाससमय इत्यर्थः। परं कार्श्यं काष्ठां प्राप्तं, वक्तुमनुचितं कृशत्वमित्यर्थः। परैति शीघ्रं गच्छति। शीघ्रार्थेऽपि परेत्युपसर्गो वर्तते। कार्श्यप्राप्तौ हेतुमाह—वन्यफलाशिन इति। वन्यानि वनजातानि फलानि व्रतार्थमश्नत इत्यर्थः। जानपदविशिष्टान्नभोजिनामसंस्कृतानि वन्यफलानि धातुवैषम्यादिदोषहेतुतया बलापचयकराणीति वन्यफलशब्देन द्योत्यते। व्रताद्यर्थे स्वल्पभोजनेऽशिधातुः प्रसिद्धः, न सौहित्यतृप्तिकरे पर्याप्त इत्याशिधातुना भोजनस्य स्वल्पता द्योत्यते। हविःप्राशनं, चरुप्राशनमिति तथाविध एव प्रयोगो दृश्यते। एवमनुक्षणं बलापचयविधायिनि वनवासे समाप्ते धर्मेण बलेन वा कथं शकुनिभागिनेयाद्

१. 'नया वा' क. ग. घ. पाठः. २. 'पुषः प्रा' ख. पाठः. ३. 'ज' क. ग. घ. पाठः.

राज्यं ग्रहीष्यत इत्यभिप्रायः । उत्तमानां स्थिरं यशः प्रधानम् । ततस्ते त-स्यापचयं स्तोकमपि न सहन्ते । अस्थिरस्य शरीरस्य कार्श्यं सहन्त एव । ज्ञा-तिद्रोहमकुर्वाणस्य गुरुशासनमनुतिष्ठतो विपुलं तपश्चरतो मम यशस्तु विव-र्धते । यशस्विनः किमसाध्यमिति शङ्कायामाह — यशसा सममिति । न केवलं वपुः कृशतरं भवति, यशोऽपि कृशीयो भवतीत्यर्थः । अद्रोहगुरुनि-योगतपश्चर्यादिभिर्मुनीनां यशः, दुष्टनिग्रहशिष्टानुग्रहमर्यादास्थापनरूपेण भूपरिपालनेनैव तेजस्विनां भूपतीनां यश इति विश्वसृजैव विभागः कृत इति परिपालनमपहाय तपश्चरतो राजन्यवंशजस्य यशो नश्यत्येवेत्यभिप्रायः । अ-यमभिप्रायो नृपेत्यामन्त्रणेन द्योतितः ॥ ४० ॥

रामादिभिराचरितं वनवासमधर्मं सद्भिर्विगर्हितं ज्ञातिवधं धर्मं मन्यसे क्लेशासहिष्णुतया साम्राज्यभोगाभिलाषेण चेति धर्मात्मजस्य मतमाशङ्क्याह—

द्विषन्निमित्ता यदियं दशा ततः
समूलमुन्मूलयतीव मे मनः ।
परैरपर्यासितवीर्यसम्पदां
पराभवोऽप्युत्सव एव मानिनाम् ॥ ४१ ॥

द्विषन्निमित्तेत्यादि । इयं दशा द्विषन्निमित्ता यत् ततो मे मनः समूलमुन्मू-लयतीव । इयमनुभूयमानेदृशक्लेशबहुला वनवासमयी । दशा अवस्था । द्विषन्तः शत्रवो निमित्तं कारणं यस्याः सा द्विषन्निमित्ता । कार्यनिष्पत्तौ स्वतन्त्रं कारणं निमित्तशब्देनोच्यते, यथा घटादिनिष्पत्तौ कुलालादिः । अस्यां दशायां द्विषतां निमित्तत्वमेवास्ति न हेतुत्वमात्रमिति द्विषन्तस्ते निग्राह्या एवेति द्योतयितुं द्विषन्निमित्तेत्युक्तं, नामित्रहेतुरिति । मे मनः उन्मूलयतीव उत्खातमूलं करोतीव अतिसादयतीत्यर्थः । उन्मूलनं हि मूर्तवृक्षादिकर्मकममूर्तमनःकर्मकमिहा-रोपितम् । तेनैतद् द्योत्यते — उन्मूलितो वृक्षो यथा फलवन्ध्यो भवति, तथैव दुर्दशातिसादितं मनो विमर्शनफलशून्यमिति । समूलमिति क्रियाविशेषणं मनो-विशेषणं वा । मूलशब्देनाश्रय इह विवक्ष्यते । धैर्यविज्ञानादयो मनस इहा-

---

१. 'त्रं । मे' क. ग. घ. पाठः. २. 'व । उ', ३. 'क्षादिर्यथा' ङ. पाठः. ४. 'ति । क्रि' क. ग. ङ. पाठः.

श्रयः । तानप्युन्मूलयतीत्यर्थः । ननून्मूलयतीत्युक्तेऽपि साश्रयस्य मनस उत्खननं प्रतीयत एव, किमुच्यते समूलमिति । नैतदेवम् । मन उन्मूलयतीत्यनेन मनसः कात्स्न्येनोत्खननं प्रतीयते, न तदाश्रयस्येत्यर्थाधिक्यविवक्षया समूलमित्युक्तम् । वृक्षमुन्मूलयतीत्युक्ते वृक्षस्यैव कात्स्न्येनोत्खननं प्रतीयते न तदाश्रयभूताया भुवोऽपीति । अनुवादवाक्योक्तामियं दशेति विशेष्यं विधिवाक्येऽप्यनुषज्यते । दुर्दशाकृतस्य मनोविकारस्य दारुणतया दुर्निरूपत्वमिवशब्दो द्योतयति । विषादविमोहिताः कृत्याकृत्यविवेचनाय न शक्नुवन्तीति शोकविषादविह्वलायास्तव वचः प्रलापमात्रं न तत्त्वावेदकमिति शङ्कां निरसितुं मे मन इत्युक्तं न मामिति । रजोमयत्वाद् दुःखास्कन्दनीयत्वम् । सङ्कल्पविकल्पात्मकं मम मन एव शोकेन विफलीकृतं न सत्त्वात्मिका निर्णयवृत्तिर्मतिरहं वा । तेन कृत्याकृत्ये निरूप्य निगदितमिदं वचः प्रमाणमेवेति भावः । वनवासादिरूपमिदं व्यसनं न गुरुनियोगदैवादिकृतं किन्तु नैसर्गिकद्वेषैः सपत्नैः कृतं परिभवत्वं प्रापितम् । तस्मादसौ क्लेशो दुस्सहो भवति । धर्मार्थः परिक्लेशस्तु सीतादिभिरिव मया सह्यत एवेति[1] तात्पर्यार्थः । मानविरोधितया क्लेशो मानिनामसह्यो भवति न स्वरूपेणेत्यन्वयमुखेनोपपाद्य व्यतिरेकमुखेनोपपादयति — परैरित्यादिना । पराभवोऽपि मानिनामुत्सव एव । मानिनां मानाविनाभूतानामित्यर्थः । नित्ययोगे इनिप्रत्ययः । मानेन नित्ययुक्ता व्यसनमप्युत्सवत्वेन जानन्ति न[2] जातु व्यसनत्वेनेति भावः । परिभवार्थेन पराभवशब्देन व्यसनमिह विवक्ष्यते । बहिर्व्यक्तं व्यसनं शोचनीयक्लेशतया प्राकृतैः परिभवत्वेनैव प्रतीयत इति द्योतयितुं पराभव इत्युक्तं न विपदिति । अथवा भवः सम्पद् अभवो विपत् । परः प्रकृष्टः परां काष्ठां प्राप्तो भवः पराभवः । महत्तरं व्यसनमित्यर्थः । विपदैस्पृष्टायाः सम्पदः समग्रतायां गृहपतेर्नरपतेर्वा गृहे नगरे जनपदे वा तत्प्रीतये तदीयैर्जनैः क्रियमाणो मङ्गलोत्तरो विधिरुत्सवः । सम्पदो विपदसंस्पर्शं द्योतयितुं उत्सव इत्युक्तं न सम्पदिति । एवमुत्सवत्वप्रतीतेर्व्यसनत्वप्रतीतिमिश्रतामेवकारो व्यावर्तयति । कथं पराभवो मानिनामुत्सवो भवतीत्यत आह— परैरपर्यासितवीर्यसम्पदामिति । परैः सपत्नैरपर्यासिते अपरिवर्तिते वीर्यसम्पदौ येषां ते तथोक्ताः, तेषाम् । प्रवृद्धवेगस्य सरित्प्र-

१. 'त्यभिप्रायः । मा', २. 'लक्ष्य' [illegible] ४. 'दोऽस' क ग. पाठः.

वाहादेः सेतुबन्धादिना झटिति प्रतिघातः परिवर्तनम् । वीराणां समृद्धानां भूभुजां सहसा सपत्नैः कृतो वीर्यसम्पत्प्रतिघातो यथा मानभङ्गहेतुर्भवति न तथा क्रमेण कृतो निगूढकृतो वेति द्योतयितुमपर्यासितेत्युक्तं नाविसंसितेत्यादि । वीर्यशब्दस्य पूर्वनिपातेन भूपतीनां वीर्यस्यान्तरङ्गतया तत्प्रतिघातो दुस्सहतर इति द्योत्यते । अप्राप्तपरिभवानां गुरुनियोगविधायिनां रामादीनां वनवासादिक्लेशो न क्लेशतया प्रत्यभात् । अस्माकं तु परैः परिभूतानां राज्यात् परिच्याविताना मयं क्लेशो दुस्सहतर इति तात्पर्यार्थः ॥ ४१ ॥

एवं वनवासस्य त्रिवर्गविरोधित्वमुपपाद्य त्रिवर्गानुकूलाय सपत्नोन्मूलनाय महाराजमुपच्छन्दयति — विहायेत्यादिना ।

विहाय शान्तिं नृप ! धाम तत् पुनः
प्रसीद सन्धेहि वधाय विद्विषाम् ।
व्रजन्ति शत्रूनवधूय निःस्पृहाः
शमेन सिद्धिं मुनयो न भूभुजः ॥ ४२ ॥

हे नृप ! प्रसीद धर्मविषयविपर्ययोपाविकृतं कालुष्यं प्रोज्झ्य प्रकृतिं प्राप्नुहीत्यर्थः । अविकृतोऽहमकलुषप्रकृतिस्थः प्रसन्न एव । तत् किं प्रसीदेत्युच्यत इति तत्राह — धाम सन्धेहीति । धाम तेजः । सन्धेहि समन्ततो धारय सम्यग् धारयेति वा । अन्तःस्थितं तेजो बहिः प्रकाशयेत्यर्थः । धारणक्रियाफलमभ्युदयो लोकसम्बन्धीति सन्धेहीति परस्मैपदम् । तपोमयं तेजो मया धार्यत एवेति चेत् तत्राह — तदिति । जरासन्धाद्युन्मथनेन प्रकटितप्रभावं[2] प्रसिद्धं क्षत्रियोचितं स्वीयमित्यर्थः । प्रजापालनं क्षत्रियस्य विशेषधर्मः न जपादीति नृपेत्यामन्त्रणेन द्योत्यते । रिपुवधाविष्कृतस्य सततं धार्यमाणस्य धाम्नः किं धारणविधानमिति तत्राह — पुनरिति । द्यूतादिपरिभवकृतं तिरस्कारं निरस्य भूयो विशेषेणाशक्यतिरस्कारं विधाय व्यञ्जयेत्यर्थः । घनापायप्रदीप्तदिवाकरस्येवाद्भुतविक्रमव्यञ्जिततेजसः केन तिरस्कार इति तत्राह — शान्तिं विहायेति । प्रकटतरमपि तव क्षात्रं

१. 'ह इ', २. 'वं क्ष', ३. 'भावप्र', ४. 'प्रस्य दि', ५. 'तस्य त' क. ग. घ. पाठा.

तेजः परिभवसहनहेतुः शान्तिस्तिरस्कृतवती रात्रिरिवार्कतेजः। ततस्तां विशेषेण हित्वा शान्तिविरोधिनीं भीमतां प्राप्येत्यर्थः । विहायेति क्त्वाप्रत्ययेन शान्तित्यागस्तेजोधारणे सन्निकृष्टं कारणमिति द्योत्यते । शान्तिविरोधिनो धाम्नो धारणं किमर्थमिति तत्राह—विद्विषां वधायेति। विशेषेण द्विषतामस्मानुच्छेत्तुमपि यतमानानां शत्रूणां वध एव योग्यः नोपच्छन्दनमुपजापो वेति भावः। ननु हिंसामयी तेजस्विता जनापरागप्रकृतिः। तद्विपरीता शान्तिर्जनानुरागयोनिरिति शान्तिरेव सिद्धिहेतुर्न तेजस्वितेति चेत् तत्राह— व्रजन्तीत्यादि । मुनयः शमेन सिद्धिं व्रजन्ति न भूभुजः। शान्तचित्तैकलभ्यायाः केवलाख्यायाः सिद्धेः प्राप्तौ मुनयः कर्तारः। शान्तिः करणमित्यर्थः। तत्र हेतुर्निःस्पृहा इति । निरस्ता स्पृहा इच्छा यैस्ते निःस्पृहाः। विषयविशेषानुपादानेन निरस्तसमस्तविषयस्पृहा इति गम्यते । मननादिरूपो मानसव्यापारो येषां तेषु मुनिशब्दो वर्तते । निःस्पृहशब्देन बाह्यव्यापारानपेक्षा द्योत्यते । बाह्यार्थेषु पुत्रवित्तादिषु स्पृहाशब्दो वर्तते। बाह्यव्यापारोपरतात्मतया मुनय एव शमेन सिद्धिं प्राप्नुवन्ति, न तु भुवो भोगरक्षणयोरधिकृता बहुतरबाह्यस्पृहानुबन्धाः सततं बाह्यव्यापारापेक्षिणो भूभुजः क्षत्रिया इति भावः। भूभुजः केन सिद्धिं व्रजन्तीति तत्राह— शत्रूनवधूयेति । अत्र सिद्धिं व्रजन्तीत्यनुषज्यते । भूभुज इति कर्तृपदमन्यत्रोपयुक्तमप्यत्राकाङ्क्षितं सन्निहितं योग्यमापतत्येव। तेन भूभुजः शत्रूनवधूय सिद्धिं व्रजन्तीत्यन्वयः। शत्रून् शातनशीलान् सपत्नानित्यर्थः । अवधूयेति । अवेत्युपसर्गः क्रोधद्योतकः । अपराधार्हेण क्रोधेन धूत्वा । सैन्यश्रीसहायप्राणेषु कम्पयित्वेत्यर्थः। सिद्धिरिह साम्राज्यरूपा विवक्षिता। तस्या एव भूभुक्सम्बन्धयोग्यत्वात् । मुनयः शमेन कदाचिद् देशान्तरे देहान्तरे वा सिद्धिं व्रजन्तीत्येव । भूभुजस्तु शत्रून्मथनेन सद्य एव साम्राज्यसिद्धिं व्रजन्तीति तेजश्शमयोर्महदन्तरमिति द्योतयितुं शमस्य हेतुत्वं तृतीययोक्तं, द्विषदवधूननस्य क्त्वाप्रत्ययेन द्योतितम् । वर्तमानविहितेन व्रजन्तीति लट्प्रत्ययेन सिद्धिव्रजनस्य प्रवाहरूपतया वर्तमानतां द्योतयता प्रसिद्धिः प्रकाश्यते।

१. 'न्ती रा', २. 'जस्तिरस्कृतवती। तत', ३. 'नां व', ४. 'शमः क' क. ग. घ. पाठः. ५. 'पिबच्छायां' ख. पाठः. ६. 'त्मकत', ७. 'प्याका', ८. 'यः सिध्यति । श', ९. 'म्। व्र', १०. 'न व्र' क. ग. घ. पाठः.

ननु धाम सन्धेहीति वाक्यस्य मध्ये प्रसीदेति क्रियान्तरोपादानाद् वाक्य-गर्भितत्वं नाम वाक्यदोषोऽत्र प्रतीयत इति चेदुच्यते । उत्सर्गोऽयमपवादेन बाध्यते । यत्र वक्ता रसान्तराक्षिप्ततया प्रकृतं वाक्यं परिसमाप्य वाक्यान्तरं वक्तुं न शक्नोति, तत्र वाक्यगर्भितत्वं गुण एव । यथा 'सिद्धा सापि' 'विप्राय प्रतिपाद्यत' इति वाक्यस्य मध्ये 'वदन्त एव हि वयं रोमाञ्चिताः पश्यते'ति वाक्यान्तरोपादानं, तथेहापि महाराजं प्रति धामधारणविधेयतया निर्दिशन्ती महानुभावस्य तस्याधृष्यताविशेषेण सहसा चकिता तं प्रसादयितुं वाक्यमध्ये प्रसीदेत्याह । तस्माद् धर्मात्मजधर्मपत्न्या विनयविशेषं विभावयद् वाक्यगर्भितत्वं गुण एव । द्विषदमर्षाक्षिप्तहृदयतया द्रुपदात्मजा शत्रूनवधूयेति पूर्वमुक्तवती इति हेतुक्तं वाक्यसङ्कीर्णत्वमपि गुण एवेत्यलं बहुना ॥ ४२ ॥

ननु वश्यमनोभिर्मनस्विभिरुपायक्रमेण साम्राज्यसम्पादनं सदा सुकरमेव, तत् किमद्य समयमनादृत्य समरोद्यमत्वरा विधीयत इति शङ्कायामाह—पुरस्सरा इत्यादि ।

> पुरस्सरा धामवतां यशोधनाः
>
> सुदुःसहं प्राप्य निकारमीदृशम् ।
>
> भवादृशाश्चेदधिकुर्वते परा-
>
> ननाश्रया हन्त हता मनस्विता ॥ ४३ ॥

भवादृशाः परानधिकुर्वते चेन्मनस्विता हता । भवानिव दृश्यमाना भवत्सदृशाः भवादृशाः । समग्रगुणपूर्णा इत्यर्थः । परान् सपत्नानधिकुर्वते चेन्न पराजयन्ते यदि । 'अधेः प्रसहने' (१. ३. ३३) इत्यात्मनेपदम् । 'अधिपूर्वात् करोतेः प्रसहनमभिभवोऽपराजयो वा' इति वृत्तिः । मनस्विता व्यसननिवर्तकता । हता हिंसिता । परानपराजयमाना एव मनस्विताहतेः कर्तारः । हननं हि चेतनकर्मकमचेतनमनस्विताकर्मत्वेनेहारोपितं बुद्धिपूर्वको मनस्विताबाधो न दैवकृत इति द्योतयितुम् । हन्तव्यानां द्विषतां पराजयमप्यकुर्वाणैः सततरक्ष्याया हिताया मनस्वितायाः वध एव कृतो न पराजयमा-

---

१. 'यो वि', २. [illegible] क. ग. घ. पाठः.

त्रमित्यत्र किं वक्तव्यमित्युपालम्भस्तेन द्योत्यते। क्रोधादिभिर्गृहीतमनसां यथा न मनस्विता तथैव क्षान्त्यादिभिरपीति परिभवानन्तरं क्षान्तिपराधीनो मनस्विताभावादभीप्सितं साधयितुं न शक्नुयादिति भावः। परान् न पराजयन्ते इत्येतावता कथं मनस्विताहतिरिति तत्राह — अनाश्रयेति। हेतुगर्भमिदं विशेषणम्। अनाश्रयतयेत्यर्थः। भवादृशा मनस्वितायाः आश्रयो न चेत् कोऽन्यस्तदाश्रयो भवेदिति भावः। अधिकुर्वत इत्यपराजयस्य वर्तमानता प्रतीयते। हतेति मनस्विताहतेर्भूतता। तेन द्विषदपराजयोत्तरकालं न मनस्विताहतिर्नापि समकालम्, अपितु द्विषदपराजयव्यवसायसमय एवेति द्विषदपराजयो मनस्विताहतेरैकान्तिकं कारणमिति द्योत्यते। चेच्छब्दस्तादृशानां द्विषत्प्रसहनासम्भवं द्योतयति। द्विषत्परिभवः क्षत्रियस्य हेतुकृतः न तु परिपालनादिवन्नित्यतया विधीयत इत्याशङ्क्य द्विषतां परिभाव्यत्वे हेतुमाह — निकारं प्राप्येति। निकारं परिभवं, परेभ्य इत्यर्थात् सिध्यति। प्राप्य प्रमादेन गत्वेत्यर्थः। तेन परिभवकारिणः परिभवितुं शक्या एवावधाने सतीति द्योत्यते। सुदुस्सहामिति, क्लेशमयत्वादयशोमूलत्वाच्चासह्यतरमित्यर्थः। ईदृशमिति, इदमस्मद्व्यसनमिव दृश्यमानमतिशोच्यमित्यर्थः। परिभवासहिष्णुत्वे हेतुमाह — धामवतां पुरस्सरा इति। परपरिभवशक्तिः परपरिभवासहिष्णुत्वं च धामशब्देनोच्यते। धामवतां धाम्ना तेजसा नित्ययुक्तानामित्यर्थः। यो येषु प्रधानः स तेषां पुरो गच्छतीति प्रसिद्धमेव। प्राधान्यमस्तीत्येव न, सम्प्रतिपन्नं च तदिति द्योतयितुं पुरस्सरा इत्युक्तं न प्रधाना इति। तेजस्विनोऽप्युपायान्तरेणाभीप्सितस्य लभ्यत्वे परपरिभवैकपरतया पराक्रमं नाद्रियन्त इत्यत आह — यशोधना इति। यश एव धनं प्रीतिकरं येषां ते यशोधनाः। तेजस्विनां यशोधनविरोधे समस्तमन्यद् धनं तृणवदनादरणीयमेव। परिभवे सति तत्प्रतिकारमकृत्वा यशसः प्रत्यापत्तिरभीप्सितमात्रेण न भवेदिति भावः। हन्तेति खेदार्थो निपातः। मनस्विभिर्जगद् धार्यते। मनस्विनामभावे जगदेवावसीदतीति खेदो हन्तेत्यनेन द्योत्यते। एतदुक्तं भवति — परिभवकारिणः परान् प्रत्येवमाशु प्रतिक्रिया कर्तव्येति यो महीभुजां मार्गदेशिकः स एव त्वमात्मपरिभवे विमना भवसि चेत् त्वद्बलाधीनमनोबलानां सोदराणां सुहृदां लोकानां च किमा·

१. 'धाम', २. 'नानामसम्भ' क. ग. घ. पाठः. ३. 'कः न' ख. पाठः.
४. 'नाः य' क. ग. घ. पाठः.

लम्बनमित्येषां सर्वेषां प्रकर्षविधये द्विषद्वधविधायि सिद्धिमूलं निजं तेजः प्रकाशयेति ॥ ४३ ॥

ननु क्षमातेजसोः क्षमैव सिद्धीनामव्यभिचारि कारणं, तेजस्तु व्यभिचारी हेतुरिति मम निर्णय इत्यजातशत्रोर्मतमाशङ्क्याह — अथ क्षमामेवेत्यादि ।

अथ क्षमामेव निरस्तविक्रम-
श्चिराय पर्येषि सुखस्य साधनम् ।
विहाय लक्ष्मीपतिलक्ष्म कार्मुकं
जटाधरः सञ्जुहुधीह पावकम् ॥ ४४ ॥

अथ क्षमामेव चिराय सुखस्य साधनं पर्येषि, कार्मुकं विहाय पावकं जुहुधि । अथशब्दः प्रकृतादर्थादर्थान्तरं द्योतयति । प्रकृतोऽर्थः क्षत्रधर्मः, तस्मादर्थान्तरं मुनिधर्मः । क्षत्रधर्मं विहाय मुनिधर्ममाद्रियस इत्यर्थः । तदेव विवृणोति — क्षमामेवेत्यादि । एवकारेण क्षमाया अन्यसम्पर्को निरस्यते । तदेव स्फुटीकरोति — निरस्तविक्रम इति । निरस्तो बहिःक्षिप्तो विक्रमो विशिष्टक्रम उत्साहः समरसन्नाहादिर्येन स निरस्तविक्रमः । क्षत्रियेण क्षमाप्राधान्येऽङ्गीकृते विक्रमो निरस्त एवेति भावः । चिरायेति सुखविशेषणम् । दीर्घकालसंबन्धिनो नित्यस्येत्यर्थः । मोक्षसुखादन्यत्र नित्यत्वं नास्तीत्यर्थान्मोक्षसुखस्येति सिध्यति । अव्ययेष्वेकरूपेषु विशेष्यानुसारेण विभक्त्यर्थनिश्चयः । चिरायेति क्रियाविशेषणं वा । चिराय पर्येषीति दीर्घकालं निश्चिनोषीत्यर्थः । इदानीं वनस्थस्येव पूर्वं नगरस्थस्यापि भवतो नूनं क्षमैवाभिमतेति भावः । मोक्षसुखस्यैव क्षमा साधनं नान्यसुखस्येत्यस्मिन् पक्षेऽप्यर्थान्मोक्षसुखस्येति सिध्यति । निश्चयार्थद्योतकेन परीत्युपसर्गेण योगाद् इण्धातुर्निश्चयार्थमभिधत्ते । कर्मणि शक्तं कार्मुकम् । क्षमावतो निरस्तकर्मणः कर्मसाधनेन कार्मुकेण किं फलमिति भावः । विहायेति विशेषेण हित्वा । वनस्थेन त्वया स्वक्रियास्वनुपयुक्तं पूर्वमपीदं त्यक्तमेव । इतः प्रभृत्यस्य सान्निधिमपि परिहरेति भावः । लक्ष्मीपतिलक्ष्मेति । लक्ष्म्या धनादिसमृद्धेः पतीनां भर्तृणाम् । लक्ष्मीपतिशब्देन जायायामिव लक्ष्म्यामादेहपातमनुरागो द्योत्यते । लक्ष्म लक्षणं चिह्नम् । लक्ष्म्या

१. 'हादि' छ. ग. घ. पाठः ।

आर्जनवर्धनादीनि कर्मसाध्यानीति कर्माङ्गं कार्मुकम् अविनाभावाल्लक्ष्मीपतीनां चिह्नं भवति। निष्कामानां निरस्तकर्मणां सकामकर्मवल्लक्षणकार्मुकेण किं फलमित्यर्थः। कार्मुकपरित्यागमात्रमेव विधेयं, मुनिपरिकरस्तु पूर्वमेव त्वया स्वीकृत इत्याह — जटाधरः सन्निति। जटाधरत्वस्य वर्तमानत्वमवगमयता सन्निति शतृप्रत्ययेन मुनेरिव जटाधरत्वं तव चिह्नमेवेति द्योत्यते। जटाधरत्वस्योपलक्षणतया वल्कलादीनि मुनिचिह्नान्युपलक्ष्यन्ते। अथवा सञ्जुहुधीति पदम्। पावकं सञ्जुहुधि अग्निं सम्यगर्चयेत्यर्थः। पावकशब्दो योगरूढ्या शुद्धिकरेऽग्नौ वर्तते। दुरितनिर्हरणेन चित्तशुद्धिकरं मोक्षप्रदमग्निमित्यर्थः। 'हु दानादानयोरि'ति पठितोऽपि जुहोतिरत्रार्चनार्थः। अनेकार्थत्वाद् धातूनाम्। अथवा सञ्जुहुधि समाधत्स्व, स्वाधीनतां गमय प्रसादयेत्यर्थः। होमादिभिरिति वाक्यशेषः। इहेति पावनतपोवन इत्यर्थः। मोक्षार्थधर्मानुकूलोऽयं देशो वेषश्च। ततः कार्मुकाद्यायुधत्यागं विधाय कृतार्थो भवेति भावः। महीपत्युचितं निर्ममोचितं वा कर्म कुरुष्व। एवं सङ्कीर्णकर्मा मैव भूरिति तात्पर्यार्थः ॥ ४४ ॥

क्षात्रमेव कर्म मया कृतं करिष्यते च, किन्तु समयं समाप्य सपत्नान् विजित्योच्छिद्य वा साम्राज्यं ग्रहीष्ये इति युधिष्ठिरस्य गतमाशङ्कयाह —

न समयपरिरक्षणं क्षमं ते
निकृतिपरेषु परेषु भूरिधाम्नः।
अरिषु हि विजयार्थिनः क्षितीशा
विदधति सोपधि सन्धिदूषणानि ॥ ४५ ॥

न समयेत्यादि। समयपरिरक्षणं ते न क्षमम्। द्वाभ्यां बहुभिर्वा मिथस्संवादेन धर्मार्थं[2] कृता प्रवृत्तिविशेषप्रतिज्ञा समयः। समयस्य वनवासादिविषयस्य। परिरक्षणं परितः कार्त्स्न्येन पालनं, प्रतिज्ञातक्रियापरिसमाप्तिरित्यर्थः। ते तव। न क्षमं न शक्यम्। क्षम्यते सह्यत इति क्षमम्। 'अकर्तरि च कारके —' (३.३.१९)-इति कर्मादिषु च घञादयो विधीयन्ते इति शक्यमेव क्षमं भवती-

१. 'द', २. 'र्माथर्थं' ख. पाठः.

ति क्षमशब्देन शक्यार्थो लक्ष्यते समयस्यासह्यत्वं सूचयितुम्। भवति प्रतिभाति वेति वाक्यशेषः। क्लेशबहुलोऽपि वनवासः कथञ्चित् समाप्येतापि, अज्ञातवासस्तु समापयितुमशक्य एवेति भावः। तत्र हेतुमाह — परेषु निकृतिपरेष्विति भूरिधाम्न इति च। 'यस्य च भावेन भावलक्षणम्'(२. ३. ३७) इति सप्तमी। परेषु शत्रुषु। निकृतिपरेषु छद्मनिरतेषु। निह्नुतिविदो द्विषन्तस्त्वामनिह्नुतिविदं ज्ञास्यन्त्येवेत्यभिप्रायः। निगूहनं च तवाशक्यमित्याह — भूरिधाम्न इति। भूरि विपुलं विततमनन्यसाधारणं धाम तेजो यस्य स भूरिधामा, तस्य। मेघच्छन्नस्य दिवाकरस्येव वेषान्तरादितिरस्कृतस्यापि भवतो व्यक्तिर्भवत्येवेति भावः। निगूढाकृतिषु भीमादिषु दृष्टेषु नैष निजो वेष एषां, वेषान्तरतिरस्कृताः केचिदेते इत्येव जना जानीयुः। त्वयि दृष्टे त्वन्न्याश्रयं त्वदव्यभिचारि साम्राज्यचिह्नं निरीक्ष्य युधिष्ठिरोऽयमित्यपि प्रतीयुरिति द्योतयितुं ते इत्युक्तं, न न इति। ननु सद्भिः समयरक्षार्थं यतितव्यमेव समयरक्षणस्याशक्यताशङ्कया समयविरतिस्तु न युक्तेत्याशङ्कय उत्सर्गविधिरपवादविधिना बाध्यत इत्याह — अरिष्वित्यादिना। क्षितीशाः अरिषु सन्धिदूषणानि विदधति हि। सन्धिशब्देन समय इह विवक्ष्यते, प्रतिज्ञार्थेन समित्युपसर्गेणोपसृष्टः किप्रत्ययान्तो दधातिः समयार्थं वक्तुं शक्नुयादिति। सन्धेः समयस्य दूषणानि दोषस्य नैकृत्यस्य प्रयोजकानि कर्माणीति वाक्यशेषः। 'नन्दिग्रहि —'(३. १. १३४) इत्यादिसूत्रेण कर्तरि ल्युः। विसंवादोऽसमाप्तिः स्वानुकूलसमयकरणं चेत्येवमादीनि कर्माणि दूषणानीति बहुवचनेन द्योत्यते। विदधाति कुर्वन्ति। सन्धिं नाद्रियन्त इति लभ्यते। अथवा दूषणशब्दो दोषार्थः। सन्धेर्दूषणानि दोषान् विदधत्याविष्कुर्वन्तीत्यर्थः। समयस्य पौरुषेयतया भ्रान्तिविप्रलम्भादिमूलत्वमुपपाद्य दौर्बल्यं प्रकाश्यानादरणीयतामापादयन्तीति भावः। सन्धिदूषणं न स्वफलेप्सया विधीयते, किन्तु लोकगुप्त्यर्थमिति विदधतीति परस्मैपदेन द्योत्यते। तदेव विवृणोति — क्षितीशा इति। क्षितिनियमनरक्षणाद्यधिकृताः क्षत्रिया इत्यर्थः। क्षितिरक्षाविरोधी समयो मुनिविषयोऽपि क्षत्रियाणामनादरणीय एवं। रिपुविषयः किं पुनरित्याह — अरिष्विति। तत्र हेतुमाह — विजयार्थिन इति। विशिष्टं जयमव्यभिचारिणी-

१. 'त, अ' क. ग. घ. पाठः. २. 'ति। भू' क. ग. पाठः. ३. 'क्तुं न श', ४. 'षान् प्र' क. ग. घ. पाठः. ५. 'ब। [illegible]' [illegible] पाठः.

मरिपरिभूतिमात्मोन्नतिं चेच्छन्त इत्यर्थः । रन्ध्रान्वेषिभिर्द्विषद्भिश्चिकीर्षितामात्मपरिभूतिं परिहर्तुं समयभङ्गोऽपि क्षत्रियैः कर्तव्य एवेति भावः । समयदूषणविधाने सति साधुगर्हा स्यादिति तत्राह — सोपधीति । एतत् क्रियाविशेषणम् । उप समीपे धीयते अभिधीयते वेत्युपधिशब्देन प्रतिनिधिरुच्यते । कस्य प्रतिनिधिरित्याकाङ्क्षायां समयस्येत्यर्थात् सिध्यति । द्वादशवार्षिको वनवासो वार्षिकोऽज्ञातवास इति मुख्यः समयः । वर्षस्य प्रतिनिधिर्मास इति तावत्सङ्ख्यमासो वनवासादिरिति समयप्रतिनिधिं द्योतयितुमुपधिशब्द इह प्रयुक्तः । समयदूषणविधानस्य समयप्रतिनिधेश्च कर्तव्यतया मनसीह स्फुरणेन सोपधीति साहित्यमुक्तम् । अथवा सोपधिसन्धिदूषणानीत्येकं पदम् । उपधिशब्देन निकृतिरुच्यते । अरिषु सोपधिसन्धिदूषणानि विदधति । द्विषदधिकरणस्य द्विषद्विहितस्य सोपधेः सव्याजस्य सन्धेः समयस्य दूषणानि विदधति दोषानाविष्कुर्वन्ति । आदरणीयतां नानुमन्यन्त इति भावः । द्विषद्विहितस्य निकृतिमयस्य समयस्यानादरणीयतां न कतिपयक्षितिपतयो मन्यन्ते, किन्तु सर्व एवेति प्रसिद्धिद्योतकेन हिशब्देन द्योत्यते । अथवा विग्रहप्रशमपूर्वकं श्लेषणमिह सन्धिशब्देन विवक्ष्यते । समयोपेक्षणे समयरक्षणसाध्यस्य सन्धेर्विरोधः स्यादित्याशङ्क्याह — अरिष्वित्यादि । विजिगीषवस्तेजस्विनः क्षितीशा नित्यापकारिषु वैरिषु विग्रहमेव स्पृहयन्ते, न भीरुवत् सन्धि समाश्रयं वेति भावः ॥ ४५ ॥

एवं द्विषद्विषयस्याभियोगस्य कर्तव्यतां द्विषत्कल्पितस्य समयस्योपेक्षणीयतां[1] चोपपाद्य लोकरक्षैककृत्यानां विनिपातो न चिरस्थितिरभ्युदयानुबन्धी चेति द्योतयन्ती दिव्यानुभावा धर्मात्मजधर्मपत्नी पौरुषदुर्वारमदृष्टप्रतिबन्धमाशीर्वचनेन परिवर्तयति — विधिसमयेत्यादिना ।

विधिसमयनियोगाद् दीप्तिसंहाराजिह्मं
शिथिलदशमगाधे मग्नमापत्पयोधौ ।
रिपुतिमिरमुदस्योदीयमानं दिनादौ
दिनकृतमिव लक्ष्मीस्त्वां समभ्येतु भूयः ॥ ४६ ॥

लक्ष्मीस्त्वां भूयः समभ्येतु । पूर्वनिवृत्ताया एककर्तृकायाः क्रियायाः पाश्चात्यतां भूयश्शब्दो द्योतयति पुनश्शब्दवद्, न त्वनुशब्दवत्

1, 'यस्योपेक्षणीयतां' क. ग. घ. पाठः.

पाश्चात्यतामात्रम् । तेन प्रतिकूलेन हेतुना परिवर्तिताया लक्ष्म्या अनुकूलेन प्रत्यापत्तिमात्रमाशास्यं, न प्राप्तिरेवेति द्योत्यते । समभ्येतु सम्यगभिगच्छतु । अभिगतेः सम्यक्त्वं सूचयता समित्युपसर्गेण लक्ष्म्याः परिवृत्तिपरिभवविपदसंस्पर्शो द्योत्यते । अभिना त्वाभिमुख्यद्वारेण लक्ष्मीप्राप्तेरव्यवधानं व्यञ्जयता स्वविक्रमजिता लक्ष्मीस्तवोचिता, नान्यविक्रमकल्पिता, न सामादिसाध्या वेति द्योत्यते । पूर्वार्धेन लक्ष्मीपरिच्युतेः कारणमाह । दीप्तिसंहारजिह्ममिति । उत्साहप्रवर्तयित्री चित्तवृत्तिस्तेजश्च दीप्तिशब्दार्थः । अत्रोभयं विवक्षितम् । दीप्त्याः वीर्यतेजसोः संहारेण सङ्कोचेन जिह्मं कुटिलमन्यथाभूतमित्यर्थः । दीप्तिसंहारे हेतुमाह — विधिसमयनियोगादिति । विधिसमययोरीश्वरकालयोर्नियोगाच्छासनात् । प्राणिपुण्यापुण्यसाक्षी ईश्वर इह विधिशब्देन विवक्ष्यते, प्राणिपुण्यापुण्यपरिपाचकः कालः समयशब्देन । 'विभाषागुणेऽस्त्रियाम्' (२. ३. २५) इति हेतौ पञ्चमी । नियोगस्य क्रियारूपस्यापि द्रव्याश्रितत्वेन गुणत्वमुपचर्यते । ईदृशकर्मायमिदं कुर्याद् इदमनुभवेदितीश्वरस्य कालस्य च सङ्कल्पो निपतफलत्वान्नियोगशब्देनेह विवक्ष्यते । न त्वीश्वरो राजादिवदव्यवधानेन व्यवधायेन वा कञ्चिन्नियुङ्क्ते । ईश्वरादन्यस्त्वद्वीर्यतेजसोः सङ्कोचं कर्तुं न शक्नुयादित्यर्थः । विधिसमयकृतस्तदा युधिष्ठिरस्य बुद्ध्यवसाद इति भारतेऽपि द्रौपदीवचस्येव प्रतीयते "नमो धात्रे विधात्रे च यौ मोहं चक्रतुस्तव । पितृपैतामहे राज्ये वोढव्ये तेऽन्यथामतिः ॥" इत्यादौ । शिथिलदशमिति । शिथिला विस्रस्ता दशा अवस्था यस्य स शिथिलदशः, तम् । दशाशब्दोऽवस्थासामान्यविषयोऽप्यत्र साम्राज्यलक्षणेऽवस्थाविशेषे पर्यवस्यति । अचकितैः कितवैर्द्विषद्भिर्द्यूतार्थमाहूत इति लभ्यते । अगाधे अदृष्टतले गम्भीरे । आपत्पयोधौ व्यसनसमुद्रे । मग्नमवपतितम् । मज्जनाधिकरणत्वोपपत्तये दुस्तरतरत्वप्रतिपत्तये चापदः पयोधित्वं रूपितं, न पयोधिसादृश्यमात्रं कृतम् । यथा समुद्रः सर्वाम्भसामाधारस्तथा व्यसनं सर्वदुःखानामायतनमित्यर्थविशेषं द्योतयितुं पयोधावित्युक्तं, न समुद्र इति । द्यूतपराजयराज्यपरिभ्रंशवनवासादिक्लेशमयेन महीयसा व्यसनेन सञ्छन्नसर्वशक्तिमित्यर्थः । विधिसमयनियोगेन दीप्तिसंहारस्तेनान्तर्व-

---

१. 'ना प्र', २. 'कृ', ३. 'कि' क. पाठः ४. 'त्वाभिप्रायः ।' क. ग. घ. पाठः

हिर्जिह्मता बुद्ध्यवसादो धर्षणीयता च, तया दशाशैथिल्यं, तेनापत्पयोधिमज्जनमिति पूर्वपूर्वमुत्तरोत्तरस्य कारणमित्युक्तिक्रमेण द्योत्यते। युधिष्ठिराभिप्रायबुभुत्सया क्लेशासहिष्णुतया च महाराजं प्रति मतिभ्रमादिदोषारोपणमनुचितमनुशासनं च कृतवती स्वोक्तिक्रमैरविकृतं गरीयसो भर्तुराशयमालक्ष्य सवैलक्ष्या विमृश्य धर्मात्मजधर्मपत्नी विधिहेतुस्तव विनिपातो न स्वदोषकृत इति परमार्थकथनेन महाराजं भर्तारं प्रसादयतीत्ययं चार्थो विधिसमयेत्यादिना द्योत्यत एव। व्यसननिमग्नस्य लक्ष्मीप्रत्यापत्तेः किं निमित्तमिति तत्राह — रिपुतिमिरमुदस्योदीयमानमिति। रिपव एव तिमिरं रिपुतिमिरम्। रिपूणां तिमिरत्वेन रूपणं कृतं, न तिमिरसादृश्यं कृतम्। तेन मलीमसास्तमोरूपास्ते रिपव उच्छेद्या एव, न जातु सन्धेया जेया वेति द्योत्यते। उदस्येत्युत्साहेनोत्कर्षेण च क्षिप्त्वा उच्छिद्येति लभ्यते। उदस्येति क्त्वाप्रत्ययेन रिपूच्छेदानन्तरमुदयो भवतीति रिपूच्छेदस्योदयं प्रति नियतकारणत्वं द्योत्यते। उदीयमानमुद्यन्तम्। उदीयमानमिति लट्प्रत्ययेनोदयसमकालमेव लक्ष्मीप्राप्तिर्नानन्तरं कालान्तरे वेति प्रतीयते। रिपूच्छेदोदययोर्भावितया कर्तव्यतया च विधेयत्वेऽप्यनुवादेन सुकरत्वं गम्यते। स्वराज्यप्राप्तिरुदयः। लक्ष्मीप्राप्तिस्तु करादानप्रत्यापत्तिः। 'ईङ् गतावि'ति पठितस्य श्यन्विकरणस्यात्मनेपदिनो धातोरीयमानेति रूपम्। महत्तरव्यसनमग्नस्यासहायस्य कुत उदयो लक्ष्मीप्राप्तिर्वेति तत्राह — दिनादौ दिनकृतमिवेति। यथा दिनकृतः उदेतुं न सहायापेक्षा तथैव भवतोऽपीति भावः। दृष्टान्तेऽपि विशेषणानि योजनीयानि। ईश्वरस्य नियोगाद् दिनकृतोऽपि दीप्तिसंहारो भवति। अहोरात्रादिरूपस्य स्थूलस्य कालस्य कर्ताप्यादित्यः परेण कालेन नियम्यत इति कालनियोगोऽपि तद्दीप्तिसंहारस्य हेतुरेव। दीप्तिसंहारेण जिह्मता प्रतापह्रासः, तेन विश्वप्रकाशनरूपाया दशायाः शैथिल्यं, तेनास्तमयरूपं पयोधिमज्जनमिति दृष्टान्तेऽपि हेतुक्रमो योजनीयः। दृष्टान्तगतं पयोधिमज्जनं प्रातिभासिकं, न पारमार्थिकम्। तेन दार्ष्टान्तिकगतमापन्मज्जनमपि प्राकृतैर्जनैः प्रतीयत इत्येव, न वास्तवमिति विपत्तावपि तस्य सपत्नोच्छेदनशक्तिरस्त्येवेति द्योत्यते। प्रकाशिताशेषविषयं श्रौतस्मार्तलौकिकक्रियानिदानं दिनं कुर्वत आदित्यस्येव विश्वव्यवस्थाविभागमूलं सकलक्रियाप्रयोजकं साम्राज्यमधितिष्ठतस्तव पुनरुदे-

तुमनुद्यमे भुवनमेव विनश्येद् इत्यवश्यमुदेतुमुद्यमः कर्तव्य एवेति च दिन-कृद्दृष्टान्तेन द्योत्यते । दिनकरस्योदयः प्रसिद्ध एव । लक्ष्मीस्तु पङ्कजविकासजगत्प्रकाशनादिरूपा तस्योदयस्य फलम् । शारदं दिनकरं प्रभात एव लक्ष्मीरभिगच्छति न हैमनमिति शारदेन दिनकृता साम्यं द्योतयितुं दिनादावित्युक्तम् । दृष्टान्तगतेन दिनादावित्यनेन दार्ष्टान्तिके लक्ष्मीप्राप्तिहेतुर्दैवप्रसादोल्लास आक्षिप्यते । दिनकृतमिवेति दिनकरेण सादृश्यमुक्तं, न तु तत्त्वं रूपितम् । तेन दिनकराद् युधिष्ठिरस्य भेदप्रतीतिस्तदुदयस्य पुनरस्तमयापर्यवसायित्वं प्रतीयते । त्रियामावसान एव दिनकरस्योदयो न मध्यरात्र इति दिनकृद्दृष्टान्तमुदाहरन्त्या द्रौपद्यापि समयावसान एव पुनरुदेतुमुद्यमो विधित्सित इति व्यज्यते । समयावसाने द्विषदभियोगाय महाराजं प्रवर्तयितुं मुनिसंवासेनास्य मन्युर्मन्दो मा भूदिति तया तदानीं तन्मन्युदीपनं कृतमित्यविरोधः । लक्ष्म्या युधिष्ठिरेऽनुरागातिशयं द्योतयितुं समभिगमे लक्ष्म्याः कर्तृत्वमुक्तं न युधिष्ठिरस्य । एतदुक्तं भवति——य एवं विधिवैपरीत्येन परिवर्तितदीप्तिप्रतापसम्पदीदृश्या विपदा वशीकृतः, तमेव त्वामचिरभाविना विध्यानुकूल्येन समुन्मूलितसपत्नमनन्यगामिन्यनुरागिण्यभ्युदयानुबन्धिनी साम्राज्यलक्ष्मीः समभिसरत्विति । विधिसमयनियोगशब्दो दीप्तिसंहारशब्देन समासान्तरं गतेनाप्याकाङ्क्षादिवशात् संबध्यते, यथा देवदत्तस्य गुरुकुलमित्यत्र देवदत्तशब्दो गुरुशब्देन । अस्य महाकाव्यस्यान्ते 'दिनकृतमिवोच्चैरुपजगुः' (स० १८. श्लो० ४७) इति धनञ्जयस्योपमानत्वेन दिनकृदुदाहृतः । अत्र तु युधिष्ठिरस्येति युधिष्ठिरधनञ्जययोः प्रवृत्तिर्विश्वगुप्त्यर्थैवेति तयोरैकमत्यमैकार्थ्यं च द्योत्यते । किञ्च सर्गसमाप्तिषु सर्वत्र लक्ष्मीशब्दमादौ श्रीशब्दं च साभिप्रायं प्रयुञ्जानस्यातिगम्भीरभावस्य महाकवेर्भारवेरभिप्रायो विविच्यते । लक्ष्मीशब्दो नरैकाश्रयां सुरेन्द्राद्यनुगतां साम्राज्यसमृद्धिसमष्ट्यधिदेवतां परशक्तिमभिधत्ते, श्रीशब्दस्तु तत्प्रकृतिं नारायणाश्रयां परशक्तिमिति लक्ष्मीशब्दस्य प्रतिसर्गान्तमनुगमेन लक्ष्म्येकाश्रयो धर्मार्थपौरुषाधिष्ठाता नराख्यो विष्णुरस्मिन् महाकाव्ये प्राधान्येन प्रतिपाद्यत इति द्योत्यते । श्रीशब्दस्यादावुपादानेन मध्येऽनुसन्धानेन च श्रीवल्लभो नारायणाख्यः परो विष्णुर्नरानुग्राहकतया प्रतिपिपादयिषित इति प्रतीयते । शिशुपालवधे श्रीवल्लभस्य नरानुग्राहकस्य श्रीशब्दमादौ सर्गान्तेषु च नियमेन प्रयुञ्जानः

नारायणस्य विष्णोस्तस्मिन् प्राधान्येन प्रतिपाद्यतां द्योतयन् महाकविर्माघोऽपी-दृशं भारवेरभिप्रायमभिव्यनक्त्येव । "कपाटविस्तीर्णमनोरमोरःस्थलस्थितश्री ललनस्य तस्य । आनन्दिताशेषजना बभूव सर्वाङ्गसंगिन्यपरैव लक्ष्मीः ॥" अत्र श्लोके च श्रीलक्ष्मीशब्दयोरर्थविशेषो विवक्षित इति प्रतीयते । नरकवधे 'लक्ष्मीश्रियोस्तेजसि मग्नमूर्तिमग्रे हरिं साध्वसवान् ददर्श' इत्यत्र लक्ष्मीश्री-शब्दयोरर्थविशेषः स्फुट एवेत्यलं बहुना ॥ ४६ ॥

इति श्रीचित्रभानुकृतौ शब्दार्थदीपिकायां

किरातार्जुनीयव्याख्यायां प्रथमः सर्गः ।

---

## अथ द्वितीयः सर्गः ।

विहितां प्रियया मनःप्रिया-
मथ निश्चित्य गिरं गरीयसीम् ।
उपपत्तिमदूर्जिताश्रयं
नृपमूचे वचनं वृकोदरः ॥ १ ॥

विहितामित्यादि । अथ वृकोदरो नृपं वचनमूचे । धीमत्या धर्मपत्न्याः सोपपत्त्युपच्छन्दनात्मकं वचनं किमसावजातशत्रुर्नाभिनन्दति, युक्तियुक्तमपि स्त्रीवाक्यं न प्रमाणीकर्तव्यमिति प्रतीत्या वा मतिविपर्ययेण वा । सर्वथा महाराजो मतिविपर्यये युवराजेन बोधनीयः । तस्मादस्या वाक्यस्य गुणान् सोपपत्तिभिर्वाक्यैरुपबृंहयन् महाराजस्य मतिविपर्ययं परिवर्तयिष्यामीति वृकोदरविमर्शानान्तर्यमथशब्देन द्योत्यते । प्रियया मनःप्रियां विहितां गिरं गरीयसीं निश्चित्य । प्रिययेति प्रेमविषयभूतयेत्यर्थः । मनःप्रियामिति । वस्तुतत्त्व-मननवृत्तेर्मनसोऽन्तःकरणस्य प्रीतिकरीमित्यर्थः । न खलु कश्चिद् विषयो बाह्ये-

न्द्रियस्य प्रीतिमकृत्वान्तःकरणस्य प्रीतिं करोतीति मनःप्रियामित्यनेनैव
श्रोत्रप्रियामित्यपि सिध्यति। तत्र हेतुमाह — विहितामिति। विहितां कृताम्।
अभिनवैरर्थोपपत्तिगुणालङ्कारैर्योजयित्वोक्तामिति लभ्यते। गिरः प्रियासम्ब-
न्धेन श्रोत्रप्रियता प्रतीयते, विहितामित्यनेन द्योतितैर्गुणैः मनःप्रियतेति वि-
भागः। विहितामिति निष्ठाप्रत्ययेन भूतार्थेन तद्गुणनिरूपणावसरः, सत्ये-
वावसरे युधिष्ठिरस्य द्रौपदीवागनभिनन्दनद्योतनमवचनं च व्यज्यते। प्रि-
यया विहितामित्यन्वयक्रमे सुकर एव व्युत्क्रमोच्चारणेन गुणाधिक्याद् यथा
गीरधिकं प्रीतिकरी न तथा प्रियासम्बन्धादिति द्योत्यते। गरीयसीं निश्चि-
त्येति, मान्यतरामवधार्येत्यर्थः। तदुक्तं द्विषदभियोगं कर्तव्यमेव मत्वेति ल-
भ्यते। 'उदाजहार द्रुपदात्मजा गिरः' (स० १. श्लो० २७) इत्यत्र प्रति-
पादनप्रकारभेदाभिन्नानामवान्तरवाक्यानां बहुत्वमवेक्ष्य बहुवचनं प्रयुक्तम्,
अत्र तु तासां गिरामेकाभिप्रायपर्यवसानकृतमेकत्वमाश्रित्यैकवचनमित्यवि-
रोधः। कीदृशं वचनमूच इति तत्राह — उपपत्तिमदूर्जिताश्रयमिति। उपप-
त्तिर्युक्तिर्यस्मिन्नस्ति तदुपपत्तिमत्। ऊर्जितं बलमाश्रयमास्पदं यस्य तदूर्जिता-
श्रयम्। वचनक्रियाप्रयोजकत्वमिहाश्रयत्वमभिप्रेतम्। बलावलम्बनं निश्चित्यो-
क्तमिति लभ्यते। तेन बलस्य प्राधान्येन प्रतिपाद्यत्वं द्योत्यते। नीतिमतो महा-
राजस्य मनोऽनुकूलयितुं प्रथमं प्रयत्नेनोपपत्तिमुपन्यस्य ततो वृकोदरस्य वचनं
पुनः स्वभाववशेन बलप्राधान्यप्रतिपादनपर्यवसितमित्युपपत्त्यूर्जितयोः क्रमो-
च्चारणेन प्रतीयते। नृपमिति नृणां मनुष्याणां पालकं तथैव जनैः प्रतीतं चेत्यर्थः।
क्षितिरक्षणमेव तव स्वधर्मो न जपोपवासादीति राजधर्मस्मारणेन युधिष्ठिरस्य
विपर्ययं व्यावर्तयितुं वृकोदरस्योद्यमं द्योतयितुं नृपमित्युक्तं न गुरुमित्या-
दि। वृकोदरशब्दः पूर्वं व्याख्यातः। तेन देवादियुद्धेष्वप्यज्ञातभयः सपत्नो-
च्छेदनं सुकरमेव मन्वान इति लभ्यते। स्वप्रतिज्ञातः सुयोधनादिवधः
स्वसम्बन्धी वक्त्रा वृकोदरेण वचनफलत्वेनाभिसंहित इत्यूच इत्यात्मनेपदेन
द्योत्यते। ब्रूञो 'ब्रुवो वचिः' (२. ४. ५३) इति वचादेशे ऊचे इति रूपम्।
दुह्यादिपरिगणनेन द्विकर्मको ब्रुविधातुः। 'अकथितं च' (१. ४. ५१) इति
नृपस्य कर्मत्वं 'कर्तुरीप्सिततमं' (१. ४. ४९) इति वचनस्य ॥ १ ॥

१. 'यत्री', २. 'नभि', ३. 'क' क. ग घ. पाठः. ४. 'री त' ख.
पाठः. ५. 'त्वयेति' क. पाठः. ६. '[illegible]' ख. घ. पाठः. ७. 'स्य वृ' क.
ग. घ. पाठः.

प्रशंसया प्रियावचसि गौरवमुत्पाद्य युधिष्ठिरं तदनुकूलं कर्तुं प्रथमं तावद् वचः प्रशंसति — यदवोचतेत्यादिना ।

यदवोचत वीक्ष्य मानिनी
परितः स्नेहमयेन चक्षुषा ।
अपि वागधिपस्य दुर्वचं
वचनं तद् विदधीत विस्मयम् ॥ २ ॥

मानिनी यदवोचत, तद् वचनं वागधिपस्यापि विस्मयं विदधीत । मानिनीति मानेन नित्यसम्बद्धेत्यर्थः । तथाचोक्तं — "भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥" इति । परपरिभवासहनहेतुरभिमानः परमार्थावगमसाधनमनुमानादिप्रमाणं च द्रौपद्या इव नान्यस्याः स्त्रिया अस्तीत्यसाधारणगुणावगमहेतुना मानिनीति विशेषणेनैव विशेष्यसिद्धेः पार्षतीत्यादि[2] विशेष्यपदं न प्रयुक्तम् । परितो वीक्ष्येति । परितः समन्ततः । वीक्ष्य विशेषेणेक्षित्वा दृष्ट्वा । अस्माकमनपराधित्वं धार्मिकत्वशक्तिमत्त्वादीन् गुणांश्च द्विषतामपराधित्वमधार्मिकत्वदौर्बल्यादीन् दोषांश्च प्रजानामस्मासु सगौरवमनुरागं परेषु तद्विपर्ययं यदुपाञ्चालादिसुहृदामस्मदभिप्रायानुकूल्यं सामर्थ्यं च स्फुटतरमवगम्येत्ययमर्थः परितो वीक्ष्येत्यनेन प्रतीयते । परितो वीक्षणे हेतुमाह—स्नेहमयेन चक्षुषेति । चक्षुश्शब्देन मनो लक्ष्यते, बाह्यार्थविषयस्य चक्षुषो विवक्षितसूक्ष्मतमोपायादिवीक्षणे[3] साधनत्वायोगात् । तेनावहितस्य मनसश्चक्षुष इवासंदिग्धस्फुटतरावगमसाधनत्वं द्योत्यते । तथाचोक्तम् — 'अवहितं हि चित्तमर्थान् पश्यती'ति । स्नेहमयेनेति, स्नेहविकारेणेत्यर्थः । साम्राज्यसम्पादनतात्पर्यमिह स्नेहशब्देन विवक्ष्यते । तात्पर्येणावधानं भवति, तेन सदुपायादिविमर्शः, तेन कृत्याकृत्य[4]तत्त्वनिर्णय इति तात्पर्यमेव क्रमेण मनः करतलामलकवत् कृत्याकृत्यमवलोकयितुं समर्थं करोतीत्ययमर्थः स्नेहमयशब्देन द्योत्यते । अवोचत इदानीमुक्तवतीत्यर्थः । सुदुःसहपरिभवव्यसनजनिताभिषङ्गमुषितविवेकविज्ञानधृतेरस्या वचस्तदानीं परमार्थविसंवादि स्यादपि । इदानीं तु मुनिजनसंवासजानि-

१. 'मनहे' ख. पाठः. २. 'दि न विशेष्यपदं' प्र ३. 'णस' क. ग. घ. पाठः
४. 'त्यत्व' ख. घ. पाठः.

तविनयाविवेकधैर्यविज्ञानाया याज्ञसेन्या वचनं कृत्यनिर्णये प्रमाणमेवेत्ययमर्थोऽद्यतनभूतार्थेनाऽवोचतेति लुङ्प्रत्ययेन द्योत्यते । परिभवपरिहाररूपमात्मसंबन्धि फलमभिसन्धाय तदुपायमवगम्यैवेयमिदं वचनमुक्तवती । तेनेदं वचनं प्रयोजनपर्यवसायीत्यवोचतेत्यात्मनेपदेन द्योत्यते । वागधिपस्येति अधिकमसाधारणं रक्षणं कुर्वन् पतिरधिपशब्देनोच्यते । वागधिपस्य वाचामधिपतेर्बृहस्पतेरित्यर्थः । असाधारणैः स्वोक्तिगुणैः सर्वेषां वाग्मिनां विस्मयं जनयतो वागधिपस्य कथमन्यवचनं विस्मयं विधास्यतीति विरोधमपिशब्दो द्योतयति । विस्मयमित्याश्चर्यम्, इदमन्यत्रादृष्टमिति प्रतीतमित्यर्थः । विदधीत कुर्वीतेत्यर्थः । संभावनायां लिङ्प्रत्ययः । प्रशस्यतमेनाप्यस्या वचनेन न विस्मयं गमिष्यामीति कृतव्यवसायस्य वागधिपस्य धैर्यमवधूय प्रसह्य विस्मयं कर्तुं शक्यमिदं वचनमिति द्योतयितुं वचनं विस्मयं विदधीतेत्युक्तं न वचनेन[2] विस्मयो भवेदिति । वचनेन विहितविस्मयः त्यक्ताभिमानो बृहस्पतिरत्र[3] प्रशंसां करिष्यतीति विस्मयविधानफलं वचनप्रशंसेति वचनसंबन्धि क्रियाफलमभिप्रेत्य विदधीतेत्यात्मनेपदं प्रयुक्तम् । विस्मयविधाने हेतुमाह— दुर्वचमिति । वागधिपस्येत्यत्रापि संबध्यते । शेषलक्षणैवेयं षष्ठी । न कृद्योगलक्षणा, तस्या 'न लोका—' (२. ३. ६९) इत्यादिना निषेधात् । अथवा वागधिपेनेति विभक्तिविपरिणामेन वागधिपशब्दोऽत्रानुषज्यते । इदमीदृग्गुणविशिष्टं वचनम् । एवं वक्तुं वागधिपोऽपि न शक्नुयादिति स्वदुर्वचं वचनं निशम्य कथमसौ न विस्मयेतेति भावः ॥ २ ॥

यो गुणो यत्र न संभाव्यते स तत्र दृश्यमानोऽसमग्रोऽपि सर्वस्य विस्मयहेतुर्भवतीति स्त्रीजनमनोवचनाविषयनयैकदेशस्पर्शेनाप्यस्या वचो विस्मयविधायि स्यात् । तावता न कृत्यनिर्णयहेतुः स्यादिति युधिष्ठिरस्य शङ्कायां पण्डितैरपि दुर्लभो गुणोऽत्र विस्मयहेतुरित्याह — विषमोऽपीत्यादिना ।

विषमोऽपि विगाह्यते नयः
कृततीर्थः पयसामिवाशयः ।

१. 'न विहि', २. 'नयोर्विस्म' ख. पाठः. ३. 'स्य' क. ग. घ. पाठः.
४. 'स्यांस्य'ख. पाठः

स तु तत्र विशेषदुर्लभः
सदुपन्यस्यति कृत्यवर्त्म यः ॥ ३ ॥

नयो विगाह्यते विशेषेणामूलमवतीर्यते । नयशब्देन नयशास्त्रं लक्ष्यते तादर्थ्यात् । तयोरन्वयानियमेन प्रतिभामूलनयाभासस्य नयत्वं व्यावर्तयितुम् । विषमोऽपीति । ऐकरूप्येण निश्चेतुमशक्योऽर्थो विषमशब्देनोच्यते । एकस्मिन्नेव विपक्षादौ सन्धिविग्रहादिविरुद्धार्थप्रतिपादकत्वं नयवैषम्यमिह विवक्ष्यते । अथवा लौकिकसाङ्केतिकशब्दार्थसंकीर्णतया साम्याभावाद् विषम इत्युच्यते । अपिशब्दो विरोधद्योतकः । जलाशयकर्मिकां पादकरणप्राप्तिरूपामवतरणक्रियां वदता गाहतिना नयकर्मिका मनःकरणप्राप्तिरूपावगमनक्रिया लक्ष्यते यथा पादविगाहनविषयो जलाशयश्चक्षुर्विषयो घटादिरिव न स्फुटं गृह्यते न च कार्त्स्न्येन, तथैव मनोविमर्शविषयो नय इति नयस्य गहनत्वं द्योतयितुम् । वैषम्याद् दुरवगाहस्य नयस्य विगाह्यत्वे हेतुमाह— कृततीर्थ इति । तीर्थशब्देन सम्प्रदाय इह विवक्ष्यते । कृतं तीर्थं सम्प्रदायो यस्मिन् स कृततीर्थः । लोकप्रसिद्धोऽपि सम्प्रदायसाध्योऽर्थस्तत्पूर्वप्रयत्नप्राप्य इति द्योतयितुं कृततीर्थ इत्युक्तं नाश्रिततीर्थ इत्यादि । कर्तृविशेषानुक्त्या सर्वैर्विगाह्यत इति सिध्यति । तेन सम्प्रदाये सति स्त्रीणामपि शास्त्रीयो व्यवहारः शक्य इति तन्मात्रं न विस्मयहेतुरिति भावः । नन्वतिगहनो नयः कृततीर्थोऽपि सर्वैर्न विगाह्यत इति तत्राह— पयसामाशय इवेति । पयसां जलानामाशय आधारः सरित्प्रभृतिः । आपातदर्शने जलप्रवाहप्रतिभासानां साम्याभावाद् विषमोऽपि यथा जलाशयः कृततीर्थः कृतावतारमार्गः कृतसम्प्रदायो वा सर्वैर्विगाह्यते तथा नयोऽपीत्यर्थः । अस्या वचसि सम्प्रदायसाध्यसामयिकसिद्धिशक्तिगुणोदयादिकथनं कृत्यसामान्योपपादनं च न विस्मयहेतुरिति भावः । सकृद्विगाहनेनैव जलाशयस्य पारं प्राप्यते न नयस्येति नयस्य जलाशयाद् व्यतिरेकं द्योतयितुमुपमाङ्गीकृता न रूपकम् । गभीरबुद्धिना भारविणा द्योतितोऽयमर्थ उत्तानमनसा माघेन स्फुटीकृतः— "षड्गुणाः शक्तयस्तिस्रः सिद्धयश्चोदयास्त्रयः । ग्रन्थानधीत्य व्याहर्तुमिति दुर्मेधसोऽप्यलम् ॥" इति ।

१. 'ति तत्रा', २. 'पदद' ग. पाठः

कस्तर्हास्मिन् वचसि विस्मयहेतुर्गुण इति तत्राह—स तु तत्रेत्यादि। तत्र स तु विशेषदुर्लभः, यः सत्कृत्य वर्त्मोपन्यस्यति। तत्रेति तच्छब्देन सामान्यरूपः प्रकृतो नयः परामृश्यते 'यतश्च निर्धारणम्' (२.३.४१) इति। तुशब्दो विशेषद्योतकः। सामान्यविषयाभ्यां विशेषाकांक्षिभ्यां तच्छब्दाभ्यां कर्त्रपेक्षिण्योपन्यासक्रियया च नयविशेष इति तदुचितः शब्द आक्षिप्यते। तेन तत्र नयसामान्ये स नयविशेषस्तु दुर्लभ इत्यन्वयः सिध्यति। कृत्यस्य सन्धिविग्रहादेर्वर्त्म मार्गमुपन्यस्यति समीपे निक्षिपति स्फुटतरं करोतीत्यर्थः। अपादानदेशादि प्राप्यदेशान्तं पदविक्षेपस्थानं प्रसिद्धं वर्त्म। सन्धिविग्रहादेरचेतनस्यामूर्तस्य तत्र सम्भवतीति प्रवृत्तिप्रारम्भनिमित्तत्वे सति प्राप्तिसाधनत्वादिभिः साधारणैर्गुणैर्वर्त्मशब्देनोपायो लक्ष्यते चक्षुर्विषयस्य वर्त्मन इव मनोविषयस्योपायस्य स्फुटतरत्वं द्योतयितुम्। उपायविशेष एव वर्त्मशब्देन लक्ष्यते नोपायसामान्यम्। प्रवृत्तिप्रारम्भप्रयोजकत्वादयो लक्षणाहेतवः साधारणगुणा उपायविशेषस्यैव सम्भवन्ति नोपायसामान्यस्य। अन्वयव्यतिरेकाभ्यां निश्चितफलं सन्धिविग्रहादेः कृत्यस्योपायविशेषं यः प्रदर्शयतीत्यर्थः। सदिति कृत्यवर्त्मविशेषणम्। प्रशस्यमित्यर्थः। दोषरहितं गुणान्वितं प्रशस्यम्। लघुतरोपायान्तरसद्भावविलम्बितफलत्वस्वल्पफलत्वादय उपायस्य दोषाः, तैर्दोषैर्वियुक्तं गुणैर्युक्तं च सदित्यर्थः। अथवा सदिति वर्तमानमुच्यते, तदा तदपेक्षितं द्वित्रिक्षणमवस्थायि अन्वयव्यतिरेकासहमित्यर्थः। विशेषदुर्लभ इति, भेदप्रकर्षार्थो विशेषशब्दः, अत्र तु भृशार्थः, भृशदुर्लभः अतिकृच्छ्रलभ्य इत्यर्थः। अथवा सजातीयेषूपायान्तरेषु अविद्यमाना गुणगणा विशेषशब्देन विवक्ष्यन्ते। विशेषैर्दुर्लभो विशेषदुर्लभः। हेतौ तृतीया। 'कर्तृकरणे कृता बहुलम्' (२. १ ३२) इति समासः। कृत्यवर्त्मोपन्यासे करणभूतस्य नयस्य कर्तृतोक्त्या कर्तुः करणान्तरपरिवृत्त्यसहत्वं द्योत्यते। नयविशेषस्यान्यदुर्लभतोक्तिस्तस्य द्रौपदीवचनविषयतायां पर्यवस्यति। अस्यां दशायामस्मिन् विषय एतत्प्रयोजनोऽयमुपायोऽनेनैव प्रयोक्तव्य इति तत्तदुपायविशेषपर्यवसायित्वादस्या वचो विस्मयहेतुः, न नयसामान्योक्तिमात्रेणेति तात्पर्यार्थः॥ ३॥

द्योतितान् प्रियवचनस्य गुणान् विविच्य दर्शयति — परिणामसुख इत्यादिना।

१. 'ह तत्र स', २. 'षणाकां', ३. 'स्यास्फु' क. पाठः,

परिणामसुखे गरीयसि
व्यथकेऽस्मिन् वचसि क्षतौजसाम् ।
अतिवीर्यवतीव भेषजे
बहुरल्पीयसि दृश्यते गुणः ॥ ४ ॥

अस्मिन् वचसि बहुर्गुणो दृश्यते । गुणप्रकारबहुत्वापेक्षया बहुशब्दः। एकप्रयोजनपर्यवसायित्वेनैकवचनम् । दृश्यत इति, स्फुटतरं प्रतीयत इत्यर्थः । अल्पीयसि अल्पतरे । बहुगुणदर्शनोक्त्या पूर्वोक्तं वचनस्य दुर्वचत्वं साध्यते । अल्पतरस्य बहुगुणाधारत्वं कथमिति तत्राह — गरीयसीति । अतिगम्भीरे ध्वनिमत्तरे, बहुतरार्थद्योतनसमर्थ इत्यर्थः । परिणामसुख इति । परिणामे उदर्के सुखयतीति परिणामसुखम् । परिणामेन फलेन स्वर्गादिना सुखयतीति वा, तस्मिन् । लोकान्तरसुखहेतुविशिष्टधर्मप्रतिपादकमिदं वच इति भावः । क्षतौजसां व्यथक इति । क्षतं हिंसितमोजो बलं यैस्ते क्षतौजसः शत्रवः छद्मकृतेन परिभवेनास्मद्बलवीर्ययोरकीर्त्तिमयीं क्षतिं कुर्वन्तः शकुनिसुयोधनादयः, तेषां व्यथके व्यथाकारिणि । एतद्वचःप्रतिपाद्यस्यास्मद्विक्रमस्य प्रारम्भ एव द्विषन्तो व्यथन्त इति तेषां वधो जयो वा सुकर इति भावः । परिभूतानां तेजस्विनां द्विषदुच्छेदः सुखमिति द्विषदुच्छेदोपायक्रमप्रतिपादकतया सुखसाधनमिदं वच इति क्षतौजसां व्यथक इत्यनेन द्योत्यते । अतिवीर्यवतीति । प्रशस्तप्रभूतवीर्यप्रतिपादक इत्यर्थः । उत्साहप्रकर्षो वीर्यं प्रशस्तं प्रभूतं वा वीर्यमतिवीर्यम् । साम्राज्यसाधकत्वं वीर्यस्य प्राशस्त्यं प्रभूतत्वं चेहाभिप्रेतम् । साम्राज्यप्राप्त्युपायवीर्यप्रतिपादकमिदं वचोऽर्थसाधकमिति भाव इति त्रिवर्गानुगुणत्वं वचसोऽभिप्रेत्य बहुर्गुणोऽस्मिन् वचसि दृश्यत इत्युक्तम् । अथवा समयदूषणविधायितया द्रौपदीवाक्यस्य धर्मविरोधमाशङ्क्यैवमुक्तम् । एकः समयभङ्गप्रतिपादनदोषो महति गुणनिचये निमज्जतीति भावः । विग्रहप्रतिपादकतया पुरुषक्षयधनव्ययप्रयोजकमिदं वचो दुःखहेतुः स्यादिति तत्राह — परिणामसुख इति । यद्यपीदं वचनमादौ क्षयव्ययप्रयोजकतया दुःखशङ्कादायि स्यात्, तथापि साम्राज्यप्राप्त्युपायप्रयोजकतया परिणामे सुखसाधकमित्यर्थः । ननु विक्रमस्यानियत[illegible]त्वात् सहसा तत्कर्तव्यताप्र-

तिपादकेन वचसा कृत्यनिर्णयो न स्यादिति तत्राह — क्षतौजसां व्यथक इति । वैक्लव्यशङ्कासादितमनोबलानां भयचलनकारिणीत्यर्थः । विक्रमप्रतिपादकं वचनं निशम्य वीरा न व्यथन्ते । प्रत्युत हृष्यन्त्येवेति भावः । विक्रमप्रतिपादकवाक्यश्रवणे भवादृशानां वीराणां कामं हर्षो भवतु, तथापि प्रशस्तवीर्याणां भीष्मादीनां निवारणोपायप्रतिनिरूपकाणां न भवेदिति युधिष्ठिरस्य शङ्कायामाह — अतिवीर्यवतीति । अतिक्रान्ता वीर्यवन्तो येन तदतिवीर्यवत् तस्मिन् । वीर्यवत्तरधनञ्जयादिशक्तिप्रतापप्रकाशनेन वीर्यवतो भीष्मादीनधःकुर्वतीत्यर्थः । सपत्नोच्छेदसाम्राज्यलाभक्षत्रधर्मादयः प्रशंसाहेतवो बहवो गुणा अस्मिन् वचसि दृश्यन्त इति कितवकल्पितसमयभङ्गोपपादनं न दोषावहमिति भावः । अथवा गुणशब्दः सन्ध्यादिवाची । न विग्रह एवैको गुणोऽस्मिन् वचसि प्रतिपाद्यते, अन्येऽपि गुणाः सन्ध्यादयो यथोचितं प्रतिपाद्यतया प्रकटं प्रतीयन्त इत्याह — अस्मिन् वचसि बहुगुणो दृश्यते इति । परिणामसुख इत्यनेन सन्धिर्द्योत्यते । विग्रहप्रतिपादकमपीदं वचनं स्वप्रतिपाद्यविग्रहफले प्रकृतिप्रजाभूपालसन्ध्यनुबन्धिनि दुरात्मनां द्विषतामुच्छेदे परिणामे सुखं न विग्रहमात्रपर्यवसितमिति भावः । क्षतौजसां व्यथक इति द्यूतनिकृतिसादितानां मन्दौजसां द्विषतां दारुणविग्रहद्वारेण व्यथाकारिणीत्यर्थः । विग्रहप्रतिपादके वचसि विग्रहाविनाभूते यानासने च व्यज्येते इत्याभिप्रेत्य बहुगुण इत्युक्तम् । विग्रहादीन् गुणान् साम्राज्यसिद्ध्यनुगुणतया प्रत्याययितुम् । प्रशस्तं वीर्यं सामर्थ्यमस्यास्तीत्यतिवीर्यवत् तस्मिन् । भवतापि श्रुतमिदानीमिदं वचः, तत् किं मया तुभ्यमस्य गुणवत्त्वं ज्ञाप्यत इत्यभिप्रेत्यास्मिन्निति द्रौपदीवचनस्यापरोक्षतां द्योतयति । कथमल्पीयसो बहुगुणत्वं कथञ्चन महत्तरप्रयोजनपर्यवसायित्वमिति तत्राह — भेषज इवेति । भिषग्भिरौषधयोगेन विपक्त्रिमं घृतरसायनगुलिकादि भेषजमुच्यते नौषधमात्रम् । दृष्टान्तेऽपि विशेषणानि योजनीयानि । परिणामसुख इति । तिक्तकषायादिरसतयोपयोगसमये दुःखकरेऽपि परिणामे पाकपर्याप्तौ धातुसाम्यसम्पादनेन बलबुद्धिविवर्धनेन च सुखकर इत्यर्थः । गरीयसीति मात्रानियमं विना यथेष्टमुपयोगे दुर्जरतर इत्यर्थः । क्षतौजसां व्यथकं इति क्षुत्पिपासादि-

---

१. 'कमिदं', २. 'कमफ' क. पाठः. ३. 'च्छ', ४. 'के क्षु' ख. पाठः.

सादितसत्त्वबलानामुपयोगप्रारम्भे क्षुत्पिपासादिवर्धनेन भयचलनकर इत्यर्थः। अतिवीर्यवतीति । पर्याप्तमारोग्यं जनयितुं प्रशस्तशक्तियुक्त इत्यर्थः । अल्पीयसीति प्रस्थमात्रे काकणिकामात्रे वेत्यर्थः । एतदुक्तं भवति — दुस्सहतया दुर्जरतया दोषकोपतया च प्रारम्भे दुःखकरमपि भेषजं यथा स्वल्पतरमेव समग्रारोग्यसम्पादनेन परिणामे सुखदं भवति तथैवेदं वचोऽपि विग्रहवैरानुबन्धप्रतिपादकतया दारुणारम्भमपि समग्रसाम्राज्यप्रयोजकतया परिणामे सुखदमेवेति । किञ्च कविरपि श्रोतृजनप्रीतिप्रत्ययसम्पादनाय स्वकाव्यस्य गुणभूमानमनेनैव श्लोकेनानुस्वानद्वारेण द्योतयति । अस्मिन् वचसि वाक्यसमुदायरूपे प्रबन्धे बहुर्बहुत्वसंख्यासमवेतः काव्याचार्यैः प्रकाशितः श्लेषादिगुणो दृश्यते । बहुशब्देन बहुत्वसामान्यमुच्यते । त्रिचतुरादिशब्दैस्तु तद्व्यक्तय इति न बहुशब्दस्य बहुवचननियमः । तथैकत्वसामान्यवाचिन एकशब्दस्य नैकवचननियमः । प्रयोगानुसन्धानगम्या न तर्कमात्रप्रत्याय्या शब्दशक्तिः । परिणामसुख इत्यनेन परिपाकरम्यतारूपः प्रौढिसंज्ञो गुणो लक्ष्यते । गरीयसीति गाम्भीर्यं स्फुटं प्रतीयते । क्षतौजसां व्यथक इत्यशक्त्या अनिर्व्यूढौजोगुणानामन्यकविवचसां व्यथके पारिभावक इत्यर्थः । वर्णानां पदानां च गाढत्वमोजः तदन्वितमिदं वच इति भावः । अतिवीर्यवतीति । वाच्यवचने व्यङ्ग्यव्यञ्जने च पर्याप्तशक्तावित्यर्थः । तेन प्रसादो गुणो लक्ष्यते । अन्तःकरणार्द्रीकरणसामर्थ्यं च वीर्यशब्देन विवक्षितमित्याह्लादकत्वरूपमाधुर्यमप्यनेन ध्वन्यते । श्लेषादयः शेषा गुणा अस्मिन्नित्यभिनयेन व्यज्यन्ते । व्यङ्ग्यार्थानां महीयस्त्वमपेक्ष्य वचसोऽल्पतरत्वमुक्तं न शब्दन्यूनतयेत्यलं बहुना ॥

एवं प्रशंसया प्रियावचनस्यादरणीयतायां द्योतितायामनाविर्भूततदादरस्य महामतेर्महाराजस्याभिप्रायमभिव्यङ्क्तुं तद्वाच आदरणीयतां साक्षादर्थयति — इयमित्यादिना ।

इयमिष्टगुणाय रोचतां
रुचिरार्था भवतेऽपि भारती ।
ननु वक्तृविशेषनिःस्पृहा
गुणगृह्या वचने विपश्चितः ॥ ५ ॥

*. 'न्य' घ. पाठः.

इयं भारती भवतेऽपि रोचताम् । रोचतामिति रुचिं करोत्वित्यर्थः । 'रुदिर् अश्रुविमोचने', 'जीव प्राणधारणे' इत्यादिवद् धात्वर्थनिगीर्णकर्मत्वादकर्मको रुचिधातुः । इयं भारती अस्माकं रुचिं जनयतीत्येतावता न प्रवृत्तिपर्यवसायिनी । तस्मात् प्रयोजनानुबन्धिपर्याप्तप्रवृत्तिकरीं भवतोऽपि रुचिं जनयत्विति भावः । 'रुच्यर्थानां प्रीयमाणः' (१. ४. ३३) इति सम्प्रदानसंज्ञाविधानेन भवत इति चतुर्थी । अपिशब्दः समुच्चयार्थः । एकस्यां क्रियायां गुणे वा द्वयोर्बहूनां वा कारकत्वेन संबन्धित्वेन वा समावेशः समुच्चयार्थः । येषां यावतां क्रियायां कारकत्वेन समुच्चयो विवक्षितः तेष्वेकस्य कारकत्वाभावे सा क्रिया न पुष्कला । सा यथा द्वादशानामादित्यानां संवत्सरसम्पादनक्रियायां कारकत्वेन समुच्चये विवक्षिते तेष्वेकस्य कारकत्वाभावे सा विफलैव । अत्र च द्रौपदीवचनकर्तृकायां रुचिक्रियायां पाण्डवानां सर्वेषां सम्प्रदानत्वेन समुच्चयोऽभिप्रेतः । तत्र युधिष्ठिरस्यान्यस्य वैकस्य सम्प्रदानत्वाभावे रुचिक्रिया न परिपूर्णा । भीमादीनां तु रुचिक्रियां प्रति सम्प्रदानत्वं सिद्धमिति 'यावदप्राप्तं तावद् विधीयत' इति न्यायादपिशब्दः समुच्चयद्योतकः साध्य युधिष्ठिरस्य सम्प्रदानत्वं लोट्प्रत्ययार्थेन योजयति न भीमादीनामित्यलमतिप्रसङ्गेन । शास्त्रसंस्कृता वाग् भारतीति प्रसिद्धा न वाङ्मात्रम् । भारत्या रुच्यतायां हेतुद्वयमाह—इष्टगुणाय रुचिरार्थेति । इष्टाः प्रिया गुणाः यस्य स इष्टगुणः तस्मै । गुणविदामेव गुणा इष्टा भवन्तीति । इष्टगुणायेत्यनेनैव गुणज्ञायेत्यपि सिध्यति । रुचिराः शोभना निर्दोषा गुणान्विताश्चार्था अभिधेयाः प्रयोजनानि वा यस्यां सा रुचिरार्था । इयमित्यनुभूयमानप्रसादमाधुर्यगाम्भीर्यादिगुणेत्यर्थः । भारतीत्यनुस्वानमुखेन भरतवंशोचितेति द्योत्यते । रुचिरार्थेयं भारतीष्टगुणाय भवते रोचताम् । इष्टगुणो गुणज्ञो भवान् गुणान्वितामिमामाद्रियतामिति भावः । स्त्रीवक्तृके वचसि गुणान्वयोऽपि घुणक्षताक्षरसम इति स्त्रीवाक्यं सहसा न कृत्यनिर्णायकमिति शङ्कामुत्तरार्धेन परिहरति—विपश्चितो वचने वक्तृविशेषनिस्स्पृहा ननु । नन्विति, निपातः प्रश्ने निश्चये च वर्तते । उभयमत्र संभवति । गुणदोषस्वरूपव्यक्त्यधिष्ठानतया वचनं वक्तृविशेषस्याश्रयो भवतीति वचन इति सप्तमी । वक्तुर्विशेषो वक्तृविशेषः व्यक्तिर्यावृत्तिर्वा । निरस्ता स्पृहा यैस्ते निःस्पृहाः वक्तृविशेषे निःस्पृहा वक्तृविशेषनिःस्पृहाः ।

१. 'वागस्मा' क. पाठः। २. 'वे' ख. पाठः। ३. 'व' क. पाठः

यद्विषया स्पृहौत्सर्गिकी तद्विषय एवापवादरूपः तन्निरासोऽपि युक्त इति स्पृहाविषयो वक्तृविशेषः स्पृहानिरासस्यापि विषय एवेति वक्तृविशेष इति सप्तमी विषयरूपेऽधिकरणे वर्तते, शौण्डादेराकृतिगणत्वात्। 'सप्तमी शौण्डैः' (२.१. ४०) इति समासः। अथवा वक्तृविशेषान्निरस्ता स्पृहा यैस्ते वक्तृविशेषनिःस्पृहाः, 'पञ्चमी भयेन' (२. १. ३७) इत्यत्र पञ्चमीति योगविभागेन समासः। अथवा वचनसमवेता सत्ता क्रिया विपश्चित्कर्तृकायाः स्पृहानिरासक्रियाया लक्षणत्वेन विवक्षितेति 'यस्य च भावेन भावलक्षणम्' (२. ३. ३७) इति वचन इति सप्तमी। वचने सति विपश्चितो वक्तृविशेषनिःस्पृहा इत्यर्थः। विपश्चितः पण्डिताः गुणदोषप्रयोजकविद इत्यर्थः। वचनगतैर्गुणैर्दोषैश्च वक्तॄणां गुणदोषाश्च निश्चीयन्ते न स्त्रीत्वपुंस्त्वादिभिर्विशेषैरिति वचनस्य गुणवत्त्वे सत्ययं चेद् वक्तेदं वचः प्रमाणम् अयं चेन्नेति वक्तृविशेषं नापेक्षन्तो नोपेक्षन्ते चेतिभावः। अत्र हेतुमाह—गुणगृह्या इति। गुणपक्षपातिन इत्यर्थः। 'पदास्वैरिबाह्यापक्ष्येषु च' (३. १. ११९) इति पक्ष्येऽभिधेये ग्रहेः क्यप्प्रत्ययः॥ ५॥

एवं प्रियावचनस्य रुच्यतायां साक्षादुपपादितायामपि महाराजं तत्रानभिव्यक्तरुचिमभिव्यक्तौदासीन्यं विपर्ययज्ञानगृहीतं निश्चित्य सप्रशंसोपालम्भखेदमाह—चतसृष्वपीत्यादिना।

चतसृष्वपि ते विवेकिनी
नृप! विद्यासु निरूढिमागता।
कथमेत्य मतिर्विपर्ययं
करिणी पङ्कमिवावसीदति॥ ६॥

विपर्ययमेत्य कथं ते मतिरवसीदति। विपर्ययमन्यथाज्ञानम्। एत्यागत्याभिमुखं गत्वा, संशयानध्यवसायादिव्यवसायं विना प्राप्येत्यर्थः। कथं केन प्रकारेण। ते मतिः तव मननसमर्था बुद्धिः। अवसीदति

---

१. 'न्वयः। वि' ब. पाठः. २. 'यानव्य' [illegible] पाठः.

अवपत्य ताम्यति । केनचिदपि प्रकारेणावसत्तुं नार्हतीति भावः । अवसादा- नर्हतायां हेतुमाह—नृप ! विद्यासु निरूढिमागतेति । विद्यासु वेदनसाधनेषु शास्त्रेषु । निरूढिं निर्वहणं पर्याप्तिं प्रसिद्धिं वा । आगता आवृत्यागता । वि- द्यानां पाठप्रवचनप्रयोगसमयेषु तदा तदा प्रत्यग्रेव प्रथितेत्यर्थः । कतिषु विद्यासु, चतसृषु । आन्वीक्षिकीत्रयीवार्तादण्डनीतयश्चतस्रो विद्याः । आत्मतत्त्वान्वी- क्षणसाधनं तर्कशास्त्रमान्वीक्षिकी । ऋग्यजुस्सामानि त्रयी । तेषां समाहारो- ऽथर्ववेद इति सोऽपि त्रयीशब्देनोक्त एव । वृत्तिसाधनं कृषिवाणिज्याद्यर्था- र्जनोपायप्रदर्शकं शास्त्रं वार्ता । दण्डोपायप्रयोजकमर्थरक्षणशास्त्रं दण्डनीतिः । अपिशब्दः समुच्चयद्योतकोऽनुक्ता धर्मशास्त्राद्या विद्याः समुच्चिनोति । न केवलं चतसृषु विद्यासु निरूढिमागता ते मतिः, अन्यास्वपि चतुर्दशसु विद्यासु निरूढि- मागतेत्यर्थः । सर्वशास्त्रसाधारणयुक्तिप्रमाणतत्त्वनिरूपणादान्वीक्षिकी तावद- वश्यमाश्रयणीया । स्वाध्यायस्य नित्यविधेयतया यज्ञादिधर्मस्य वेदैकप्रमाण- तया चोपनीतैस्त्रैवर्णिकैस्त्रयी तु सादरं सनियमं समाम्नातव्या । अर्थं विना कस्यापि वृत्तिरेव न भवति, किं पुनः प्रवृत्तिरित्यर्थार्जनोपायविशेषप्रकाशिनी वार्ता च सर्वैरादरणीया । दण्डप्रयोगो नृपस्य विशेषधर्मः । स चौचित्येन विधी- यमान एवाभ्युदयहेतुरन्यथा प्रत्युतेति दण्डप्रयोगौचित्यं प्रदर्शयन्ती दण्ड- नीतिर्नृपेणावश्यमध्येतव्येति चतसृणां विद्यानामावश्यकत्वात् साक्षादुक्तिः । अन्यासामपिशब्देन द्योतनम् । "विद्यासु विद्वानिव सोऽभिरेमे पत्नीषु राजा तिसृषूत्तमासु" इति भट्टिकाव्ये वार्ताया दण्डनीतावन्तर्भावमभिप्रेत्य तिस्रो विद्या उक्ता इत्यविरोधः । विद्यासु निष्णातापि मतिर्विवेकसहकृतैवोचितकृत्यप्रयो- जिकेति विवेकसाहित्यं मतेरन्तरङ्गमिति स विवेकश्च तव मतेः सततमस्ती- त्याह — विवेकिनीति । विद्यानैपुणं विवेकसाहित्यं त्वदीयत्वं चेति मतेः प्रकारैर्विपर्ययाप्राप्तिहेतवस्ते समस्तास्तव मतेः सन्तीति कुतोऽस्या विपर्य- यसंभावनेति भावः । मतिर्विपर्ययं प्राप्तेति कथं ज्ञायत इति तत्राह[3] — नृपेति । हे नृप! हे नरपाल ! । नृपस्य मनुष्यादिपालनं धर्मो, न जपादिः । जपादिस्तु

---

१. 'त्यार्जं', २. 'राद् वि' घ. पाठः. ३. 'दिः । अधिकृतस्य क्षत्रियस्य क्षितिरक्षणं धर्मो, न जपादिः' क पाठः.

ब्राह्मणानां धर्मः । त्वयि क्षत्रधर्मादर्शनं ब्राह्मणधर्मदर्शनं च तत्कारणं तव मतेर्विपर्ययज्ञानमनुमापयतीति भावः । युधिष्ठिरमतिरन्यैरनुत्तार्या, विपर्ययप्राप्तिर्दुरन्ततरा[1] चेति करिणीपङ्कदृष्टान्तेन द्योत्यते । स्थले गर्ते वा पतितः स्वयमुत्थातुं प्रभवति, न पङ्कपतितः । पङ्कपतितोऽपि गौर्मृगो वा बलवता पुरुषेणोत्तार्यते । करिणी तु पङ्कपतिता केनोत्तारयितुं शक्येति भावः । सदौस्स्थ्यायाः करिण्यास्तिर्यग्योनितया सद्य एव वैवश्यं भवति, युधिष्ठिरमतेस्तु सत्त्वोत्तरतया क्रमेण । पङ्कादुत्तारो बहुतरप्रयत्नसाध्यः, विपर्ययादुत्तारस्तु मतिप्रसादमात्रसाध्य इति करिणीपङ्काभ्यां तन्मतिविपर्यययोर्व्यतिरेकं द्योतयितुमुपमा स्वीकृता, न रूपकम् । मादृशां[2] मतिर्विपर्ययान्धा भवादृशैर्विबोधनीयाः । भवन्मतिस्तु विपर्ययग्रस्ता केन विबोधयितुं शक्येति दार्ष्टान्तिकाभिप्रायः । पङ्कपतिता करिणी यथा बलवत्तमेन[3] करिणोत्तार्यते, तथैव विपर्ययपतिता तव मतिस्त्वया स्वायत्तमतिना विपश्चित्तमेनोत्तारयितुं शक्येति च करिणीदृष्टान्तेन द्योत्यते । प्रामादिकं मतेर्विपर्ययमवधूय प्रकृतिं प्राप्नुहीति तात्पर्यार्थः ॥ ६ ॥

मतिरवसीदतीति कुतो ज्ञायत इति तत्राह — विधुरमित्यादिना ।

> विधुरं किमतः परं परै-
> रवगीतां गमिते दशामिमाम् ।
> अवसीदति यत् सुरैरपि
> त्वयि सम्भावितवृत्ति पौरुषम् ॥ ७ ॥

त्वयि पौरुषमवसीदति यद् अतः परं किं विधुरम् । अतोऽन्यः कोऽवसादः । व्यधेस्ताडनार्थस्य कर्मकर्तरि कुरच्प्रत्यये सम्प्रसारणे पूर्वरूपे च कृते विधुरेति रूपम् । विधुरः स्वयमेव विद्धः[4] सुकरव्यधः, दैवोपहत इत्यर्थः । अथवा विहिता धूरवश्यकर्तव्या क्रिया यस्य स विधुरः । 'ऋक्पूरब्धूःपथामानक्षे'(५. ४. ७४) इति समासान्तप्रत्यये सति विधुरेति रूपम् । प्रकारद्वयेऽपि भावतद्वतोरभेदोपचाराद् विधुरत्ववाची विधुरशब्दः, यथा गुणवचनः शुक्लशब्दो गुणिनि वर्तते । अनभिव्यक्तसत्त्वरजः सामान्यरूपं भाव-

१ दुरन्तरा' क ग पाठः. २. 'शानां म' क. घ. पाठः. ३. 'रेणक' क. घ. पाठः. ४ 'ख़ि' क. पाठः.

वस्त्वभिदधतां शब्दानां नपुंसकलिङ्गता प्रायेण प्रयोगेषु दृश्यते। विधुरमिति, दैवोपहतत्वमात्मोचितक्रियाराहित्यं चेत्यर्थः। अथवा विधुरविषमगहनादयः शब्दा व्यसनवाचिन इति विधुरशब्देन व्यसनमेवोच्यते। पौरुषं पुरुषकर्म नयविक्रमादि। त्वयि, त्वदाश्रयमित्यर्थः। स्वकालेऽदर्शनमेव पौरुषस्यावसादो, न सर्वदेति तदुचितं कालमाह — अवगीतां दशां परैर्गमित इति। अवगीतां निन्दिताम्। परैः सपत्नैः। गमिते प्रापिते। दशाया अवगीतत्वमभिनयेन दर्शयति — इमामिति। इमामनुभूयमानां राज्यभ्रंशवनवासादिरूपां भूशयनादिशोच्यक्लेशबहुलामित्यर्थः। ईदृशः परिभवो यदा भवति, तदा पराक्रम एव युक्तो न तूष्णीमासिकेत्यभिप्रायः। त्वयीत्यस्य विशेषणं गमित इति। तेन परिभूतेऽपि त्वयि पौरुषं स्थितमेव, त्वं तु तन्नाद्रियस इति द्योत्यते। कीदृशं पौरुषं, सुरैरपि सम्भावितवृत्ति। वृत्तिशब्दोऽन्तःकरणव्यापारे वर्तते। सम्भाविता बहुमता वृत्तिर्यस्य तत् सम्भावितवृत्ति। मनोवृत्तिपौरुषयोः कार्यकारणभावः सम्बन्धः। निर्दोषगुणवन्मनोवृत्तिनिर्वर्तितं पौरुषमित्यर्थात् सिध्यति। तेन तस्य फलान्वयनियमो द्योत्यते। कैः सम्भावितवृत्तीति तत्राह — सुरैरिति। दीप्तसत्त्ववृत्तिभिर्देवैरित्यर्थः। अपिशब्दो विरोधं द्योतयति। उन्नतमनोवृत्तीनां देवानां तुच्छास्वन्यमनोवृत्तिषु सम्भावना न सम्भवतीति तादृशमनोवृत्तयोऽपि देवास्त्वन्मनोवृत्तिं सम्भावयन्तीति सर्वाधिका तव मनोवृत्तिरित्यभिप्रायः। एतदुक्तं भवति — देवादिसंभावितमनोवृत्तिस्त्वमीदृशं परिभवं गतोऽपि विनयविक्रमादिपौरुषान् नाद्रियस इति यदतोऽन्यो बुद्ध्यवसादो व्यसनं वा नास्तीति॥ ७॥

ननु परिभवे सत्यपि तत्परिहारस्य शक्यतायामेव पराक्रमो युक्तः। द्विषतामुदये तु परिभवपरिहारो दुष्कर इति तेषां द्विषतामुदयो मर्षणीय एवेति युधिष्ठिरस्य मतमाशङ्क्य परिहरति — द्विषतामित्यादिना।

> द्विषतामुदयः सुमेधसा
> गुरुरस्वन्ततरस्तु मृष्यते।
> न महानपि भूतिमिच्छता
> फलसम्पत्प्रवणः परिक्षयः॥ ८॥

१ 'मुच्य' घ. पाठः

गुरुर्द्विषतामुदयः सुमेधसा मृष्यते। गुरुर्दुर्वहोऽनल्पः, चलयितुमशक्य इत्यर्थः। द्विषतां शत्रूणाम्, उच्छेद्यानामित्यर्थात् सिध्यति। उदय उच्छ्रूयः समृद्धिः। सुमेधसा प्रशस्यमेधेनेत्यर्थः। उपायापायादितत्त्वविवेचननिपुणा बुद्धिर्मेधाशब्देनोच्यते। तस्याः प्रशस्यत्वं फलपर्यवसायित्वम्। मृष्यते[1] सह्यते। उदयस्य गुरुत्वममर्ष[2]कनाभावद्योतनद्वारेण मर्षणीयत्वमुपस्थापयति। तस्यैव द्विषत्सम्बन्धित्वेनामर्षणीयता द्योत्यते। द्विषदुदयमात्रस्य मर्षणीयता विशेषद्योतकेन तुशब्देन व्यावर्त्यते। द्विषतामुदयविशेषो मृष्यते, नोदयमात्रमित्यर्थः। कीदृश उदयविशेषो मृष्यत इति तत्राह— अस्वन्ततर इति। शोभनोऽन्तः पर्यवसानं यस्य स स्वन्तः। अतिशयेन स्वन्तः स्वन्ततरः। तद्विपरीतोऽस्वन्ततरः। दुरन्त इत्यर्थः। क्रमवृद्धिरुदयस्य स्वन्तत्वम्। उदयानुबन्धिता स्वन्ततरता। क्रमापचयो दुरन्तत्वम्। अनर्थानुबन्धित्वं दुरन्ततरता। सुमेधसेत्युक्तं, न तरास्विनेति। तेन नयबलावलम्बेन, न विक्रमावलम्बेनेति प्रतीयते। मतिबलावलम्बेन क्षमावतापि दुरन्ततर एव द्विषतामुदयो मृष्यते, न दुरन्तोऽपि। कुतः स्वन्तः स्वन्ततरो वा। स्वन्ततरो द्विषदुदयः श्रुतः। तस्मान्न मर्षणीय इति भावः। ननु सर्वेऽपि द्विषदुदया मर्षणीया एव। तेषां तदानीमबाध्यत्वाविशेषादिति तत्राह— न महानित्यादि। महान् द्विषतां परिक्षयोऽपि फलसम्पत्प्रवणो न मृष्यते[3], नोदय एव। द्विषतामिति मृष्यत इति चात्रानुषज्यते। परितः सर्वतः क्षयः परिक्षयः। स्वाम्यमात्यजनपददुर्गकोशबलमित्रेष्ववस्थित इत्यर्थः। महान् प्रभूतः। स्वाम्यादिषु तत्र तत्र पुष्कल इत्यर्थः। क्षयस्यातिशयं द्योतयता परीत्युपसर्गेण महानिति विशेषणेन च द्विषतामतिशोच्यत्वादमर्षविषयासंभवो विभाव्यते। फलसम्पत्प्रवण इति। प्रयोजनसमृद्ध्यनुगुण इत्यर्थः। भूतिमिच्छतेति। भूतिमुदयम्, आत्मन इत्यर्थात् सिध्यति। इच्छता वाञ्छता, तात्पर्येण सम्पदर्थं यतमानेनेत्यर्थः। परमतमभ्युपगम्यैवमुक्तम्। बार्हस्पत्यानामात्मोदयः साक्षात्फलं, परज्यानिरानुषङ्गिकम्। औशनसानां तु परज्यानिः साक्षात्फलं, आत्मोदय आनुषङ्गिकम्। तत्र क्षमानयाभ्यामात्मोदयं चिकीर्षन्तो बार्हस्पत्या अपि

१. 'ते। उ' क. ग. घ. पाठः. २. 'र्षफलभावनान्तरीयद्यो' ख. घ. पाठः. ३. 'त तेनो' क. पाठः. ४. 'र्षणीयत्वासं' ५. 'त्युक्तम्' क. ग. घ. पाठः.

दुरन्ततरमेव द्विषदुदयं क्षमन्ते, न स्वन्ततरं स्वन्तं दुरन्तं वा । द्विषदुदय-मात्रममृष्यमाणाः पराक्रमेण परज्यानिं चिकीर्षन्त[1] औशनसास्तु किं पुनरिति परमताभ्युपगमेन द्योत्यते । द्विषदुदयस्तेजस्विनां स्वन्तो न सह्य इति तन्म-र्षणं बुद्धिप्रयत्नसाध्यम् । द्विषतां पारिक्षये तु[2] परिभवपरिहारार्थिना स्वाभा-विकं विक्रमव्यवसायमवधूय तन्मर्षणं च विवेकैकसाध्यमित्यभिप्रेत्य सुमेधसेति विशेषणं कृतम् । पूर्वमुदासीनानां सुहृदां पश्चात् स्वपक्षोच्छेदभयेन[3] स्वयं प्रवृ-त्तानामुत्साहातिशयेन दैवानुकूल्येन वा परिक्षयस्य फलसम्पत्प्रवणत्वम् । अस्व-न्ततरशब्दस्यार्थविवरणाय फलसम्पत्प्रवण इत्युक्तं, न तु स्वन्ततर इत्येव । फ-लप्रवणः स्वन्तः फलसंपत्प्रवणः स्वन्ततर इति च विभागोऽनेनैव द्योतितः । द्वि-षदुदयस्य स्वन्ततरत्वं चरोक्त्या प्रतीतम् । अधर्ममयत्वादविक्रमकृतत्वाच्च तस्य स्वन्ततमत्वं नास्तीत्यस्माभिरुत्साहपरैरुत्सादयितुं शक्य एव द्विषदुदय इत्य-भिप्रायः । 'नित्यमसिच् प्रजामेधयोः' (५. ४. १२२) इति बहुव्रीहौ नञ्दु-स्सुपूर्वान्मेधाशब्दात् समासान्तेऽसिच्प्रत्यये सुमेधसेति रूपम् ॥ ८ ॥

ननु धार्तराष्ट्रस्योदययुक्तस्याप्यधर्महेतुकेन सूक्ष्ममतिगम्येन क्षयेण योगोऽस्त्येव । अस्माकं तु पराक्रमशक्तिवैकल्यकरः परिक्षयः स्फुट एवेति परात्मक्षययोगनिरूपणे सम्प्रत्युपेक्षैव कर्तव्यतया प्रतिभाति, न पराक्रम इति शङ्कायामाह — अचिरेणेत्यादि ।

> अचिरेण परस्य भूयसीं
> विपरीतां विगणय्य चात्मनः ।
> क्षययुक्तिमुपेक्षते कृती
> कुरुते तत्प्रतिकारमन्यथा ॥ ९ ॥

कृती परस्य क्षययुक्तिमात्मनः क्षययुक्तिं च विगणय्य उपेक्षते । अचिरेणेति, आशुभाविनीमित्यर्थः । चिरेणेत्यनेन कालविलम्बो द्योत्यते । आचिरेणेति तद्विपर्ययः । क्षययुक्तेर्विशेषणमेतत् । भूयसीं बहुतराम् । क्ष-ययुक्तिम् अव्यवहितं क्षयेण सम्बन्धम् । स्वामिक्षयं, न मित्रादिक्षयमात्रमिति

१. 'कुर्वन्त' ख. [illegible] २. '[illegible] तत्परि' ख. ग. पाठः. ३. '[illegible]' क. घ. पाठः.

लभ्यते । विगणय्य विविधं निरूप्य । परस्य शत्रोः । परस्य क्षययुक्तिमाशुभाविनीं बहुतरां, तद्विपरीतां चिरेण भाविनीमल्पतरामात्मनः क्षययुक्तिं च निरूप्य । कृती उचितानुचितविवेचननिपुणः क्रियाकुशलश्च । उपेक्षते प्रवृत्त्यनारम्भरूपमौदासीन्यमालम्बत इत्यर्थः । अन्यथा तत्प्रतिकारं कुरुते । कृतीति अत्रानुषज्यते । अन्यथेति उक्तप्रकारादन्येन प्रकारेण युक्तां परस्यात्मनश्च क्षययुक्तिं विगणय्येत्यर्थः । परस्य क्षययुक्तिं चिरेण भाविनीमल्पतरामात्मनः क्षययुक्तिमाशुभाविनीं महीयसीं विगणय्य विविच्यावधार्येत्ययमर्थः प्रकरणसहायेनान्यथेत्यनेन प्रत्याय्यते । तत्प्रतिकारं तस्याः क्षययुक्तेः प्रतिकारं प्रतिक्रियाम् । कुरुते आत्मप्रयोजनान्वयितया समाचरतीत्यर्थः । चिरभाविन्या अल्पतरायाः परक्षययुक्तेः प्रतिकारः तस्याः शीघ्रं भूयस्तया निर्वर्तनम्, आशुभाविन्या भूयस्याः आत्मक्षययुक्तेस्तस्याः सर्वात्मना निरोध इत्युचितज्ञैर्विभागोऽवगन्तव्यः । एतदुक्तं भवति — अधर्महेतुकः सुयोधनस्य क्षयः कालान्तरे देहान्तरे वा भवेत्, क्षितिरक्षणादिभिः प्रायश्चित्तैरल्पीयान् वा भविष्यति । अस्माकं तु क्षयो वर्तमानः क्षितिरक्षणादिस्वधर्महान्या बन्धुमित्राद्युपेक्षया च महत्तरश्च भविष्यतीति परोदयात्मक्षययोः पुष्कलतायाः प्रागेवास्माभिः पराक्रमः कर्तव्य एवेति । प्रयत्नं विनापि साध्यस्य रिपुक्षयस्य सिद्धौ प्रवृत्तिर्नापेक्ष्यते, आत्मक्षये तु द्विषद्विघातार्थमुद्यमशक्तिर्नोदेतीति परात्मक्षयौ प्रवृत्त्यनारम्भहेतू शङ्किताविति परात्मक्षययोर्विभागो विवेकिभिरवगन्तव्यः ॥ ९ ॥

अधर्महेतुको भावी सुयोधनस्य क्षयः कामं रक्षणादिभिर्धर्मविशेषैरल्पीयान् भवेद्, नैव वा भवेत् । अस्माकं तु सैन्यसमूहनसाधनस्य धनस्य क्षय एवोपलभ्यते, न तु प्रभुशक्तिक्षयो मित्रादिक्षयो वा । तस्मात् प्रभुशक्तियुक्तैः सुहृत्सहायैरस्माभिः समयावसाने विक्रमो विधातुं शक्य इति युधिष्ठिरस्य शङ्कायामाह — अनुपालयतामित्यादिना ।

> अनुपालयतामुदेष्यतीं
> प्रभुशक्तिं द्विषतामनीहया ।
> अपयान्त्यचिरान्महीभुजां
> जननिर्वादभयादिव श्रियः ॥ १० ॥

द्विषतां प्रभुशक्तिमनुपालयतां महीभुजां श्रियोऽचिरादपयान्ति। द्विषतां द्वेषानुबन्धिनां शत्रूणाम्, उच्छेद्यानामिति लभ्यते। प्रभुशक्तिमिति। प्रशब्द ऐश्वर्यद्योतकः। भवतिः सत्तायां तदुपलक्षिते जन्मनि च वर्तते। विपूर्वाद् भवतेः 'विप्रसंभ्यो ड्वसंज्ञायाम्' (३. २. १८०) इति कर्तरि डुप्रत्ययः। ईश्वर एव जातो जन्मसिद्धैश्वर्यः प्रभुशब्देन साक्षादुच्यते, न तु सहाययोगेन प्रयत्नेन वा पश्चात् प्राप्तैश्वर्यः। प्रभोः शक्तिः सामर्थ्यं प्रभुशक्तिः, ताम्। शक्तेरयोगोऽन्ययोगश्च षष्ठ्या व्यवच्छिद्यते। तेन सार्वभौमान्वयजातेनैव सा शक्तिर्लब्धुं शक्यते, नान्येनेति ध्वन्यते। अनुपालयताम् अनुसृत्य रक्षतामित्यर्थः। समृद्धिरूपमनुपालनक्रियाफलं द्विषत्संबन्धि, न कर्तृसंबन्धीत्यनुपालयतामिति परस्मैपदेन द्योत्यते। महीभुजामिति, पृथिवीपालानां राज्ञामित्यर्थः। श्रियः समृद्धियोनयः शक्तयः। अचिरादविलम्बकालेन कतिपयैर्दिवसैर्मासैर्वेत्यर्थः। अपयान्ति दूरतरं गच्छन्ति। पुनः प्रत्याप्तिर्यथा दुष्करा, तथा च्यवन्त इत्यर्थः। ननु स्वप्रभुशक्तेः समुच्छ्रयमिच्छन्तो महीभुजः कथं तद्विरोधिनीं द्विषतां प्रभुशक्तिमनुपालयेयुरिति तत्राह — अनीहयेति। ईहा चेष्टा इच्छा च, तयोरभावेन। रिपुश्रीविरोधिन्याः पराक्रमादिप्रवृत्तेरनारम्भेण तादृश्या इच्छाया अनुदयेन चेत्यर्थः। द्विषत्प्रभुत्वभङ्गायोद्यममकुर्वताम् अनिच्छतां च राज्ञां नैका हस्त्यश्वादिसमृद्धिहेतुः श्रीरपयाति, गुणबलविक्रमधर्मादिसमृद्धिहेतवोऽन्या अपि श्रियोऽपयान्तीति श्रिय इति बहुवचनेन द्योत्यते। उदेष्यतीमिति। नोदितामुद्यतीं वा। स्वल्पयैव प्रवृत्त्या निवार्यामित्यर्थः। जननिर्वादभयादिवेति। जनस्य लोकस्य निर्वादो न्यक्कृत्य वाद उपक्रोशः, तस्माद् भयं जननिर्वादभयं, तस्मात्। अचेतनासु श्रीष्वविद्यमानं जननिर्वादभयमुत्प्रेक्ष्यारोपितं व्यञ्जयन्निवशब्दो द्विषत्प्रभुशक्तिविघातायोद्यममकुर्वतां राज्ञां तदनुबन्धिनां च वचनीयतां व्यञ्जयति। उत्थानशीलैकलभ्याः समस्तमान्याः श्रियोऽप्यलसेषु राजसु[2] क्षणमपि तिष्ठन्ति चेदपवदनीया एव, न जातु स्तुत्या इत्यभिप्रायः। कीर्तियोनयः श्रियः, प्रतिश्रुतं समयमनुपालयतामस्माकं कीर्तिः प्रथत एव, तद्विरोधिनां चाकीर्तिरेव भवेदिति युधिष्ठिरस्य शङ्का जननिर्वादभयादित्यनेन निरस्यते।

१. 'भ्याः मा' क. ग. घ. पाठः. २. 'र्थः। की' ख. पाठः.

तदानीमस्माकं तादृशपरिभवमर्षणं सुयोधनस्य प्रभुशक्तिरुदेष्यतीति प्रतीतिमजनयत् । पुनरिदानीं तद्विघातायानुद्यमस्तत्प्रभुशक्तेरुपचयमस्मत्प्रभुशक्तेरपचयं च करोतीति तात्पर्यार्थः ॥ १० ॥

दैवदोषेण पौरुषदोषेण वा प्रभुशक्त्यपचयहेतुरस्माकं क्षययोगोऽभूत् । तदिदानीमपेतसुहृत्सहायबलैरीदृगवस्थैरस्माभिः प्रभुशक्तेः प्रत्यापत्तिः कथं सुकरेति तत्राह — क्षययुक्तमित्यादि ।

क्षययुक्तमपि स्वभावजं
दधतं धाम शिवं समृद्धये ।
प्रणमन्त्यनपायमुत्थितं
प्रतिपच्चन्द्रमिव प्रजा नृपम् ॥ ११ ॥

क्षययुक्तमपि समृद्धय उत्थितं नृपं प्रजाः प्रणमन्ति । क्षययुक्तमित्यव्यवहितक्षयसम्बन्धमपाचितप्रभुशक्तिं, न तु क्षीणसाचिवादिमात्रसामर्थ्यमित्यर्थः । क्षययोगप्रजावन्द्यत्वयोरेकाश्रयत्वे विरोधमपिशब्दो द्योतयति । समृद्धये सन्ततमृद्धये सम्पदे साम्राज्यायेति लभ्यते । उत्थितमिति । उत्पूर्वस्तिष्ठतिरीहार्थे वर्तते । अनुबन्धिनी प्रवृत्तिरीहा, न प्रवृत्तिमात्रम् । विहितप्रवृत्तिप्रवाहमित्यर्थः । नृपं मनुष्यादिप्राणिपरिपालकम्, अनुरक्तजनमिति लभ्यते । प्रजाः पुरराज्यवनाश्रयाः पुत्रवत् पालिताः प्राणिन इत्यर्थः । प्रणमन्ति प्रसन्ना नमस्कुर्वन्ति । तेन प्रजानामनुराग आदरश्च द्योत्यते । अनपायमिति क्रियाविशेषणम् । अनपायमुत्थितमिति । आलस्यदीर्घसूत्रत्वादयः-प्रयोजनापगमहेतवो दोषा अपायाः । ते न विद्यन्तेऽस्यां क्रियायामित्युत्थानक्रिया अनपायमित्यनेन विशेष्यते । उत्थानस्य प्रयोजकमाह —- स्वभावजं शिवं धाम दधतमिति । क्षत्रजातिस्वभावजातमनौपाधिकं शिवं मङ्गलम् अनुपघातकं जगदभ्युदयदायि धाम तेजः परपरिभवशक्तिरूपं परपरिभवासहिष्णुत्वरूपं च । दधतं धारयन्तं पोषयन्तं च । अपिशब्देन द्योतितः क्षययोगकृतः प्रातिभासिकः प्रजावन्द्यत्वविरोधः स्वाभाविकतेजोधारणेनोत्थानेन च व्यावर्त्यते । ननु प्रत्यक्षप्रत्ययाः प्रजाः क्षीणं नृपमुपेक्षन्ते अभ्युदितं तु प्रणमन्तीति क्षययुक्तस्योत्थानवतोऽपि न तेजस्वितामात्रेण

प्रजावन्द्यत्वमिति शङ्कां दृष्टान्तेन परिहरति — प्रतिपच्चन्द्रमिवेति । प्रतिपद्-श्चन्द्रः, प्रतिपदि दृश्यमान इत्यर्थात् सिध्यति । अस्यां तिथौ चन्द्रः पूर्वावस्था-प्रतिकूलामवस्थामापद्यत इत्यर्थयोगेन प्रतिपच्छब्देन पक्षादिस्थितिरुच्यते । चन्द्रस्य क्षययुक्ततोक्त्या शुक्लपक्षादिरिति सिध्यति । 'चदि ह्लादने' इति पठिताद् धातोर्निष्पन्नश्चन्द्रशब्दः । दृष्टान्तेऽपि विशेषणानि योजनीयानि । दीप्तात्मता चन्द्रस्य स्वभावः । प्रकाशनशक्तिर्धाम । उन्नते गगने स्थितिरु-त्थानं न तूदयः । प्रतिपदि हि प्रतीच्यां चन्द्रो दृश्यते न प्राच्याम् । अनपा-यमुत्थितमिति, चन्द्रस्यापाये निरोधे हेतवो मेघा अपायशब्देन विवक्ष्यन्ते । विमुक्तमेघनिरोधं दिवि दीप्यमानमित्यर्थः । तेन चन्द्रस्य शारदत्वं द्यो-त्यते । यथैवौषधिपरिपोषजगत्प्रकाशाह्लादविधायिनश्चन्द्रस्य क्षयेण परिम्लाना-स्तस्याभ्युदयसमयं गणयन्त्यः प्रजाः पुनस्तमेव प्रत्यग्रोदयं प्रतिपदि प्रती-च्यां दृष्टमात्रं सगौरवानुरागकौतुकाः प्रीत्या नमस्कुर्वन्ति, तथैव तथाविधं नृपं तथाविधास्ता इति तात्पर्यार्थः । आह्लादकत्वादयोऽनुरागहेतवो गुणाश्चन्द्रे प्राचुर्येण दृश्यन्ते न तु भयहेतवः प्रतापादयः । समुदितास्ते द्वयेऽपि नृपे निरीक्ष्यन्त इति नृपस्य चन्द्राद् व्यतिरेकं द्योतयितुं चन्द्रसादृश्यमुक्तं न तु तद्भावरूपणं कृतम् । शास्त्रचक्षुष एव चन्द्रं प्राच्यामुदेष्यन्तमुद्यन्तमुदितं च पश्यन्ति, न मांसचक्षुषः । मांसचक्षुषस्तु मनुष्या विमुक्तमेघादिनिरोधं स्फुटतराकृतिं प्रतीच्यां पश्चाच्चन्द्रं पुरो निरीक्ष्यैव तस्योदयं प्रतियन्ति । एवं सूक्ष्मदर्शिनो मुनय एव सूक्ष्मं तवोदयं पश्यन्ति, न स्थूलदर्शिनो मनुष्याः । सर्वजनीनसगौरवप्रतीत्यायत्ता हि नृपस्य प्रभुशक्तिरिति स्वप्रभुशक्त्यभिव्य-क्तये स्वतेजः स्वोत्थानं स्वोदयं च प्रजानामभिव्यञ्जयेत्ययं चार्थश्चन्द्रदृष्टान्तेन द्योत्यते ॥ ११ ॥

ननु कोशदण्डाभ्यामेव प्रभुशक्तिरुदेति न त्वधृष्यताभिगम्यताहेतुगु-णान्वयमात्रेण । कोशदण्डौ च नयैकमूलौ प्रतिपादितौ । सोमनमस्कृतिरभ्यु-दयहेतुरित्याप्तोपदेशप्रत्ययेन चन्द्रं प्रजाः प्रणमन्ति, नृपं तु निग्रहानुग्रह-कारिण्या प्रभुशक्त्या । तस्मादपचितप्रभुशक्तिं क्षययुक्तं नृपं प्रजाः प्रणम-न्तीति न श्रद्धेयमिति नयेनैव क्रमेण प्रभुशक्तिं प्रकाश्य सहायादियोगेन सा-म्राज्यसम्पादनाय सपत्नोच्छेदाय वयमुत्सहेमहि न साहसेनेति युधिष्ठिरस्य शङ्कायामाह — प्रभवः खल्वित्यादिना ।

प्रभवः खलु कोशदण्डयोः
कृतपञ्चाङ्गविनिर्णयो नयः
स विधेयपदेषु दक्षतां
नियतिं लोक इवानुरुध्यते ॥ १२ ॥

नयः कोशदण्डयोः प्रभवः खलु । कोशशब्दो मणिहिरण्यादि-वित्तराशिसन्ताने वर्तते । दण्डशब्दो मौलादिषड्विधबलसमुदायसन्तान-विषयः । कोशशब्दस्य पूर्वनिपातेन कोशलाभायत्तो दण्डोपसंग्रह इति द्योत्यते । प्रभवशब्देन भवनप्रारम्भनिदानं प्रथमोपलब्धिस्थानमुच्यते ; यथा गङ्गादेर्हिमवदादि । नयस्य कोशदण्डप्रभवत्वे प्राकृतानां प्रतीतिरेव नास्ति, कुतः प्रसिद्धिरिति नयविदां विपश्चितां प्रसिद्धिं खलुशब्दो द्योत-यति । नयविदो विपश्चितो वृकोदरस्य वक्तृत्वेन च विपश्चितां प्रसिद्धि-रेवेयमिति निश्चीयते । नयशास्त्रं नयशास्त्रोपस्कृता मतिर्वेह नयशब्देन विव-क्ष्यते । कीदृशो नयः कोशदण्डप्रभव इति तत्राह — कृतपञ्चाङ्गविनि-र्णय इति । विविच्य निर्णयो विनिर्णयः । कृतः पञ्चानामङ्गानां विनिर्णयो येन स कृतपञ्चाङ्गविनिर्णयः । कर्मणामारम्भोपायः, देशकालविभागः, पुरुष-द्रव्यसम्पद्, विनिपातप्रतीकारः, कार्यसिद्धिरिति पञ्चाङ्गानि । अवयविनः कृत्य-निरूपणरूपस्य मन्त्रस्यावयवत्वादेषामङ्गत्वम् । तथाचोक्तं — "सर्वकार्यशरीरेषु मुक्त्वाङ्गस्कन्धपञ्चकम् । सौगतानामिवात्मान्यो नास्ति मन्त्रो मही-भृताम् ॥" अथवा फलपर्यवसायिन्याः पराक्रमादिप्रवृत्तेः शेषत्वादेषामङ्गत्वम् । सर्वथा पराक्रममूलस्य मन्त्रस्य पराक्रमस्य वाङ्गानामेषां विनिर्णयो नयेनैव क्रियत इति नय एव पराक्रमद्वारेण कोशदण्डप्रभव इति भावः । एवं युधिष्ठि-राभ्युपगतं नयस्य प्राधान्यं पूर्वार्धेनानूद्योत्तरार्धेनोपहन्तुमुपक्रमते — स विधे-यपदेषु दक्षतामनुरुध्यते इति । स इति तच्छब्देन प्रकृतो नयः परामृश्यते । विधेयस्य विधातुं योग्यस्य कर्मणः, पराक्रमस्येत्यर्थात् सिध्यति । पदेषु स्थानेष्वा-श्रयेषु । वीरपुरुषेष्वित्यर्थात्सिध्यति । दक्षतां विदग्धतां क्षिप्रतरास्खलितक्रिया-कौशलमनुरुध्यते अनुवर्तते । श्यन्विकरणी रुधिरनुदात्तेद् अनुपूर्वोऽनुवृ-त्तौ वर्तते । विधेयपदेषु दक्षतामिति । पराक्रमाश्रयपुरुषाधिकरणां दक्षतामि-

त्यर्थः। पराक्रमस्य कर्तव्यतातिशय आस्पदार्थेन पदशब्देन विधेयस्य पराक्रमस्य पुरुषेषु समवाय एव, न तु तैः सम्बन्धमात्रमिति द्योत्यते। तेन नित्यक्रियावत् पराक्रमस्यावश्यकर्तव्यता द्योत्यते। पदेष्विति सप्तम्या पराक्रमास्पदेषु पुरुषेषु दक्षताया नित्यस्थितिर्द्योत्यते। स नयो विधेयपदेषु सत्सु दक्षतामनुरुध्यत इति केचिद् योजयन्ति। विधेयस्य पराक्रमादेः कृत्यस्य पदानि स्थानानि स्वपरिभवपरापचयादीन्यवस्थान्तराणि विधेयपदानि, तेषु। तदा 'यस्य च भावेन भावलक्षणम्'(२. ३. ३७) इति सप्तमी। नयः कोशदण्डप्रभव इति पण्डितपरिषद्युद्घोष्यते। स पुनः कृत्यसमयेषु दक्षतामुत्साहशक्तिमनाश्रित्य स्वतन्त्रो न फलतीति तात्पर्यार्थः। कदाचिन्नयो दक्षतामनुवर्तते, कदाचिद् दक्षता नयमित्यनियमं दृष्टान्तेन निराकरोति—नियतिं लोक इवेति। विधिदैवादिशब्दवाच्या परमेश्वरस्य विश्वनियमशक्तिर्नियतिशब्देनोच्यते। लोकशब्दस्तु चेतनसमुदायविषयां चेतनाश्रयां प्रवृत्तिं लक्षयति। यथा चेतनानां पुरुषाणां प्रवृत्तिर्दैवमनुवर्तते तथा नयः पराक्रमशक्तिमनुवर्तत इत्यर्थः। कदाचिदपि दैवमनाश्रितपौरुषं न फलति। प्रतिकूलेन दैवेन पौरुषमेव प्रतिहन्यते, न पौरुषेण दैवम्। तथा पराक्रममनाश्रित्य नयो न फलति, प्रबलेन पराक्रमेण नयः प्रतिहन्यत इत्यादिश्च दृष्टान्तदार्ष्टान्तिकयोः समुचितोऽर्थोऽनुसन्धेयः। नियतिरप्रत्यक्षेति तस्याः प्राधान्यं बाधकत्वं साधकत्वं च न परिस्फुटं, दक्षता तु प्रत्यक्षेति तत्सम्बन्धि सर्वं स्फुटतरमिति नियतेर्दक्षताया व्यतिरेकोऽप्युपमयैव द्योत्यते। परसिद्धेन[1] परो बोधनीय इति न्यायेन दिष्टैकनिष्ठमजातशत्रुं प्रति पौरुषप्राधान्यमङ्गीकुर्वता वृकोदरेण नियतिदृष्टान्त उपन्यस्तः॥ १२॥

नन्वव्यवहितफलसम्बन्धोऽपि पराक्रमो नयमनपेक्ष्य स्वतन्त्रतया क्रियमाणः प्रमादादिनान्तरीयकं विनिपातं निवर्तयितुं न क्षमते, विनिपातप्रतीकारावगमस्य मन्त्राङ्गस्याभावादित्याशङ्क्याह—

**अभिमानवतो मनस्विनः**
**प्रियमुच्चैः पदमारुरुक्षतः।**
**विनिपातनिवर्तनक्षमं**
**मतमालम्बनमात्मपौरुषम्॥ १३॥**

१. 'सि' ख. पाठः.

**अभिमानवत** इत्यादि । उच्चैः पदमारुरुक्षतः आत्मपौरुषमालम्बनं मतम् । उच्चैरुन्नतं पदं स्थानमधिकारं वा साम्राज्यादि । आरुरुक्षतः आरोढुमिच्छतः । आत्मपौरुषम् आत्मनः पौरुषमात्मपौरुषम् । पौरुषं पुरुषस्य कर्म प्रशस्यतानिमित्तं पराक्रमादि । आलम्बनं स्थिरतरमवस्थापकमास्पदम् । मतं निरूपितम् । उपपत्तिं निरूप्य निश्चितं न विपर्ययज्ञानकल्पितमित्यर्थः । आरोहणकर्मतयैव पदस्योच्चैष्ट्वे सिद्धेऽप्युच्चैरिति विशेषणं न्यग्भावहेतुपरिभवाभावकृतमुच्चैष्ट्वस्य नित्यत्वं द्योतयति । पौरुषस्यान्यसम्बन्धानुक्त्यैवात्मसंबन्धे सिद्धेऽप्यात्मेति विशेषणेन तस्य स्वाभाविकत्वं द्योत्यते । आलम्बनत्वे हेतुमाह — विनिपातनिवर्तनक्षममिति । विनिपातस्य विविधस्य न्यक्पतनस्य व्यसनस्य नरकस्य वा निवर्तने प्रतीपनयने रोधने क्षमं शक्तम् । प्रियमिति, विशिष्टभोगविधायित्वेन प्रीतिकरमित्यर्थः । एतत् पदमित्यस्य विशेषणम् । उच्चैष्ट्वेन पदस्य श्लाघ्यतावगम्यते । प्रियत्वेन स्पृहणीयता । मनस्विन इति । मनसः पुरुषविशेषस्य च स्वस्वामिभावसंबन्धविशेषो विनिप्रत्ययेनेह प्रत्याय्यते । भयविषादादिभ्यो दोषेभ्यो निवर्त्य निजं मनो नियच्छन् स्वतन्त्रः पुरुषो व्यसननिस्तरणव्यापारे शक्ष्यतीति मनस्विशब्दो लक्षणया व्यसनादिनिस्तरणसमर्थे वर्तते । मनस्विन इति विशेषणमुच्चैः पदारुरुक्षाया हेतुं द्योतयति । स्वाधीनमनसो व्यसननिस्तरणसमर्थस्यैवोन्नतपदेच्छा न तु भयविषादाद्यधीनमनसो व्यसनार्दितस्येति । अभिमानवत इति । आत्मत्वेनात्मीयत्वेन वा सर्वस्मिन्नाभिमुख्येन मननमभिमानः । सर्वावस्थासु परान् प्रत्यप्रह्वताहेतुश्चित्तगुणोऽभिमान इति केचित् । सर्वानात्मीयतयाभिमन्यमानस्य स्वाधिकस्यान्यस्यादर्शनात् परान् प्रत्यप्रह्वता भवत्येवेति तन्नार्थान्तरम् । सत्त्वोत्कर्षचित्तोन्नतिरूपेऽभिमाने सति प्रकाशे तमस इव हर्षशोकादेर्मनोवैवश्यहेतोरभावादभिमानान्वयेन मनस्विता भवति । अभिमानवत्तया मनस्विता, तयोन्नतपदारुरुक्षा, तया त्वनन्यसाधारणं पौरुषमिति हेतुक्रमो विशेषणक्रमेण व्यज्यते । त्रिवर्गसाधनमुन्नतं पदमारुरुक्षुरभिमानादिगुणान्वितः सहायनिरपेक्ष एव पौरुषेणोन्नतपदमारोढुं तन्नान्तरीयकं विनिपातं निवर्तयितुं च प्रभवति । उन्नततरं महाराजपदमारूढो विशिष्टतराभिमानादिगुणान्वितो भवादृशः किं पुनरिति तात्पर्यार्थः ॥ १३ ॥

---

१. 'न्ध्यनु' क. ग. घ. पाठः. २. '...नेन निनिप्रत्यये सि' ख. पाठः.

एवमन्वयमुखेन नृपपौरुषस्य पराक्रमस्य प्राधान्यमुपपाद्य व्यतिरेकमुखेनोपपादयति — विपद इत्यादिना ।

विपदोऽभिभवन्त्यविक्रमं
रहयत्यापदुपेतमायतिः ।
नियता लघुता निरायते-
रगरीयान् न पदं नृपश्रियः ॥ १४ ॥

अविक्रमं विपदोऽभिभवन्ति । अविद्यमानविक्रमं विपदो विशिष्टानि पदानि पतनानि कृच्छ्राणि अभिभवन्ति परिभवन्ति न्यग्भावयन्ति । अविक्रमस्य विशिष्टं नैकं व्यसनम् । न च बहूनि स्वल्पानि । व्यसनानि न च तैः सम्बन्धमात्रं, किं तर्हि विशिष्टैर्बहुभिर्व्यसनैः अभिभवः । स च सततं भवत्येवेत्यभिप्रायः । विक्रमस्य क्षत्रियेणैव सम्बन्धसम्भवादविक्रममित्यनेन नृपमित्यादिविशेष्यपदमाक्षिप्यत एव । विक्रमाभावे विपत्कृतोऽभिभवः पुनर्विक्रमे सति निवर्तत एवेति चेत् तत्राह — आपदुपेतमायतिः रहयतीति । आपदेषत्पतनेन स्वल्पेन व्यसनेनोपेतं समीपे गतं सम्बद्धमात्रम् । आयतिर्दीर्घकालान्वयिन्युपायनशुल्ककराद्यर्थावाप्तिः रहयति मुञ्चति । विपद्भिर्विशिष्टैर्व्यसनैरभिभूयमानं किं पुनरिति भावः । यद्यपि विपदापच्छब्दयोः पर्यायतया प्रयोगस्तथापि धातुजत्वादनयोरुपसर्गभिन्नयोरवयवार्थमौचित्यं च जानतां विपश्चितामर्थभेदः स्फुरत्येवेत्यर्थभेदे सति विपच्छब्देनोपक्रमे तस्य तच्छब्दस्य वा प्रतिनिर्देशो न कृत इति प्रक्रमभङ्गदोषो नाशङ्कनीयः । ननु विक्रमाभावकृतां विपदमायतिविरहं च पुनरुचितेन[1] क्षत्रियस्य विक्रमेण शक्तिमान् निवर्तयतीति तत्राह — निरायतेर्लघुता नियतेति । निर्गता आयतिर्यस्मात् स निरायतिः । तस्य लघुतात्पता धर्षणीयताप्रतीतिः । नियतैकान्तिकी । क्षत्रियस्य विक्रमाभावे द्विषामभियोगो दस्युचोरादिभिः पुरराष्ट्रपीडा सचिवादीनामविधेयता इत्यादीनां विजृम्भणे दृष्टमात्रप्रत्ययाः प्राकृता जनाः शक्तिहीनोऽयमिति निश्चित्य तस्मै शुल्ककरादीन् न प्रयच्छन्तीत्यायतिरहितः स्वामपि शक्तिं न प्रत्येतीति तादृशो नृपः स्वात्मनो लाघवं दर्शयत्येवेत्यभिप्रायः । ननु शक्तिमतो लघुता शक्त्यभिव्यक्तौ निवर्तत

1. 'न वि' क. ख.

एवेति तत्राह — अगरीयान् नृपश्रियो न पदमिति । अगरीयानित्यत्र नञा गुरुत्वातिशयस्य प्रत्ययार्थस्य पर्युदासः क्रियते, न गुरुत्वस्य प्रकृत्यर्थस्य । पर्युदासे ह्यगुरुरित्येव प्रयोगो युक्तः । गुरुत्वान्वितोऽपि गुरुत्वातिशयाभावान्नृपश्रियो राज्यसमृद्धेः पदमास्पदं न भवति, किं पुनर्गुरुत्वस्य मात्रयाप्यनन्वितस्तद्विपरीतो लघुरित्यर्थविशेषाभिव्यक्तये प्रत्ययार्थपर्युदासः कृतः । श्रीमात्रमपि गुरुणैव धारयितुं शक्यं न लघुना, साम्राज्यसमृद्धिलक्षणा नृपश्रीस्तु गरीयसैव धारयितुं शक्या न गुरुणापीति द्योतयितुं नृपेति श्रियो विशेषणं कृतम् । अत्रापि लघुगरीयश्शब्दयोरर्थभेदान्न प्रक्रमभङ्गदोषः । निखिलनियमनसामर्थ्यरूपां प्रभुशक्तिं नृपश्रीशब्दो नृपश्रीप्राप्तिहेतुतया लक्षयति । नृपश्रीः प्रभुशक्तिमन्तरेण हेत्वन्तरैर्दुरापतरेति द्योतयितुं नैकृतिकेषु नित्यापकारिषु निहन्तव्येषु शत्रुष्वनाश्रितविक्रमं तैरेव द्विषद्भिः कृतैः परिभवदासीभावराज्यभ्रंशादिभिर्विशिष्टैर्व्यसनैरभिभूयमानं साम्राज्यविरहादायतिरहितं भवन्तं प्राकृता जनाः लघुरिति प्रतीयुः । तां प्राकृतप्रतीतिं व्यावर्तयितुमायतिगौरवप्रकर्षप्रकृतिं प्रभुशक्तिं प्रकटीकर्तुं च भवता विक्रमो विभाव्यतामिति तात्पर्यार्थः ॥ १४ ॥

एवं विक्रमस्य विपन्निवर्तने साम्राज्यनिर्वर्तने च कारणत्वमुपपाद्य विषादरूपक्षमाश्रयणं न युक्तमिति प्रकृतमर्थमुपसंहरति — तदलमित्यादिना ।

> तदलं प्रतिपक्षमुन्नते-
> रवलम्ब्य व्यवसायवन्ध्यताम् ।
> निवसन्ति पराक्रमाश्रया
> न विषादेन समं समृद्धयः ॥ १५ ॥

तद् व्यवसायवन्ध्यतामवलम्ब्य अलम् । विक्रम एव क्षत्रियस्यालम्बनं न क्षमेति यत्, तस्माद् व्यवसायवन्ध्यतां मावलम्बिष्ठा इत्यर्थः । व्यवसाये कृत्यनिर्णये वन्ध्यतां स्वाभाविकीमशक्तिम् । क्षमामित्यर्थात् सिध्यति । महाराजेन मान्यतयाऽङ्गीकृतायाः कुत्सितत्वं द्योतयितुं व्यवसायवन्ध्यतामित्युक्तं, न क्षमामित्येव । अवलम्ब्यालमिति प्रतिषेधार्थेनालंशब्देन योगे भावमात्रे 'अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा' (३. ४. १८) इति क्त्वाप्रत्ययो वि-

१. 'यरहिततया न' ग. घ. पाठः.

हितः । व्यवसायवन्ध्यताकर्मकमवलम्बनं न कर्तव्यमिति गम्यते । व्यवसा-
याशक्तिरूपा क्षमेत्येक एव न क्षमाया दोषः, अन्योऽपि महत्तरोऽस्तीत्याह—
उन्नतेः प्रतिपक्षमिति । उन्नतेरुच्छ्रयस्य साम्राज्यादिरूपस्य । प्रतिपक्षं प्रतिकूलं
वर्गं विरोधिसङ्घातमित्यर्थः । बहवो विरोधिनः संभूता यावतीं साम्राज्यस्य
प्रतिहतिं जनयन्ति, एकैव क्षमा[1] तावतीं साम्राज्यप्रतिहतिं जनयितुं शक्नुया-
दित्यभिप्रायः । प्रतिपक्षशब्दस्य पुल्लिङ्गतानियमान्न विशेष्यलिङ्गानुगमः । ननु
वशिना विवेकिना समुचितव्यवसायशक्तेन क्षमावतैव समृद्धयः सम्पाद्याः, न
त्वमर्षतन्त्रेणेत्यत्राह[2] — निवसन्तीत्यादि । समृद्धयो विषादेन समं न निवस-
न्ति । आलस्यमान्द्यादिहेतुर्विषादः । क्षमापि तथाविधेति विषादशब्देन क्षमा
लक्ष्यते । परिभवकर्तृषु क्षत्रियस्य क्षमा विषाद एव न विषादसमेति द्यो-
तनं लक्षणाफलम् । सममित्यव्ययं सहार्थे वर्तते । नीत्युपसर्गो नित्यार्थः । अ-
होरात्राद्यनल्पकालव्यापिनी निलयाद्यधिकरणा चेतनकर्तृका बुद्धिपूर्विका स्थिति
क्रिया वसतिधातोरर्थः । गुणवति वासस्थाने सहवासिनि च चेतनानामभिरु-
चिर्दृष्टेति तस्मिन् द्वये चेतनानामभिरुचिरारोप्यते स्थितिदीर्घतां द्योतयितुम् ।
इह समृद्धीनामचेतनानां क्षमावति स्वाश्रये क्षमया सह स्थितिक्षणिकतां द्योत
यितुमारोपिता वसतिक्रिया निषिध्यते, न स्थितिक्रियामात्रम् । प्रभुशक्त्यादे
समृद्धिहेतोर्वासनया क्षमया सह समृद्धीनां स्वल्पकालस्थितिः स्यादपि विषा-
दात्मना परिणतया[3] तया सह तासां दीर्घकालस्थितिर्नैवेति भावः । वृकोदरव-
चनं पूर्वपक्षीकुर्वतो युधिष्ठिरस्य 'न तितिक्षासममस्ति साधनमि'त्युक्त्या व-
न्ध्यताविषादशब्दाभ्यां क्षमैव विवक्षितेति गम्यते । क्षमासमृद्धीनां सहानव-
स्थानरूपेण विरोधेन क्षमावता समृद्धयो दुर्लभा एवेति द्योत्यते । समृद्धीनां क्षम-
या सह स्थितिरेव निषिद्धेति समृद्धीनामाश्रयः क्षमेति पक्षो निरस्तः । समृद्धीनां
क्षमया सह निवासाभावे हेतुमाह — पराक्रमाश्रया इति । पराक्रमो विक्रम
आश्रय आस्पदं प्रतिष्ठाहेतुर्यासां ताः पराक्रमाश्रयाः । क्षमापराक्रमयोस्तमः-
प्रकाशयोरिव विरोधात् तमोन्वये रूपदर्शनमिव क्षमान्वये समृद्धिदर्शनमनुपपन्न-
मिति भावः । अनुकूलेन नायकेन रममाणा नायिका यथा प्रतिकूलादुद्विजति

---

१. 'मा साम्राज्यस्य तावतीं प्र'. २ 'ति तत्रा' क. ग. घ. पाठः. ३ 'या
क्षमया सह समृद्धीनां ता' ख. पाठः.

तथा पराक्रमान्विताः समृद्धयो विषादादित्ययं चार्थो विषादपराक्रमशब्दयोः पुँल्लिङ्गतया समृद्धिशब्दस्य स्त्रीलिङ्गतया च द्योत्यते ॥ १५ ॥

ननु साम्राज्यप्राप्तेर्विरोध एवास्माकं पराक्रमो युक्तः । वनवासादिसमयसमाप्त्यनन्तरं स्वराज्यमस्माभिर्ग्रहीतुं शक्यमेवेति कुरुसभायां प्रतिश्रुतोऽवधिर्मया प्रतीक्ष्यते, न त्वलसतयाशक्त्या वा क्षमामाश्रित्य मुनिव्रतमनुष्ठीयते इति युधिष्ठिरस्य शङ्कामुद्भाव्य परिहरति — अथ चेदित्यादिना ॥

अथ चेदवधिः प्रतीक्ष्यते
कथमाविष्कृतजिह्मवृत्तिना ।
धृतराष्ट्रसुतेन सुत्यजा-
श्चिरमास्वाद्य नरेन्द्रसम्पदः ॥ १६ ॥

अथावधिः प्रतीक्ष्यते चेद्, नरेन्द्रसम्पदो धृतराष्ट्रसुतेन कथं सुत्यजाः। अथशब्देन प्रकृतादर्थादर्थान्तरं द्योत्यते । परिभवकारिषु वैरिषु पराक्रमो विधेय इति प्रकृतोऽर्थः । ज्ञातयो धार्तराष्ट्रा न शत्रवः, ज्ञातिषु च यथोक्तसमयानुसारेण स्वराज्यग्रहणाय यत्नो विधेयः, न पराक्रमानुसारेणेत्यर्थान्तरम् । वनवासाज्ञातवासयोः कल्पितस्य कालस्यावसानमवधिशब्देनेह विवक्ष्यते । प्रतीक्ष्यते प्रतिपाल्यत इत्यर्थः। नरेन्द्रसम्पद इति, नरेन्द्रस्य सम्राजः सम्पदः समृद्धयः । अपर्यन्तपरार्घ्यभोगतया श्लाघ्यतरतया विशिष्टोन्नतिविधायितया च दुरितानुबन्धेनापि स्वसंपादनस्पृहां सर्वेषां जनयन्त्यः सम्राट्समृद्धयः परस्मै स्वार्पणेच्छां कथं कस्य कुर्युरिति नरेन्द्रेति विशेषणेन व्यज्यते। अनपत्यस्य विचित्रवीर्यस्य दिष्टान्तेन विनष्टं कुरुराज्यं ज्यायसस्तस्य क्षेत्रजस्य जन्मना पूर्वं धृतमित्याम्बिकेयस्य धृतराष्ट्र इति नाम कृतम्। तेन जात्यन्धोऽपि धृतराष्ट्रः कुरुराष्ट्रमात्मीयमेवाभ्यमन्यत । ततस्तत्सुतस्याविकलाङ्गस्य सुयोधनस्य तदाधिपत्ये तदधिकोऽभिमान इत्ययमर्थो धृतराष्ट्रसुतशब्देन द्योत्यते । कथं केन प्रकारेण । सुत्यजाः सुखेन त्यक्तुं शक्याः । सुत्यजताहेतुरेकोऽपि प्रकारो नास्तीति भावः । आविष्कृतजिह्मवृत्तिनेति । आविष्कृताः प्रकटीकृताः जिह्माः

कुटिला अधर्मरूपाः वृत्तयो व्यापारा येन स आविष्कृतजिह्मवृत्तिः, तेन । कुरुसदसि छद्मद्यूतपतिव्रतापणीकरणकेशाकर्षणादयः कुत्सिता व्यापाराः जिह्मवृत्तिशब्देन विवक्ष्यन्ते । नृशंसैरप्यकृतपूर्वं महत्तरं तादृशं पातकं महाजनसमक्षं कृतवान् धार्तराष्ट्रः सम्राड्गुणान्विते त्वयि ज्यायसि सत्येवात्मनः साम्राज्यमनुचितं किं मन्येतेत्यभिप्रायः । आविष्कृतेत्युक्तं, न त्वालम्बितेत्यादि । तेन निस्त्रपतया स्वकृतमखिलं निन्द्यमेव कर्म प्रकाशयितुमप्यसौ प्रभवति । तेन किमनुचितमिति द्योत्यते । आस्वाद्येति । सरसमुपभुज्येत्यर्थः । चिरमिति । क्षणिकमप्यास्वादनमास्वाद्यस्य दुस्त्यजतां जनयति, किं पुनर्दीर्घकालव्यापत्यभिप्रायः । चिरास्वादितस्यापि विषयस्य क्रियान्तरव्यवधाने कदाचित् त्यागः शक्येतापि, दीर्घकालानुबन्धिन आस्वादनस्यानन्तरमेवास्वाद्यस्य त्यागो दुष्करतर इत्यास्वाद्येति क्त्वाप्रत्ययेन द्योत्यते । धृतराष्ट्रसुतत्वमाविष्कृतजिह्मवृत्तित्वं चेति कर्तृगतं नरेन्द्रसमृद्धित्वं चिरास्वाद्यमानत्वं चेति विषयगतं हेतुद्वयमिति चत्वारो हेतवस्त्वयि साम्राज्यप्रत्यर्पणेच्छां तस्य निवारयन्तीति तात्पर्यार्थः ॥ १६ ॥

ननु धार्तराष्ट्रेण नरेन्द्रसम्पदां दुस्त्यजतायामेते चान्ये च हेतवः सन्त्येव, तथापि सुयोधनो भीष्मादिकुरुवृद्धसंसदि कल्पितं समयं लङ्घयितुं न शक्नुयादित्यनिच्छन्नप्यसावस्माकमाधिराज्यं प्रतिदास्यतीति युधिष्ठिरस्य मतमनूद्य परिहरति — द्विषता विहितमित्यादिना ।

द्विषता विहितं त्वयाथवा
यदि लब्धा पुनरात्मनः पदम् ।
जननाथ ! तवानुजन्मनां
कृतमाविष्कृतपौरुषैर्भुजैः ॥ १७ ॥

अथवा आत्मनः पदं त्वया पुनः लब्धा यदि तवानुजन्मनां भुजैः कृतम् । अथवेत्यव्ययेन पक्षान्तरं द्योत्यते । धृतराष्ट्रसुतेन नरेन्द्रसम्पदो दुस्त्यजा इति पूर्वमुपक्षिप्तः पक्षः । जनापवादभयाद् भीष्मादिगौरवाद्

१. 'राजस' ख., २. 'ज्यानुमानम', ३. 'न्यत इ' क. घ. ४. 'किंचिम' क. ग. पाठः, ५. 'नेन' ग. पाठः.

भवतो भाग्याद्वा सुयोधनः स्वहस्तगतामेव त्वदीयां नरेन्द्रलक्ष्मीं प्रतिदास्यतीति पक्षान्तरम्। एतावानर्थः प्रकरणसहायेनाथवेत्यनेन प्रत्याय्यते। आत्मन इति पदविशेषणेन युधिष्ठिरपदस्य मात्रयापि सुयोधनसम्बन्धो नास्तीति द्योत्यते। त्वयेति। द्विषतः सुयोधनादेवं त्वत्पदलाभे सोदरबन्धुसुहृदां नानुमतिरिति भावः। पदशब्देनाधिकारोऽत्र विवक्ष्यते। आज्ञाफलं स्वाम्यधिकारः। लब्धेत्यनद्यतने भविष्यति काले कर्मणि विहितो लुट्प्रत्ययो लभिक्रियायाः कालविप्रकर्षं द्योतयति। विशेषद्योतकः पुनश्शब्दः स्वविक्रमहेतुकात् स्वपदलाभात् सपत्नप्रसादाधीनस्य स्वपदलाभस्य भेदं द्योतयति। तदेव विवृणोति—द्विषता विहितमिति। द्विषता सपत्नेन सहजशत्रुणा विहितं नियुक्तम्। पदमित्यस्य विशेषणमेतत्। प्रकृतिविषयो नियोगः पद उपचर्यते प्रकृतीनां पदैकात्म्यप्रतिपत्तये। प्रकृतिसमवायरूपं हि सम्राट्पदम्। सप्रकृतिकं कुरुराज्यमजातशत्रुं भजतु, तत्र मम नाप्रीतिरिति सुयोधननियोगाधीना भवतः स्वसाम्राज्यप्राप्तिरिति भावः। अथवा विहितमित्यस्य कृतमित्यर्थः। विपूर्वो दधातिर्नियोगे करणे च वर्तते। पूर्वसिद्धमर्यादापर्युदासेन कृत्रिमसङ्केतविधानेन चान्यथा कृतमिति विहितमित्यनेन विवक्ष्यते। नित्यसिद्धस्य सम्राट्पदस्य घटादिनिर्वर्तनसमं निर्वर्तनं न संभवतीति यदिशब्दः स्वपदलाभस्य पाक्षिकतां द्योतयति। तवानुजन्मनामिति। यवीयसां सोदराणामित्यर्थः। तेषामग्रजन्महितानुबन्धतात्पर्यं ज्यायांसं महाराजमनपेक्ष्य त्रिवर्गानधिकारं च द्योतयितुमनुजन्मनामित्युक्तं, न त्वस्माकमिति। आकाङ्क्षादिभिरनुजन्मनामित्यनेनैव तवानुजन्मनामित्यर्थे सिद्धेऽपि यत् तवेति विशेषणं, तेन तेषां धनादिवत् पणीकरणादिषु तद्विधेयत्वातिशयो द्योत्यते। भुजैरिति। महीपालनभोगयोः साधकतमैः। आविष्कृतपौरुषैरिति। प्रकाशितपराक्रमादिपुरुषकर्मभिरित्यर्थः। दिग्विजयादिष्वित्यर्थात् सिध्यति। अवयविनां पौरुषमवयवेषु भुजेषूपचर्यैवमुक्तम्। अनेकपुरुषनिर्वर्त्यं पौरुषं येषां भुजा एव निर्वर्तयन्ति, ते कथं जय्याः स्युरित्युपचारेण द्योत्यते। पर्याप्त्यर्थं कृतमित्यव्ययं विरुद्धलक्षणया वैफल्ये पर्यवस्यति। यथा—"अलं महीपाल! तव श्रमेण" (रघु॰ सर्ग॰ २. श्लो॰ ३४) इति। भुजानां पर्याप्तिहेतुत्वारो-

१. 'ति। तदेव', २. 'प्र' घ. ३. 'र्थ' घ. पाठः.

पेण 'हेतौ" (२. ३. २३) इति तृतीया। महाफलतया प्रथिता विटपिनां विटपा इवास्माकम् इमे भुजास्तवोपेक्षया फलकाले निष्फलाः शोच्याः स्युरिति भावः। जननाथेति। जनस्य मनुष्यादिचेतनसमूहस्य नाथ! ईश्वर!। स्वनियोगाधीना समस्तभूपतिपदावाप्तिच्युतिः। स एव त्वममित्रनियोगाधीनं स्वपदं लिप्सुः कथं न लज्जस इति भावः। दिग्विजयादीन्यन्यदुष्कराणि विधाय राजसूयादिषु ज्यायसो महाराजस्य सोदरोचितं साहाय्यं कृतवन्तो भीमार्जुनादयस्तदनुजाः सुयोधनेन सपत्नेन कृते तस्य तादृशे परिभवे किमकुर्वन्, स च युधिष्ठिरो महाराजस्तादृशैश्वर्यानुभावस्तदा किं कृतवानित्यपहास्या भविष्याम इत्येतद् न सह्यत इति तात्पर्यार्थः॥१७॥

ननु प्रयोजनप्रापणे पाटवं प्रशंसाहेतुः, अपाटवमपहासहेतुरिति प्रयोजनलाभे पुरुषः सर्वैः प्रशस्यते। परमप्रयोजनस्य साम्राज्यस्य लाभे कथमस्माकमपहास्यत्वमिति शङ्कायामुत्सर्गोऽयमपवादेन बाध्यत इत्याह — मदसिक्तेत्यादिना।

मदसिक्तमुखैर्मृगाधिपः
करिभिर्वर्तयति स्वयं हतैः।
लघयन् खलु तेजसा जग-
न्न महानिच्छति भूतिमन्यतः॥ १८॥

मृगाधिपः स्वयं हतैः करिभिर्वर्तयति। 'वृतु वर्तने' इति धातुर्भुजिक्रियासाध्यायां प्राणानां स्थितौ व्यापारे च वर्तते। तस्माद् 'हेतुमति च' (३. १. २६) इति णिचि वर्तयतीति रूपम्। अवर्जनीयतया भवद् वर्तनफलं प्राणस्थितिर्वर्तनकर्त्रा मृगाधिपेन फलत्वेनानभिसंहितमिति वर्तयतीति परस्मैपदम्। तेनाभिमानिनो मृगाधिपस्य मानरक्षणं प्रधानफलं, प्राणस्थितिस्त्वानुषङ्गिकीति द्योत्यते। मांसभक्षणविक्रयाद्यार्थिभिः मृगयुभिरन्वहं मृग्यमाणानां मृगाणां स्वसन्निधानेनान्यदुष्करमधिकं रक्षणं करोतीत्यमुमर्थमवगमयति योगेन सिंहे वर्तमानो मृगाधिपशब्दः। तेनोन्नतमनोवृत्तिः सिंहो बलिन एव जिघत्सति जिघांसति वा दुर्बलांस्तु प्रत्युत पालयतीति तस्याभिमा-

१. 'जाः पूर्वोपे' ख. पाठः. २. 'स्त्व' घ. पाठः. ३. 'नाभि' क.ग. घ. पाठः.

नातिशयो द्योत्यते । तदेव विवृणोति — करिभिरिति । करैरुन्मूल्य वृक्षादीन् प्रहरणीकर्तुं समर्थ इत्ययमर्थः करिशब्देन द्योत्यते । करिभिरिति बहुवचनेन बहून् संहतानपि हस्तिनः स्वयमेक एव सिंहो हन्तुं समर्थ इति ध्वन्यते। स्वयं हतैरिति । नान्यहतैर्मृगैर्वेति व्यज्यते । मदसिक्तमुखैरिति । मदेन मदजलेन सिक्तं क्लिन्नं मुखं गिरिशिरोविशालो मस्तकपुरोभागो येषां ते मदसिक्तमुखाः, तैः । अन्तरुपचितस्य मदस्य बहिर्व्यक्तिः सिक्तशब्देन द्योत्यते[1]। तेन-यौवनोद्दीपितनैसर्गिकबलवीर्यविक्रमैर्दुर्जयतरैरित्यर्थ आक्षिप्यते । बलाविनाभूतमदोदयद्योतकं करिणां मुखमेव मृगाधिपो नखैर्भिनत्ति, नान्यत् पार्श्वपृष्ठादीति तस्य तेजस्वितातिशयं द्योतयितुं मदसिक्तमुखैरित्युक्तं, न स्रुतभूरिमदैरित्यादि । षष्टिहायनान् मत्तानपि मातङ्गानभिमुखमेत्य मृगाधिपो हन्ति, न तु पार्श्वपृष्ठादिगतं कृच्छ्रेणेति चानेनैव विशेषणेन व्यज्यते । करिभिरिति करणे तृतीया । वर्तयति प्राणस्थितिं करोतीत्यर्थः । मृगाधिपस्य प्राणस्थितिनिर्वर्तने मदसिक्तमुखाः स्वयं हताः करिण एव करणं न तु करिपोताः कुरङ्गास्तृणं वेति भावः । मृगाधिपस्य प्राणस्थितिहेतुः क्रिया विजयलब्धेनैव वस्तुना, किं पुनःशरीरपोषणशोभादिहेतुरिति द्योतयितुं वर्तयतीत्युक्तं, न तु मेधतीत्यादि । यथा मृगाधिपः स्ववृत्तये स्वबलार्जितमेव गजरुधिरादि गृह्णाति, तथा त्वमपि स्वबलविक्रमोपनीतमेव साम्राज्यं गृहाण, न पराधीनमिति तात्पर्यार्थः । ननु हिंस्राणां श्वापदानां क्रिया विपश्चितां विधेयनिर्णये हेतुर्न स्यादिति तत्राह — लघयन्निति। महान् अन्यतो भूतिं नेच्छति । उन्नतसत्त्ववृत्तिरन्यनिरपेक्षो महानित्युच्यते, आत्मव्यतिरिक्तः सर्वोऽन्यशब्देनेह विवक्ष्यते। तेन महान् सुहृत्साहित्यायत्तामपि सम्पदं नाद्रियते किं पुनर्द्विषत्प्रसादाधीनामिति गम्यते । अन्यानपेक्ष्य लब्धुं शक्यं क्षुन्निवृत्त्यादि क्षणिकमेव फलं महान् पराधीनं नेच्छति बहुसहायसाध्यं स्थायिसमृद्धिरूपं फलमपीति भूतिशब्देन द्योत्यते । अन्याधीनभूत्यनिच्छायां हेतुमाह — तेजसा जगल्लघयन्निति। परपरिभवशक्तिरभिमानश्च तेजःशब्देनोच्यते । इहोभयं विवक्षितम् । जगल्लोकं लघु अल्पं कुर्वन् स्वतेजसः प्रकर्षेण कृत्स्नस्य चेतनसमूहस्य तेजः स्वल्पमेवेति प्रत्ययमुत्पादयन्नित्यर्थः । न स्वसंबन्धिफलाभिसन्धिना महतो जगल्लघूकरणं, तेजःप्रसरणेनाऽनभिसन्धिपूर्वकं तस्य तद् भवतीति लघयन्निति परस्मैपदेन

१. 'सूच्यते' क, ख, ग।

द्योत्यते । लघुशब्दात् 'तत्करोति' इति णिचि 'णाविष्टवत्प्रातिपदिकस्ये'तीष्ठवद्भावेन टिलोपे लट्शत्रादिषु कृतेषु लघयन्निति रूपम् । वृकोदरस्य वक्तृतया विक्रमस्य प्रतिपाद्यतया च मानिनां प्रसिद्धिरिति लघुशब्देन द्योत्यते। उन्नततेजसां सर्वेषां संप्रतिपन्नोऽयमर्थः, न मयैकेन संरब्धेन समर्थ्यत इति भावः। सत्त्वगुणस्य विभुतया सर्वत्र सत्त्वकृतं यथोचितकारि महत्त्वमस्तीति मृगाधिपस्य स्वयं हतैः करिभिर्वर्तनं स्वजातिमहत्त्वहेतुः, न श्वापदत्वकृतमिति तिर्यग्जातिगतमपि प्रशस्ततरं कर्म स्वीकर्तव्यमेवेति तात्पर्यार्थः ॥ १८ ॥

ननु समस्तपुरुषार्थहेतुतया साम्राज्यलक्ष्मीः क्षत्रियाणां परमप्रयोजनमिति सर्वैरुपायैस्तदवाप्तये तैर्यत्नः क्रियत इति तदवाप्तावुपायविशेषनिर्बन्धो न युक्त इति तत्राह — अभिमानधनस्येत्यादिना ।

अभिमानधनस्य गत्वरै-
रसुभिः स्थास्नु यशश्चिचीषतः ।
अचिरांशुविलासचञ्चला
ननु लक्ष्मीः फलमानुषङ्गिकम् ॥ १९ ॥

लक्ष्मीरभिमानधनस्यानुषङ्गिकं फलं ननु । अभिमानधनस्येत्यसाधारणेन विशेषणेन क्षत्रियस्येति विशेष्यं प्रतीयत एव । मणिहिरण्यादिधनसमृद्धिरिह लक्ष्मीशब्देन विवक्ष्यते । सर्वसमृद्धियोनिविशिष्टक्रियाशक्त्यभिव्यक्तिहेतुः सत्त्वकृतो मनोविकारोऽभिमानः स धनं यस्य सोऽभिमानधनः, तस्य । अभिमानस्य धनत्वेन रूपणं तस्य धर्मादिसाधकतमस्य प्रीतिहेतुत्वातिशयं द्योतयति । प्रधानप्रयोजनमुद्दिश्य प्रवर्तमानस्य कर्तुरवर्जनीयफलान्तरजनकोऽवान्तरव्यापारोऽनुषङ्गः । यथा शुष्यत्सस्यं कदारं सिञ्चतः स्नानपानादिपर्याप्तकुल्यावर्त्मना पयसः प्रवर्तनम् । अनुषङ्गेण निर्वृत्तमानुषाङ्गिकम् । शैषिकष्ठक्प्रत्ययः । नन्विति निश्चये । लक्ष्म्या आनुषङ्गिकफलत्वे हेतुमाह — अचिरांशुविलासचञ्चलेति । अचिरांशोः क्षणद्युतेः विद्युतो विलासः प्रभाप्रसरणमिव चञ्चला भृशं चपला या सा अचिरांशुविलासचञ्चला । द्विविधा लक्ष्मीः व्यस्ता समस्ता च । माण्डलिकाश्रया व्यस्ता ।

महाराजाश्रया समस्ता । तयोरुपमेययोः प्रतिपत्तये आचरांशुविलासचञ्चले-त्युक्तं नाचिरांशुचञ्चलेत्येव । महाराजलक्ष्मीविकृतिर्व्यस्ता लक्ष्मीरिह लक्ष्मी-शब्देनोच्यते, तडिद्विकृतेश्चटुलतरस्य तद्विलासस्योपमानत्वादिति । तयोरु-पमानोपमेयभावो वाच्य एव । अचिरांशुशब्दस्त्वनुस्वानशक्त्या तडितश्च-टुलतां द्योतयन् अन्यार्थप्रयुक्तेन लक्ष्मीशब्देन बुद्धावुपस्थिताया महाराजल-क्ष्म्याः क्षणद्युतेरिव क्षणिकतामवगमयत्येव । तेन साम्राज्यलक्ष्म्या अपि आनु-षङ्गिकफलत्वं सिध्यति । किं प्रधानं फलमुद्दिश्य वर्तमानस्य लक्ष्मीरानुषङ्गिकं फलमिति तत्राह — यशश्चिचीषत इति । यशः प्रकृष्टक्रियागुणकृतां स्वर्गस्थि-तिहेतुं स्तुतिरूपां ख्यातिमित्यर्थः । चिचीषतो निबिडतरं कर्तुमिच्छत इत्यर्थः । यश एव प्रधानं फलं नान्यदिति निश्चयातिशयं द्योतयितुं चिचीषत-इत्युक्तं न चिकीर्षत इत्यादि । यशश्चयनेच्छाफलं जगदाह्लादकं यशश्चयनं जगतापि फलत्वेनाभिमन्यते नात्मनैवेति चिनोतेः चिचीषत इति परस्मैप-देन द्योत्यते । क्षत्रियस्य यशस्सदृशमीप्सिततमं नास्ति, यस्मादीप्सिततराः स-र्वशेषिणः प्राणा यशश्चयने करणमित्याह — असुभिरिति । असूनां शेषत्वे यशसः शेषित्वे च हेतुमाह — गत्वरैः स्थास्नु इति । गत्वरैर्गमनशीलै-श्चञ्चलैरित्यर्थः । स्थास्नु स्थिरतरमित्यर्थः । 'गत्वरश्च'(३. २. १६४) इति निपातितः ताच्छीलिको गमेः क्वरप्प्रत्ययः । 'ग्लाजिस्थश्च क्स्नुः' (३. २. १३९) इति तिष्ठतेः क्स्नुप्रत्ययः । प्रकृष्टप्रीतिहेतुरभिमान एव क्षत्रियस्य धनं, न तु तद्विरहिता परिभवादिदुःखयोनिर्मणिहिरण्यादिसमृद्धिरूपा लक्ष्मीः । आप्रलयस्थायिजगद्व्यापियशःस्थितिरेव जीवितं, न तु द्वित्रिक्षणस्थायिशरी-रपरिछिन्नप्राणस्थितिरित्यभिमानगुप्तये यशोजीवितानवसादाय चाविलम्बित-मुद्यमस्त्वया विधेय इति तात्पर्यार्थः ॥ १९ ॥

क्षत्रियस्यैहिकं प्रयोजनमभिमानः, ऐहिकमामुष्मिकं च यश इत्यु-क्तम् । तत्रेदमाशङ्क्यते — कामं स्वाभाविकोऽभिमानः क्षत्रियस्य धनं न हिर-ण्यरजतादि । यश एव प्रधानं प्रयोजनं न साम्राज्यलक्ष्मीः । तद् यशस्तु साम्रा-ज्यलक्ष्मीवता प्रभुणैव प्राप्तुं शक्यते । अप्रभुः पुनः परिभाव्यत्वादयशोभा-जनमिति । तत्राह — ज्वलितमित्यादिना ।

---

१. 'तः समेत[illegible]' क. पाठः.

ज्वलितं न हिरण्यरेतसं
चयमास्कन्दति भस्मनां जनः ।
अभिभूतिभयादसूनतः
सुखमुज्झन्ति न धाम मानिनः ॥ २० ॥

जनो भस्मनां चयमास्कन्दति न हिरण्यरेतसम् । आस्कन्दतीत्यनुषज्यते । जन इति दृष्टमात्रप्रत्ययो दण्डैकसाध्यः प्राकृतो लोक इत्यर्थः । अविशेषणो जनशब्दो जन्ममात्रसंस्कारायां मनुष्यजातौ प्रसिद्धः । बभस्ति दीप्यते दहनोऽस्मिन्निति भस्म भसितम् । अधिकरणे मनिन्प्रत्ययः । भस्मनामिति बहुवचनेन कारणभेदकृतः कार्यभेदो द्योत्यते । तेन निस्सारकिंशुकादिभस्मवद् गुरुसारखदिरादिभस्माप्यास्कन्दनीयमिति गम्यते । चयं निबिडतरं समूहमित्यर्थः । असंहतभस्मवत् संहतभस्माप्यास्कन्दनीयमिति चयशब्देन द्योत्यते । 'स्कन्दिर् गतिशोषणयोरि'ति पठ्यते । आङित्युपसर्गक्रमणे धर्षणे च वर्तते । क्रामति धर्षतीति वार्थ आस्कन्दतीत्यनेनोच्यते । सर्वथा पादेनाभिहन्तीत्यर्थः[1] सिध्यति । पूजितः पावको भक्तिमता धनहिरण्यादिसमृद्धिहेतुरिति तस्यादरणीयत्वं हिरण्यरेतश्शब्देन द्योत्यते । भस्मनामिति बहुवचनेन हिरण्यरेतसमित्येकवचनेन च निरूप्यमाणो बहवः संहता अपि परिभाव्या एव, ऊष्मवानेकोऽपि दुराधर्ष एवेति द्योत्यते । अग्नेरनास्कन्दनीयत्वे हेतुमाह — अभिभूतिभयादिति । अभिभूत्या भयं अभिभूतिभयम् । अभिभूतिहेतुकाद् भयादित्यर्थः । पदास्कन्दितोऽग्निर्नियमेन दहतीति प्रत्यक्षेणोपलभमानो जनो दहनस्य परिभवासहिष्णुत्वं परिभावकत्वं च व्यवस्यतीति व्यञ्जयितुमभिभूतिभयादित्युक्तं, न[2] तनुदाहभयादिति । नन्वग्निवाचके कस्मिंश्चिदपि शब्दे श्रुते तदर्थाविनाभूतं सर्वप्रत्यक्षं दाहकत्वं नास्फुरत्येव । तेन जनो हिरण्यरेतसं नास्कन्दतीत्युक्ते कुत इति जिज्ञासा नास्त्येव । तत् किमुच्यते अभिभूतिभयादिति । अत्रोच्यते । हेत्वन्तरव्यावर्तनार्थमभिभूतिभयादित्युक्तं, नाज्ञातज्ञापनार्थम् । पदास्कन्दितोऽग्निः सद्यो दहतीति भयमेव जनस्य तदनास्कन्दने हेतुः । न देवतात्वकृतं समृद्धिदायकत्वहेतुकं

---

१. 'र्थात् सि' घ. पाठः. २. 'न तु त' ख. पाठः.

वा गौरवं, न चाधर्मभयमिति भावः। ज्वलितमिति भूतार्थेन क्तप्रत्ययेन ज्वलनक्रियायाः परिसमाप्तिरिव पर्याप्तिरपि प्रतीयते। तेन दाहकत्वातिशयो द्योत्यते। स्वाभाविकदाहकशक्तेः दुस्सहादपि सधूमात् भस्मच्छन्नाद्ग्नेर्जनस्तथा न बिभेति, यथा निरस्तधूमादधःकृतभस्मनो विततायतज्वालादित्ययमर्थो ज्वलितशब्देन द्योत्यते। अतो मानिनः असून् सुखमुज्झन्ति, न धाम। उज्झन्तीत्यनुषज्यते। अत इति प्रकृतपरामर्शिना सर्वनाम्ना निरूष्मणो भस्मचयस्यास्कन्दनं सोष्मणो दहनस्यानास्कन्दनं च प्रकृतं हेतुत्वेन परामृश्यते। दुस्सहतेजसो जनो बिभेति, न तेजोरहितादित्ययं चार्थः प्रत्यक्ष एव नानुमानाद्यपेक्ष इति द्योतयितुम् अत इत्युक्तं न तत इति। मानिन इति मानस्य नित्यान्वयं द्योतयन्निनिप्रत्ययः तद्विरोधिनामसूनां त्याज्यतां व्यञ्जयति। सत्त्वोन्नतचेतसो मानिनश्चञ्चलानां प्राणधनादीनां त्यजनीयतां स्थायियशःप्रमोदहेतोस्तेजसो[२] दुस्त्यजतां च निश्चित्य तेजोविरोधिनः प्राणादींस्त्यजन्ति, न तद्विरोधि[३] तेजः। क्षणिकधनादिप्रयोजनलाभसन्तुष्टाः प्राकृता जनास्तु नैवं शक्नुवन्तीति मानिशब्दबलेन व्यज्यते। अभ्यन्तराणां प्राणानां त्यागविषयतोक्तिः बाह्यानां धनादीनां त्याज्यतरतां द्योतयति, प्रेमविषयाणां प्राणानां स्वतस्त्यजनीयत्वासंभवाद् असुशब्द उज्झतिक्रिया कर्मत्वेनान्वेतुमसमर्थस्तदन्वयार्थमसूनां त्याज्यताहेतुं स्वार्थगतं विशेषम्। अग्निरिव निर्वाप्यते। अप्रतापशक्तेर्मार्दवमेव दौर्बल्यमावहति न मार्दवमात्रम्। प्रतापशक्तियुक्तस्य तु मार्दवं भूषणमित्ययं चार्थो वाक्यशक्त्या व्यज्यते। सवितुस्तिग्मतैव प्रकृतिः, मार्दवं तु देशविप्रकर्षोपाधिकृतम्। राज्ञस्तु जनानुरागनिदानं नैसर्गिकं मार्दवं तिग्मत्वमौपाधिकमित्युपमानोपमेययोः भेदं द्योतयितुमुपमा स्वीकृता न रूपकम्। सपत्नापराधसहनादिरूपं वर्तमानं मार्दवं द्विषद्वर्गक्षपणेन प्रकाशयिष्यमाणस्तिग्मभावः पुनर्जनानावर्जयितुं करिष्यमाणा युधिष्ठिरस्य मार्दवप्रत्यापत्तिश्चानेन श्लोकेन प्रतीयत इत्यलं बहुना॥ २०॥

ननु मार्दवतिग्मभावसमयमनादृत्य यथाकामं द्विषद्वर्गनिग्रहं कुर्वाणो धार्तराष्ट्रः सर्वेषां राज्ञामुपरिस्थितः समग्रां श्रियमनुभवतीति दृष्टविरुद्धमिदं न्यायोपपादनमित्याशङ्क्याह — क्व चिरायेत्यादि।

---

१. 'तुद्वयेन' ख. पाठः. २ 'सा' ... ३ ... क. ग. ब. पाठः.

क्व चिराय परिग्रहः श्रियां
क्व च दुष्टेन्द्रियवाजिवश्यता ।
शरदभ्रचलाश्चलेन्द्रियै-
रसुरक्षा हि बहुच्छलाः श्रियः ॥ २१ ॥

चिराय श्रियां परिग्रहः क्व दुष्टेन्द्रियवाजिवश्यता च क्व । श्रियामिति कर्मणि षष्ठी । असाधारणे दारादिकर्मके स्वीकारे प्रसिद्धः स्वीकारमात्रे पर्यवस्यन्निह परिग्रहशब्दः स्त्रीलिङ्गवाच्यानां श्रियां भार्यात्वारोपं द्योतयति । चिरायेति परिग्रहविशेषणम् । दीर्घकालसम्बन्धीत्यर्थः । पृथक्त्वं द्योतयता श्रियामिति बहुवचनेन श्रियां सपत्नीवत् परस्परविरोधितया विभिन्नोपायरक्ष्यता द्योत्यते । इन्द्रियाणां वाजित्वरूपणेन बलवेगप्रकर्षो व्यज्यते । दुष्टशब्देनानर्थयोनित्वं द्योत्यते । वश्य इच्छानुविधायी तदधीनसर्वप्रवृत्तिरित्यर्थः । वश्यभावो वश्यता । पुरुषस्येत्यर्थात् सिध्यति । चकारः समुच्चयमन्वाचयं वा द्योतयन् द्वयोर्बहूनां वा एकक्रियाभिसंबन्धं द्योतयति । अत्र तु चकारेण द्योतितं श्रीपरिग्रहेन्द्रियाश्ववश्यत्वयोरेकाश्रयत्वं सप्तम्यन्ताभ्यां क्षिप्यते । श्रीपरिग्रहेन्द्रियाश्ववश्यत्वयोर्न सन्निकृष्टाश्रयतापि, कुत एकाश्रयत्वमित्यभिप्रायः । दुष्टेन्द्रियवाजिवश्ये सुयोधने श्रीपरिग्रहोऽस्तीति शङ्का चिरायेत्यनेन निरस्यते । तादृशे सुयोधने श्रीपरिग्रहोऽस्ति, स तु दीर्घकालसम्बन्धी नैव भविष्यतीति भावः । उक्तमर्थमुत्तरार्धेनोपपादयति—श्रियः चलेन्द्रियैः असुरक्षा हि । अकृच्छ्रार्थः सुशब्दः । अकृच्छ्रेण लघुप्रयत्नेन रक्ष्याः सुरक्षाः । न सुरक्षाः असुरक्षाः । शक्तिविकलस्य धनसहायादीनां दुर्लभतया श्रियामार्जनं दुष्करम् । परिपूर्णशक्तेरार्जितानां श्रियां रक्षा तु सुकरेति सम्भाविता श्रियां सुरक्षता नञा पर्युदस्यते । शरदभ्रचला बहुच्छला इति श्रीसंबन्धि विशेषणद्वयं श्रियामसुरक्षत्वहेतुं द्योतयति । पुरुषविशेषणं चलेन्द्रियैरिति । इन्द्रस्यात्मनो लिङ्गानि इन्द्रियाणि चलानि चपलानि येषां ते चलेन्द्रियाः, तैः । रजःप्रकृतीनि प्रतिविषयं प्रतिक्षणं चलानि चक्षुरादीनि इन्द्रियाणि तद्वतः पुरुषस्यास्वतन्त्रतां चपलतां चारोपयन्ति । अस्वतन्त्रतया चपलतया च परिच्छिन्नः पुरुषो जनै-

---

१. 'स्त्रीणां स' ख. पाठः. २. 'व्यज्यते' घ. पाठः

र्नाद्रियत इत्याद्यर्थविशेषश्चलेन्द्रियशब्देन द्योत्यते। अभ्रशब्दो मेघवचनः। शरदभ्राणि शरत्सम्बन्धीनि शरदि दृश्यमानानि शरदभ्राणि। शरदभ्राणीव चलाश्चपलाः शरदभ्रचलाः। वायुवशानामभ्राणामिव कर्मवशानां श्रियां नैसर्गिकं चलत्वं, जितेन्द्रियस्थिरपुरुषाश्रयाणां तु तासां प्रकृतिचपलानामपि प्रावृडभ्राणामिवानुकूलपवनाप्यायितानां फलपर्यवसायि स्थायित्वमस्तीति च शरदभ्रदृष्टान्तेन द्योत्यत एव। चेतनधर्मत्वेन प्रसिद्धं चलनं लक्षणया त्वचेतनासु श्रीष्वारोप्यते। श्रियां पुरुषवञ्चकवेश्यासादृश्यं व्यञ्जयितुं श्रियः पुरुषांस्त्यजन्तीत्युक्तिं प्रतीतिं च परिहृत्य श्रियां पुरुषत्यागहेतुधर्मविशेष इहच्छलशब्देन विवक्ष्यते। बहूनि छलानि यासां ताः बहुच्छलाः। चलेन्द्रियपुरुषकृताः सुहृद्विमाननाजनापरागप्रकृतिकोपाः श्रियां पुरुषत्यागोपायतया बहुच्छलशब्देन द्योत्यन्ते। श्रियां चलेन्द्रियैरसुरक्षत्वं दैत्यराक्षसादिश्रीष्वद्यतनपृथग्जनश्रीषु च सिद्धमेव, न संशयविवादविषय इति हिशब्देन द्योत्यते ॥ २१ ॥

एवं नयानुरोधिनः प्रशमस्योपादेयतां नयविरोधिनः साहसरूपस्य पराक्रमस्य हेयतां चोपपाद्य महामतिर्महीपतिर्द्विषद्विषयासमयरोषरूपितं सहोदरं सप्रशंसोपालम्भमनुशास्ति — किमसामयिकमित्यादिना।

> किमसामयिकं वितन्वता
> 
> मनसः क्षोभमुपात्तरंहसः।
> 
> क्रियते पतिरुच्चकैरपां
> 
> भवता धीरतयाधरीकृतः ॥ २२ ॥

अपां पतिर्भवता किमुच्चकैः क्रियते। अपां जलानां पतिर्भर्ता समुद्रः। भवता प्रशस्यतमेन त्वया। किमुच्चकैः[2] क्रियते किमुन्नतो निर्वर्त्यते। उच्चकैरुच्चैरित्यर्थः[3]। 'अव्ययसर्वनाम्नामकच् प्राक् टेः' (५. ३. ७१) इति स्वार्थिकोऽकच्प्रत्ययः। किमित्यव्ययमिहाक्षेपार्थे वर्तते। तेन भवता अपां पत्युरुच्चैःकरणं न युक्तमिति लभ्यते। अम्बुधेरुच्चैःकरणस्यायुक्ततामुपपादयति — धीरतयाधरीकृत इति। भवतेत्यनुषज्यते। भवतेति कर्तरि तृतीया।

1. 'दः अ' ख. पाठः. 2. 'दृ', 3. 'च्चैः कि' घ. पाठः.

थरितयेति करणे । अधरशब्दो नीचार्थः । त्वदुपज्ञमधरो निर्वर्तित इत्यर्थः । त्वयैवाम्बुधिर्जितो नान्येन केनचित् कदाचिदित्यभूततद्भावे विहितेन च्वि-प्रत्ययेन द्योत्यते । प्रकृतिस्थितिरूपमिहाम्बुधेर्धैर्यं विवक्षितं न चलनविरहः, अविरतचलदूर्मिपरम्परस्य तस्य तदसंभवात् । प्रकृतिस्थितिमात्रमम्बुधेर्धैर्यं, भ-वतस्तु चलनविरहः प्रकृतिस्थितिश्चेति समग्रं धैर्यमिति पर्याप्तधैर्येण त्वया-पर्याप्तधैर्योऽम्बुधिः पूर्वं जित एवेत्यभिप्रायः । प्रकृतिस्थितिरूपस्य धैर्यस्य फलं तत्तदाधिपत्यमिति द्योतयितुमपांपतिरित्युक्तं, न सिन्धुरित्यादि । अपां पतिरुच्चकैः क्रियत इति कथं ज्ञायत इति तत्राह —मनसः क्षोभं वितन्वतेति । मनसः सङ्कल्पादिवृत्तेरन्तःकरणस्य क्षोभं विकारं द्विषद्वधसंकल्पादिरूपं वित-न्वता विशेषेण कुर्वता विस्तारयता वा, चक्षुरादिषु व्यञ्जयतेत्यर्थः। वितन्वतेति शतृप्रत्ययेन क्षोभकरणस्य सातत्यं द्योत्यते । परस्मैपदेन क्षोभकरणस्य सम-यलङ्घनादिनिमित्ताधर्मरूपं फलं न वृकोदरैकसंबन्धि, सर्वपाण्डवसम्बन्धीति द्योत्यते । नन्वक्षुभिते मनसि कोपो नोत्पद्यते, कोपानुत्पत्तौ परिपन्थिनिरासाय प्रयत्नो न स्यादिति परिपन्थिनिरासहेतुर्मनसः क्षोभो गुण एव, न दोष इत्या-शङ्क्याह — असामयिकमिति । समयार्थः सामयिकः । 'विनयादिभ्यष्ठक्'(५. ४. ३४) इति तादर्थ्ये ठक्प्रत्ययः । न सामयिकोऽसामयिकः । पूर्वं स-भायां प्रतिश्रुतस्य समयस्य विरोधीत्यर्थः । स्वसमक्षं कृतं समयं विस्मृत्या-नादृत्य वा कथं तद्विरोधी क्षोभः क्रियत इति तत्राह — उपात्तरंहसेति उपात्तं भृशं गृहीतं रंहो वेगो येन स उपात्तरंहाः, तेन । संरम्भो हि स्वानुभूत-मपि वस्तु विस्मारयतीति भावः । वृकोदरस्य क्षोभकरणे संरम्भग्रहणे च क-र्तृतोक्त्या क्षोभनिवारणे संरम्भनिवारणे च स्वातन्त्र्यमस्तीति द्योत्यते ॥ २२॥

ननु समयधैर्यविरोध्यपि सरंभः क्षत्रियाणां न दूषणं, तस्य शत्रुदमन-साधनत्वात् । शत्रुदमनं विना सम्पद् दुष्प्रापेत्याशङ्क्याह — श्रुतमपीत्यादि ।

श्रुतमप्यधिगम्य ये रिपून्
विनयन्ते न शरीरजन्मनः ।
जनयन्ति चिराय सम्पदा-
मयशस्ते खलु चापलाश्रयम् ॥ २३ ॥

ये शरीरजन्मनो रिपून्न विनयन्ते, ते सम्पदामयशश्चिराय जनयन्ति खलु। शरीरे जन्म येषां ते शरीरजन्मानः, तान्। आत्माभिन्ने स्थूले सूक्ष्मे च शरीरे जातानाभ्यन्तरानतिसन्निकृष्टानित्यर्थः। चक्षुरादयः कामादयश्चेह रिपुशब्देन विवक्ष्यन्ते। चक्षुरादीनां कामादीनां च नापकारित्वमेव, उच्छेदकत्वमप्यस्तीति द्योतयितुं तेषां रिपुत्वमेवोक्तं, न रिपुसाम्यम्। विनयन्त इति। विकृतेर्निवर्तयन्तीत्यर्थः। शरीरादन्ये चक्षुरादयः कर्तृस्था विनयतेः कर्मेति 'कर्तृस्थे चाशरीरे कर्मणि'(१. ३. ३७) इति विनयतेरात्मनेपदम्। श्रुतमधिगम्यापीत्यन्वयः। श्रुताधिगमे कारणे सति विनयस्य कार्यस्य भावो विरुद्धतया प्रतिभातीति विरोधं द्योतयन्नपिशब्दो द्विगुणामविनीतेन्द्रियतां द्योतयति। अथवा श्रुतमप्यधिगम्येत्यन्वयः। श्रुतं शास्त्रश्रवणम्। अनुक्ता धैर्यविवेकादयो विनयहेतवोऽपिशब्देन समुच्चीयन्ते। स एव पर्यवसाने प्रतिपाद्योऽर्थः। अन्वय एव विशेषः। सम्पदां समृद्धीनां, स्वसम्बन्धिनीनामित्यर्थात् सिध्यति। अयशोऽकीर्तिं परिवादम्। जनयन्ति प्रागजातं जन्म लम्भयन्ति न तु जातं पोषयन्ति.। चापलमाश्रय आधारः कारणं यस्य तच्चापलाश्रयम्। एतदयश इत्यस्य विशेषणम्। कालदैर्घ्यद्योतकं चिरायेत्यव्ययं जनयन्तीत्यस्य विशेषणम्। पुनः कालान्तरे सम्पदां पुरुषान्तरसंबन्धेऽपि न स्वसंबन्धकाल एवेति चिरायेत्यनेन द्योत्यते। ये स्वसम्बद्धानामयशो जनयन्ति, ते कथमात्मनस्तन्न जनयेयुरित्यभिप्रायेणानुमानादिगम्योऽयमर्थः प्रत्यक्षासिद्ध एवेति खलुशब्देन द्योत्यते। एतदुक्तं भवति — अविनीतेन्द्रियाणां परिवादकरं चापलं भवति सम्पदश्चलन्ति च्यवन्ते चेत्येव न, कदाचित् स्वसंबन्धेन कृतचापलानां सम्पदां पुनः पुरुषान्तरसंबन्धेऽपि चापलसम्भावनया परिवादस्तदवस्थ एवेति। किञ्च कुरुसभायां छद्मद्यूतादिदोषदूषितेषु सपत्नेषु असदभिमुखीभूता लक्ष्मीस्तवाविनीततया चलितेत्ययमर्थोऽप्यनेनैव श्लोकेन द्योत्यते॥ २३॥

ननु मुमुक्षूणामिव महीभुजां कामादयो नैकान्तशत्रव इति ते कदाचिदुपकारिणोऽपि भवन्ति। सहजादयस्तु द्विषः सन्ततं तापकारिण एवेति तत्कृतपरिभवो न मर्षणीय इत्याशङ्क्याह — अतिपातितेत्यादिना।

---

१. 'क्षिताः। च' क. ग. घ. पाठः. २. 'कृ' ख. पाठः.

अतिपातितकालसाधना
स्वशरीरेन्द्रियवर्गतापिनी ।
जनवन्न भवन्तमक्षमा
नयसिद्धेरपनेतुमर्हति ॥ २४ ॥

अक्षमा भवन्तं नयसिद्धेरपनेतुं नार्हति । अक्षमाशब्देन द्विषत्कृतपरिभवासहिष्णुतेह विवक्ष्यते । नयसंबन्धिनी नयहेतुका सिद्धिः समग्रफलनिष्पत्तिर्नयसिद्धिः । अपादाने पञ्चमी । अपनेतुमिति । दूरं गमयितुमित्यर्थः । अक्षमा पुरुषं नयसिद्धेर्विश्लेषयतीत्येव न, पुनस्तद्योगस्य दुर्लभतां करोति चेति भावः । नार्हति न युज्यते। काल एव साधनं कालसाधनम् । अतिपातितमतिक्रमितमसत्कारितं कालसाधनं यया सा अतिपातितकालसाधना, कालः क्रियाफलसिद्धेः कारणमिति मन्यमानमेव पुरुषं संरम्भसूतिरक्षमा तस्यैव कालस्यासत्कारं कारयतीति भावः । स्वस्य शरीरस्येन्द्रियवर्गस्य च तापिनी स्वशरीरेन्द्रियवर्गतापिनी । ताच्छील्ये णिनिप्रत्ययः । स्वशब्दं विनापि शरीरस्येन्द्रियवर्गस्य च स्वकीयत्वे सिद्धे स्वशब्दोपादानेन शरीरस्येन्द्रियवर्गस्य च स्वकीयस्यैवाक्षमया तापः क्रियते न परकीयस्येति द्योत्यते । कालसाधनस्यावधूननेनाक्षमायाः सुखाहेतुत्वं स्वशरीरेन्द्रियवर्गतापनेन दुःखहेतुत्वं द्योत्यते । शरीरशब्देन वर्गशब्देन च शरीरैकदेशस्य कस्यचिदिन्द्रियस्य वा क्षमया न बाधः क्रियते, किन्तु कृत्स्नस्य शरीरस्य सर्वेषामिन्द्रियाणां चेति सूच्यते। परिभवासहिष्णूनां बलवतामक्षमया रिपुक्षपणादिसिद्धिर्भवन्त्यपि दूरं तवेति द्योतयितुं नयेन सिद्धिर्विशेषिता । नयहेतुकैव सिद्धिः प्रशस्यते, न सिद्धिमात्रमिति भावः । ननु सर्वेऽपि जनाः सपत्नकृतं परिभवं न सहन्त इति जनैरादृतत्वादक्षमा न दोष इति तत्राह — जनवदिति । जनशब्देन श्रुतविवेकादिरहितो जन्ममात्रसंस्कृतः प्राणिसमूह इह विवक्ष्यते । वतिस्त्वौचित्यवशेन वैधर्म्यदृष्टान्ते पर्यवस्यति । जन्ममात्रसंस्कारमन्धबधिरकल्पं प्राकृतं जनमक्षमा नयसिद्धेर्दूरं गमयतीत्येतत् तमिस्रा गुहां छादयतीतिवद् उचितमेव। त्वां तु प्रशस्यतरं श्रुतविवेकादिसम्पन्नमक्षमा नयसिद्धेरपनयतीत्येतत् सूर्यं

१. 'साधनमि...' ... 'क्षमा' क. ग. घ. पाठः.

तमश्छादयतीतिवद् अत्यन्तं न संभवतीति भावः। 'शकधृष—'(३. ४. ६५) इत्यादिना भावमात्रे तुमुन्प्रत्ययः। तेनापनेतुमित्यस्यापनय इत्यर्थः सिध्यति। अव्ययानां सार्वविभक्तिकत्वात् सप्तम्यर्थ इह विवक्ष्यते। 'कृन्मेजन्तः' (१. १. ३९) इति तुमुनोऽव्ययत्वम्। 'न लोक—' (२. ३. ६९) इत्यादिना कृद्योगे षष्ठ्या निषेधः॥ २४॥

नन्वक्षमा पुरुषस्योत्साहहेतुतया द्विषद्वधादि फलं जनयत्येव, तस्याः स्वन्तता न निश्चितेत्येष एव दोषः। क्षमा तूत्साहविघातिनी किं फलमभिप्रेत्योपास्यत इत्याशङ्क्याह — उपकारकमित्यादिना।

उपकारकमायतेर्भृशं
प्रभवः कर्मफलस्य भूरिणः।
अनपायि निबर्हणं द्विषां
न तितिक्षासममस्ति साधनम्॥ २५॥

तितिक्षासमं साधनं नास्ति। क्रियाफलसिद्धेः कारणं साधनशब्देनेह विवक्ष्यते। बहुसाधनसाध्यबहुफलनिर्वर्तकतया प्रकर्षातिशयं द्योतयितुं साधनं बहुभिर्विशेषणैः विशिनष्टि — आयतेर्भृशमुपकारकं, वंशजन्माधिपत्यप्राप्तिरूपसम्बन्धायत्तं दीर्घकालव्यापि सिद्धं फलमायतिशब्देनोच्यते। पराक्रमेणायतेरुपकारः। ततोऽधिकतरं तस्या उपकारं कुर्वदित्यर्थः। आयत्युपबृंहकमिति लभ्यते। आयतेः सिद्धतया उपकार एवापेक्षा न निष्पत्तावित्युपकारकमित्युक्तं न कारकमिति। भूरिणः कर्मफलस्य प्रभव इति। बह्वर्थो विपुलार्थश्च भूरिशब्दः। इहोभयं तन्त्रेणावृत्त्या वा विवक्ष्यते। कर्मणः क्रियायाः पराक्रमादिरूपायाः फलं निर्वर्त्यं प्रयोजनं कर्मफलं तस्य प्रभव उत्पत्तिकारणम्। लोकसिद्धं फलकर्मणोर्जन्यजनकभावसम्बन्धं कर्मफलशब्देनानूद्य तमपह्नोतुं प्रभव इत्युक्तं, न करणमिति। यथा प्राणप्रवृत्तिप्रयोजितमेव परशूद्यमननिन्धनदलनसाधनं, तथा विशिष्टसाधनान्तरप्रयोजितमेव पराक्रमादिकर्म साम्राज्यलाभादिफलसाधनमिति भावः। द्विषां शत्रूणां निबर्हणमुच्छेदकरम्। अपायोऽपगमः तद्युक्तमपायि, तद्विपरीतमनपायि, स्थायीत्यर्थः[१]। बहुसाधनापेक्षं पराक्रमादि कर्म न चिरं तिष्ठति। बुद्धिगुणमात्रापेक्षः साधनविशेषस्तु नैवमिति भावः। अथवा अनपायीत्यस्यान्योऽर्थः। अपायस्योपप्लवस्य व्यसनस्य सम्बन्धि अपायि[२]। हेतु-

१. 'इत्यमि' ख. पाठः. २. 'यं स्थायी हे' क. ग. घ. पाठः.

हेतुमद्भाव इह सम्बन्धो विवक्षितः । अपायहेतुरित्यर्थः । तद्विपरीतमनपायि । परोच्छेदकर एव पराक्रमः कदाचित् कर्तुरप्युपप्लवं कुर्यात् । इदं तु साधनं नैव-मिति भावः । आयतेः स्थायिफलस्योपकारः प्रथमं प्रार्थ्यते । पुनर्भोगस्य त-दात्वफलस्योत्पत्तिर्द्विषदुच्छेदं विना द्वयोः फलयोर्दुरवापत्वेन सोऽप्यपेक्षित इति क्रमोक्त्या द्योत्यते । ईदृग्गुणं साधनं तितिक्षासमं नास्तीत्युक्तं, न त्वीदृग्गुणा सिद्धा तितिक्षा फलसिद्धेः साधनमिति । ईदृग्गुणं साधनं तितिक्षाया अधिकं मा भूत्, समं तु यद्यस्ति तर्हि तदपहाय कुतोऽस्यां पक्षपात इति प्रतीतिर्मा भू-दिति द्योत्यते । आयत्युपकारकत्वादिगुणविशिष्टा क्षत्रियसम्बन्धिनी ति-तिक्षा समीचीनप्रवृत्तिहेतुरेव, न मुमुक्षुतितिक्षावत् प्रवृत्तिविघातिनीत्यस्मद-नुष्ठीयमानायाः क्षमायाः प्रवृत्तिविघातकत्वादयो दोषा नाशङ्कनीया इत्यभि-प्रायः । 'गुप्तिज्किद्भ्यः सन्' (३. १. ५) इति तिजिधातोः सन्प्रत्यये सति ति-तिक्षेति रूपम् । घृणाक्षमाभिषज्यासु गुपादिभ्यस्सन्प्रत्ययः ॥ २५ ॥

नन्वक्षमाया दोषवत्त्वं क्षमाया गुणवत्त्वं चोक्तमस्त्येव, किं त्वस्मासु वन-वासनिरतेषु यदुपाञ्चालादयोऽस्मत्सुहृदः सर्व एव धार्तराष्ट्रं सम्राजमाश्रयेरन्नि-[3]त्याशङ्कयाह — प्रणतीत्यादिना ।

प्रणतिप्रवणान् विहाय नः
सहजस्नेहनिबद्धचेतसः ।
प्रणमन्ति सदा सुयोधनं
प्रथमे मानभृतां न वृष्णयः ॥ २६ ॥

वृष्णयः सुयोधनं न प्रणमन्ति । वृष्णिशब्दः स्वाभिधेयसमवेतानैकम-त्यशक्तिप्रतापप्रकर्षादीन् द्योतयति । सुयोधनशब्दः स्वाभिधेयाविनाभूतां वी-र्यशौर्यादिप्रतापाल्पतां द्योतयंस्तस्य परपरिभवाशक्तिं द्योतयति । प्रणमन्ती-ति । प्रसादनाय प्रह्वा भवन्तीत्यर्थः । मानभृतामिति । अप्रह्वताहेतुमहङ्कारं बिभ्रतामित्यर्थः । प्रथमे अग्रिमाः प्रधाना इत्यर्थः । ननु सम्राट्प्रसादायत्तानि मण्डलिनां प्रभुत्वादिप्रयोजनानीति प्रयोजनसिद्धये मानिनोऽपि वृष्णयः सम्रा-जं कुरुपतिं प्रणमेयुरिति तत्राह — सदेति । सदेत्यनेन विशेषिता प्रणामाक्रि-

१. 'राप', २. 'न', ३. 'न्निति शङ्कायामाह' क. ग. घ. पाठः

या नञा निषिध्यते न सदा प्रणमन्तीति । यद्यपि वृष्णीनां कार्यवशेन कुरुराजसुतं प्रति कदाचित् प्रणतिः स्यात्, तथापि सा न शाश्वतीति भावः । ननु सम्राट्प्रसादायत्तानि मण्डलिनां सदा कार्याणि भवन्तीति तेषां तस्मिन् प्रणतिः शाश्वतीत्याशङ्क्याह — विहाय न इति । नः अस्मान् साम्राज्याधिकृतान् विहाय विशेषेण हित्वा । त्रिगर्तादिवत् सुयोधनपक्ष्यतां प्राप्येति लभ्यते । यदा प्रणतिमात्रं शक्यते, तदा प्रयुक्तेन नञा तन्निषिध्यते । यदा तु सातत्यविशिष्टापि पाण्डवविहानविशिष्टा वा प्रणतिः शक्यते, तदा त्वनुक्तेन नञा तादृशी प्रणतिर्निषिध्यत इत्यवगन्तव्यम् । प्रणतिप्रवणानिति । स्वशब्दोपस्थापिता वृष्णयः कर्तृतया प्रणतिसम्बन्धिन इति प्रतीयते । वृष्णीनां प्रणतौ प्रवणान् अनुगुणान् प्रणतिमयं माननं प्रतिमाननैरभिनन्दत इत्यर्थः । सहजेनात्मना सहजातेन स्वाभाविकेन प्रेम्णा स्नेहातिशयेन निबद्धं नित्यं कलितं चेतः मनः येषां ते सहजप्रेमनिबद्धचेतसः । एतत्पदं न इति वृष्णय इत्यनयोर्विशेष्ययोर्विशेषणत्वेनावृत्त्या योजनीयम् । अर्थौचित्यं शब्दैकरूपता चावृत्तिकल्पने हेतुः । तेन वृष्णयः पाण्डवाश्च नैसर्गिकस्नेहातिशययुक्ता इत्यर्थः सिध्यति । तमेव नैसर्गिकं स्नेहातिशयं माननैः प्रतिसम्माननैश्च ते परिपुष्यन्तीति प्रणतिप्रवणशब्देन द्योत्यते । नैसर्गिकस्नेहगौरवमानवशा अस्मदुत्थानप्रतीक्षिणो वृष्णयः सम्प्रति सुयोधनेन स्वयं न विगृह्णन्तीत्येतावता तेषां तस्मिन् प्रणामपक्षपातो वा न शङ्कनीय इति भावः ॥ २६ ॥

ननु समुद्रकुक्षिसंश्रयाः संघातवृत्तयो मानिनो वृष्णयः कामं सुयोधनं न संश्रयेरन्, अन्ये तु मात्स्यकेकयादयोऽस्मत्सुहृदः सम्राजं कुरुपतिमवश्यमाश्रयन्त इत्याशङ्क्याह — सुहृद इत्यादिना ।

सुहृदः सहजास्तथेतरे
मतमेषां न विलङ्घयन्ति ये ।
विनयादिव यापयन्ति ते
धृतराष्ट्रात्मजमात्मसिद्धये ॥ २७ ॥

इतरे सहजाः सुहृदस्तथा धृतराष्ट्रात्मजं विनयादिव यापयन्ति । यथा वृष्णय इति शेषः । इतरशब्दोऽन्यार्थः । वृष्णीनां प्रस्तुतत्वात् तेभ्य इतर इति सिध्यति । अथवा सहजाः सुहृद इत्यादावन्वयेऽवासिते तथेतर इत्याद्य-

-न्वयान्तरमवगन्तव्यम् । तथा सहजेभ्य इतरे कृत्रिमाः सुहृद इत्यर्थः सिध्यति । एषां वृष्णीनां सहजानां सुहृदां वा मतमभिप्रायं न विलङ्घयन्ति न विमत्या अतिक्रामन्ति त इत्यन्वयः । यापयतिर्विकारनिवारणे वर्तते । यापयन्ति ईर्ष्यारोषादिविकारेभ्यो निवर्तयन्ति शमयन्ति, वशीकुर्वन्तीत्यर्थः । विनयादिति हेतौ पञ्चमी । इवशब्दो विनयस्यापरमार्थतां द्योतयति । अपारमार्थिकादारोपिताद् विनयादित्यर्थः । आरोपितेन विनयेन कथं कुरुराजो वशीक्रियत इति शङ्का धृतराष्ट्रात्मजपदेन निरस्यते । जात्यन्धः सन् आम्बिकेयो भीष्मादिकृतया गुप्त्या धृते राष्ट्रे जातेन मया धृतं राष्ट्रमित्यमन्यत । ततस्तदात्मजः स्वबाहुबलेनाविजितानपि नृपतीन् प्रणतिप्रकाशनमात्रेण विनीतवदवभासमानान् विजितानात्मवशानेव मन्येतेत्यभिप्रायः । असत्सुहृदस्ते नृपतयः किमर्थं कृत्रिमेण विनयेन तं वशीकुर्वन्तीति तत्राह — आत्मसिद्धय इति । संघातसंबन्धास्तेषां सिद्धयः संघातमात्रैापेक्षा इति तदर्थं ते सम्राजमपि सुयोधनं नापेक्षन्ते । एकैकसंबन्धास्तु प्रातिस्विकप्रयत्नसाध्याः सिद्धयः सम्राजः प्रसादं विना दुर्लभा इति तदर्थमेव ते कुरुराजसुताय सुयोधनाय विनयं प्रकाशयन्तीति द्योतयितुम् आत्मसिद्धय इत्युक्तं, न सिद्धय इत्येव । असत्सुहृदां नृपतीनामसत्सपत्ने सुयोधने क्षणिकप्रयोजनसिद्धये क्षणिको विनयो यद्यपि सम्भवति, तथापि तेषां तस्मिन् गौरवमनुरागो वा नैव भवेदिति तात्पर्यार्थः ॥ २७ ॥

ननु यदुपञ्चालादयोऽसत्सुहृदोऽसदनुरक्ततरा यदि सुयोधनस्य वशं न गच्छन्ति, तर्हि त्वरितमेवास्माभिः सुयोधनं प्रत्यभियोगः कर्तव्य इति शङ्कायामाह—अभियोग इत्यादिना ।

अभियोग इमान् महीभुजो
भवता तस्य कृतः कृतावधेः ।
प्रविघाटयिता समुत्पतन्
हरिदश्वः कमलाकरानिव ॥ २८ ॥

भवता कृतः तस्याभियोग इमान् महीभुजः प्रविघाटयिता । जेतव्यं प्रति सेनया अभियानम् अभियोगः । भवतेति प्रशस्यतमेन धर्मन्यायानुवर्तिना त्वये-

१. 'न्ति ब', २. 'न्यत इत्य' क. पाठः. ३. 'त्री', ४. 'दानं वि', ५. 'वा' ख. पाठः.

त्यर्थः। श्रुत्या स्मृत्या वा चोदितः आद्यैरद्यतनैर्वा शिष्टैराचरितः समयमध्ये सपत्नाभियोगो भवता नोक्तः। किन्तु श्रुतिस्मृतिशिष्टाचारानवधीर्येदम्प्रथमं त्वया कल्पितोऽयमिति द्योतयितुं कृत इत्युक्तं नोक्त इत्यादि। तस्येति कर्मणि षष्ठी। तच्छब्देन प्रकृतो धृतराष्ट्रात्मजः परामृश्यते। तस्य विशेषणं कृतावधेरिति। कृतो निर्वर्तितः कल्पित अवधिर्वनवासादिसमयस्य परिसमाप्तिकालः येन स कृतावधिः, तस्य। स एव नैकृतिकः सुयोधनः स्वयं जितस्य सपत्नसाम्राज्यस्य प्रतिपादनाय न्याय्यं समयावधिं कृतवान्। स एव प्रशस्यतरो धार्मिको वृकोदरः कुरुसभायां प्रतिश्रुतस्य समयस्य मध्य एव दायादान् प्रत्यभियोगं कृतवान्। किमत्र वक्तव्यमिति जनोपालम्भस्तच्छब्दभवच्छब्दाभ्यां प्राधान्येन ध्वन्यते। समुत्पतन् समन्तत उद्गच्छन्, प्रकटीभवन्नित्यर्थः। अभियोगविशेषणमेतत्। इमान् अस्मत्सन्निहितान् यदुमात्स्यादीनित्यर्थः। महीभुजः भूपालान् धार्मिकानित्यर्थः। प्रविघाटयिता विश्लेषयिता। प्रशब्देन विश्लेषस्य प्रकर्षो द्योत्यते। यथा पुनरमी महीभुजोऽस्मास्वादरप्रत्ययवन्तो न स्युः, तथैषामस्मत्तो विश्लेषं कर्तेत्यर्थः। अयं घटिश्चुरादिषु पठ्यते, न भूवादिषु। तेन मित्संज्ञाभावान्न णिचि ह्रस्वत्वम्। भवता कल्पितं निरस्तसमयमधर्म्यं कुरुकुलकदनोद्यमं निशम्य क्रमेण तद्वार्ताया वास्त(व ? वा)विषयतां प्रतीत्य धार्मिकगृह्या गुरुमतयस्ते नरपतयो धर्मपथच्युतानस्मान् निश्चित्य पश्चादौदासीन्यरूपमस्मत्तो विश्लेषं गमिष्यन्तीत्ययमर्थोऽनद्यतनभविष्यद्विषयेण लुट्प्रत्ययेन द्योत्यते। अभियोगस्य महीभुजां विश्लेषणे प्रयोजकत्वमुक्तं, न हेतुत्वमात्रम्। तेन स्वतोऽस्मदनुकूलानिमान् महीभुजोऽस्माकमपनयः पराङ्मुखीकुर्यादिति द्योत्यते। अयमभियोगोऽन्यनिरपेक्ष एवासदतिश्लिष्टानामेषां महीभुजां विश्लेषणे स्वयं समर्थ इत्यत्र दृष्टान्तमाह — कमलाकरान् हरिदश्व इवेति। आकरशब्दः समूहार्थः प्रभवार्थो वा। तेन पद्मसमूहाः, पद्मोत्पत्तिस्थानानि सरांसि वोच्यन्ते। अवयवानां दलानां विश्लेषणमवयविषु कमलाकरेषूपचर्यते। महीभुजां विश्लेषस्तदङ्गानां युवराजादीनां विश्लेषेणाभिव्यज्यत इति द्योतयितुं परिस्फुटावयवविश्लेषः कमलाकरदृष्टान्ते उपन्यस्तः। यथा जलनिधिनिगूढोऽर्को जवनतरैर्हरिद्भिरश्वैर्वाह्यमानः क्षणेनैव निखिलनेत्रपदवीमवतरति, तथा

---

१. 'हृद्यागु', २. 'न', ३. 'पु चोप', ४. 'लनिगू' घ. पाठः.

भवदाशयनिगूढोऽयं सुयोधनाभियोगो जनवक्त्रपरम्पराभिर्वाह्यमानः क्षणेनैव निखिलश्रोत्रपदवीमवतरतीत्यमुमर्थं द्योतयितुं हरिदश्व इत्युक्तं. नाहिनांशुरित्यादि । समुत्पतन्निति पदं हरिदश्वस्यापि विशेषणत्वेन योजनीयम् । समुत्पतन्निति वर्तमानप्रत्ययेन महीभुजां कमलाकराणां च विश्लेषस्याविलम्बितत्वं द्योत्यते । रश्मिसंबन्धद्वारको हरिदश्वस्य कमलाकरैः सम्बन्धो रजन्या व्यवधीयते । अभियोगस्य श्रवणस्मरणद्वारको नराधिपैः सम्बन्धस्तु केनापि न व्यवधीयत इति हरिदश्वादभियोगस्य व्यतिरेकं व्यञ्जयितुं रूपकमनादृत्योपमोपन्यस्ता । अस्माकं धार्मिकतां सुयोधनस्याधार्मिकतां चावधार्यास्मासु निबद्धभावास्ते महीभुजो धर्मपथच्युतांस्तान् विहास्यन्तीति तात्पर्यार्थः ॥ २८ ॥

ननु तेजस्विनः सहजसुहृदो ये यदुपञ्चालादयोऽस्माकं वनवासारम्भे स्वयमेव सुयोधनं प्रत्यभियोक्तुकामा मानयद्योधनैरस्माभिः कथञ्चिन्निवर्तिताः, ते पुनरस्माभिर्व्यवसिते सपत्नाभियोगे परं प्रीयेरन् । विमुक्तविक्रमव्यवसायेषु वनस्थेषु त्वस्मासु विप्रकर्षक्रमापन्नितस्नेहसाराः सम्मानादिविधायिना सुयोधनेन वशीक्रियमाणास्तत्पक्ष्याः स्युरित्याशङ्क्याह—उपजापेत्यादिना ।

उपजापसहान् विलङ्घयन्
स विधाता नृपतीन् मदोद्धतः ।
सहते न जनोऽप्यधःक्रियां
किमु लोकाधिकधाम राजकम् ॥ २९ ॥

स नृपतीनुपजापसहान् विधाता । नृपतीन् नृणां मनुष्याणां पतीन् ईश्वरानित्यर्थः । तेन तेषामादरणीयता द्योत्यते । उपजापस्य भेदस्य सहान् मर्षकान् । विधाता करिष्यतीत्यर्थः । स्नेहरागापनयनरूपो भेदविशेष उपजापशब्देनोच्यते । विलङ्घयन् विशेषेणातिक्रामन् दासादिवदधःकुर्वन्नित्यर्थः । हेतौ शतृप्रत्ययः । तस्य दोष एव नृपतीनां विलङ्घने हेतुः, न तेषां दोष इत्याह — मदोद्धत इति । मदेन उद्धत उद्रिक्तः, आविष्कृतविकृतिरित्यर्थः । अभीप्सितप्राप्तिजन्मा कृतार्थताप्रतीतिहेतुरात्मादरपरतिरस्कारकारी हर्षवि-

१. 'ति । स' २. 'समुद्गत' क. ग. घ. पाठः ३. 'च्वस्मा' ख. पाठः.
४. 'निराकार' घ. पाठः.

शेषो मदः। नृपतीनिति बहुवचनेन समस्तानां नृपतीनां तेन विलङ्घनं न व्यस्तानामिति द्योत्यते। यद्यप्यनेन संमानदानाभ्यां वशीकृता नृपतयः सम्प्रति परोपजापं न सहन्ते, तथापि पश्चात् तेनैव कृतार्थेन तिरस्क्रियमाणाः परैर्भेद्याः स्युरिति विधातेति लुट्प्रत्ययेन द्योत्यते। ननु स्वामिना विलङ्घनं भृत्याः सहन्ते, सार्वभौमेन मण्डलिन इति तद्विलङ्घनमात्रेण कथं नृपतीनां भेद्यत्वमित्याशङ्क्याह — सहत इत्यादि। जनोऽप्यधःक्रियां न सहते। राजकं किमु। सहत इत्यनुषज्यते। धामरहितः प्राकृतः प्राणिसमूहो जनशब्देनेह विवक्ष्यते। सोऽप्यधःक्रियाम् अर्वाक्कृतिं स्वोचिताधिकारादर्वाक्पदलम्भनम्। न सहते न मृष्यते। राजकं किमु सहते। राजसमूहो राजकम्। किमुशब्दोऽसम्भावनां द्योतयति। राजसमूहोऽधःक्रियां सहत इति कै[२]व सम्भावनेति भावः। तत्र हेतुमाह — लोकाधिकधामेति। लोकादधिकमतिरिक्तं विशिष्टं धाम यस्य तल्लोकाधिकधाम। सजातीयादेवाधिक्यं न्यूनता वा सर्वस्य प्रतिपाद्यते, न यतः कुतश्चिदिति भुवनवाचिना लोकशब्देन लोकगतं तेजो लक्ष्यते तस्य नित्यानुषक्ततां दिव्यतां च द्योतयितुम्। तथाच गीतासु — "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" (अ० १०. श्लो० ४२) इति। तेजसा लोकोत्तरत्वं च नराधिपस्य गीतास्वेव गम्यते, 'नराणां च नराधिपमि'ति। नराधिपस्यैकैकस्यैव तेजो लोकतेजोधिकं, किं पुनर्नृपतिसमूहस्य तेज इति द्योतयितुं राजकमित्युक्तं, न राजेत्यादि। अथवा लोकादधिकधाम राजकमित्युक्त्यैव लोकस्य धामवत्त्वमाक्षिप्यत इति धामवदिति विशेषणं न कृतम्। सामान्याधःकृतिहेतुकः सामान्यप्रयोजननिर्वर्तको राज्ञामेकः सङ्घातोऽस्तीति राजकमित्यत्र समूहार्थेन प्रत्ययेनैकवचनेन च व्यज्यते। 'पञ्चमी भयेन'(२. १. ३७) इत्यत्र पञ्चमीति योगविभागेन लोकाधिकधामेति समासः। 'गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद् वुञ्'(४. २. ३९) इति समूहार्थे वुञ्प्रत्ययः॥ २९॥

ननु सुयोधनो गुणानुरूपान् नृपतीन् मानयतीति चैरेणोक्तम्। तत् कथं तेन नृपतीनां विलङ्घनं तत्कृतं तेषाम् उपजापसहत्वं वा भविष्यतीति शङ्क्यत इत्याशङ्क्याह — असमापितेत्यादिना।

---

१. 'ति व्यज्य' क. ग. घ. पाठः. २. '[illegible]' ग. पाठः. ३. 'ह्वि' घ. पाठः.

असमापितकृत्यसम्पदां
हतवेगं विनयेन तावता।
प्रभवन्त्यभिमानशालिनां
मदमुत्तम्भयितुं विभूतयः ॥ ३० ॥

विभूतयः अभिमानशालिनां मदमुत्तम्भयितुं प्रभवन्ति। विभूतयः विविधाः समृद्धयः। अभिमानशालिनाम् अभिमानेन श्लाघनशीलानाम्। अभिमानो न दोषः, गुण एवेति व्यवस्यतामित्यर्थः। मदं कृतार्थम्मन्यताहेतुं भावविशेषम्। उत्तम्भयितुम् उन्नमयितुम्। प्रभवन्ति शक्नुवन्ति। उत्पूर्वः स्तम्भिः जाड्यमान्द्यापोहकृते बलवेगोच्छ्रये वर्तते, तस्य णिजन्तस्य तुमुन्प्रत्यये सति रूपम्। उन्नतबलवेगं कर्तुमित्यर्थः सिध्यति। 'उदः स्थास्तम्भोः पूर्वस्य' (८. ४ ६१) इति सकारस्य तकारादेशः। विनयवता व्यपेतमदेनैव विभूतयो लभ्यन्त इति कथं विभूतिभिर्मदोत्तम्भनमित्याशङ्कयाह— तावता विनयेन हतवेगमिति। विनयेन इन्द्रियशमेन हतवेगं हिंसितरयम्। तावतेति यत्परिमाणेन विनयेन विभूत्युदयः तत्परिमाणेनेत्यर्थः। परिच्छिन्नेन कृत्रिमेण विनयेन मदस्य वेगनिरोध एव क्रियते, न स्वरूपविघातः। तेन निरुद्धवेगो मदो निरोधकारिणं विनयं नदीप्रवाहः सेतुमिव विभिद्य पुनः परितः प्रसरत्येवेति भावः। विनयेन मदवेग एव निरुध्यते, न मद इति कथमवसीयत इति तत्राह— असमापितकृत्यसम्पदामिति। कृत्यानां कर्तव्यानां तन्त्रावापरूपाणां कर्मणां सम्पत् समृद्धिः समष्टिकृत्यसम्पत् असमापिता अनिष्ठापिता कृत्यसम्पद् यैः ते असमापितकृत्यसम्पदः तेषां, क्रियास्वन्तराले विरतानामित्यर्थः। अथवा कृत्यशब्देन क्रुद्धलुब्धादयो भेद्या विवक्ष्यन्ते। सम्पच्छब्दः समूहार्थे पर्यवस्यति। क्रुद्धादीनां कृत्यवर्गाणां क्रोधादिदोषापनयनेनात्मनः संश्लेषणं समापनं, तदकृतवतामित्यर्थः। कृत्यसम्पदसमापने हेतुरभिमानशालित्वम्। अभिमानिनो हि सर्वप्रयोजनान्यल्पप्रयत्नसाध्यानि सर्वपुरुषांश्च स्वप्रसादमात्रविधेयानवधारयन्तः क्रियामध्योपजातैः प्रयोजनैर्गूढाशयानां कुद्धादीनां कृत्यानां कृत्रिमेण विनयेन च प्रतार्यमाणाः क्रियाप्रबन्धं कृत्यसंश्लेषणं च यथावन्नानुतिष्ठेयुरित्यभिप्रायः। अयं श्लोकः सामान्यविषयो विशेषा-



१. 'स्तम्भोर्दिः जा' ब. पाठः. २. 'स्वय' क. ग. ब. पाठः.

काङ्क्षी प्रकरणवशेन सुयोधने पर्यवस्यति । ननु 'कृतारिषड्वर्गजयेन' (स० १. श्लो० ९) इत्यादिना 'स वेद निश्शेषमशेषितक्रियः'(स० १. श्लो० २०) इत्यन्तेन च चरवाक्येन सुयोधनस्य विनयप्रकर्षः कृत्यसम्पत्समापकत्वं च प्रतीयते । तत् कथमनेन श्लोकेन तद्विपरीतोऽर्थः प्रतिपाद्यत इति चेदुच्यते । पौरजानपदेष्व- नुकूलेषु तदानुकूल्यसम्पादनाय सुयोधनेन प्रयत्नसम्पादितं विनयं कृत्यसमापनं च पश्यतश्चरस्य तद्वचनं, तेषु पुनरनुकूलेषु विजृम्भितविभूतेर्मानिनस्तस्य भवि- ष्यन्मदविजृम्भणमुत्पश्यतो युधिष्ठिरस्येदं वचनमिति न विरोधः । क्रोधफले सपत्नपरिभवे सति मानः श्लाघ्य एव भवति, लोभफले विभूतिलाभे मद इति मानमदयोर्दोषत्वाप्रतीतिहेतुर्लोकसिद्धः । इह तु पाण्डवानां सपत्नानां परि- भवो दासीकरणादिरूपः सदसि तत्र सुयोधनस्य मानश्लाघ्यतावगमहेतुः, विभूतिलाभो मदविजृम्भणहेतुरित्यनेन श्लोकेन द्योत्यते ॥ ३० ॥

ननु विभूतिलाभसम्भवो मदः शत्रुपरिभवकृतो मानश्च सुयोधनस्य काममा- विर्भवतु । तावता तस्य प्रभावच्युतिकरी का क्षतिरित्याशङ्क्याह —मदमाने- त्यादिना ।

मदमानसमुद्धतं नृपं
न वियुङ्क्ते नियमेन मूढता ।
अतिमूढ उदस्यते नया-
न्नयहीनादपरज्यते जनः ॥ ३१ ॥

मदमानसमुद्धतं नृपं मूढता नियमेन न वियुङ्क्ते । मदमानाभ्यां समन्तादुद्ध- तमुद्धतमुच्छृङ्खलं वागादिषु चक्षुरादिषु चेन्द्रियेषु सुव्यक्तानिवार्यविकारमित्यर्थः। नृपं मनुष्यादिप्राणिरक्षणाधिकृतं राजानमित्यर्थः । मूढता विचित्तता अज्ञानम- न्यथाज्ञानं च नियमेनैकान्तेन न वियुङ्क्ते न रहयति । नृपो हि नृणां विनयाधाना- दिरूपं रक्षणं करोति, नृपस्य नान्य इति मदमानसमुद्धतस्य नृपस्य मूढता न जात्वपचीयते। प्रत्युत क्रमेणोपचीयत एवेति नृपशब्देन द्योत्यते। मूढतया नि- यन्त्रितो नृपः परतन्त्रः कदाचिदपि तां रहयितुं न शक्नोतीति नृपकर्तृकस्य रहणस्य न प्राप्तिः । मूढता तु स्वतन्त्रा स्वनियन्त्रितं नृपं रहयितुमपि श-[२]

१. 'श्रतास्वीन' घ. पाठः. २. 'पि न श' क. ख. ग. पाठः.

क्नोति। किन्तु स्वनियम्यतादृशपुरुषान्तरादर्शनात् तं न रहयतीति द्योतयितुं मूढता नृपं न वियुङ्क्ते इत्युक्तं, न तु नृपो मूढतां न वियुङ्क्ते इति। अतिमूढो-ऽतिशयेन विचित्तः मोहैकतन्त्रः नयादुचितोपायज्ञानसाधनाद् बुद्धिविशेषादु-दस्यते पृथक्क्रियते। पृथक्करणस्य सौकर्यविवक्षया कर्मकर्तरि लकारः। नयही-नाद् नयरहितात्। जनो लोकः। अपरज्यते। अपपूर्वो रञ्जिर्द्वेषहेतुमुद्वेगं वदंस्त-द्धेतुके पृथक्करणे पर्यवस्यति। अत्रापि कर्मकर्तरि लकारः। नयहीनो नृपः श-क्याशक्योचितानुचितादिविभागानभिज्ञो जनानां प्रतिकूलान्याचरन् पूर्वानु-रक्तानामपि द्वेष्यतां प्राप्नोतीत्यभिप्रायः। बुद्धिकर्तृकावगमरूपयोरुदसनापर-ञ्जनक्रिययोरवधेर्नयस्य नयहीननृपस्य चाविकृतध्रुवत्वादपादानत्वमस्तीति 'अ-पादाने पञ्चमी' (२. ३. २८) इत्युभयत्र पञ्चमी ॥ ३१ ॥

एवं मदमानयोर्जनापरागपर्यवसायित्वमुक्तम्। अथेदानीं जनापरा-गस्य दुरन्ततामुपपादयति — अपरागेत्यादिना।

अपरागसमीरणेरितः
क्रमशीर्णाकुलमूलसन्ततिः।
सुकरस्तरुवत् सहिष्णुना
रिपुरुन्मूलयितुं महानपि ॥ ३२ ॥

अपरागसमीरणेरितो रिपुः सहिष्णुना उन्मूलयितुं सुकरः। समीरणो वायुः, अपराग एव समीरणः अपरागसमीरणः, तेन ईरितो नुन्नः तदधीन इत्यर्थः। अपरागस्य बलवेगातिशयं द्योतयितुं समीरणत्वरूपणं कृतं, न समी-रणसाम्यमात्रमुक्तम्। समीरणशब्दो वायोः समन्तान्नोदकत्वं द्योतयन् वायुत्वे-न रूपितस्यापरागस्यापि द्योतयति। समुचितसामाद्युपायानुरञ्जिता जना नृ-पस्याभिमतकरणे नियोगानुसरणे चावतिष्ठन्ते। दण्डकार्कश्यादिभिर्नृपस्य दोषै-रपरञ्जितास्तु प्रतिकूलाचरणेनाज्ञालङ्घनेन च नृपस्य प्रभवं विघ्नन्ति। प्राभव-प्रभावविहतौ धर्षणीयस्य तस्य पारतन्त्र्यमभिव्यज्यत इति तात्पर्यार्थः। एवं प्रभावविहत्या धर्षणीयस्य तस्य न केवलं भूमण्डलं, प्रकृतिमण्डलमपि न विधेयमित्याह — क्रमशीर्णाकुलमूलसन्ततिरिति। कुलान्वितमभिषेकादिराज-कार्याधिकृतं चातुर्वर्ण्यमिह मूलशब्देन विवक्ष्यते। मूलस्य सन्ततिः सङ्घातो

१. 'तु रहणे मूढतया: कर्तृत्वमुक्तं, न नृपस्य। अति', २. 'प्राभवं' ब. पाठः,

मूलसन्ततिः, कृत्स्नं प्रकृतिमण्डलमित्यर्थः। क्रमेण पर्यायेण शीर्णा भिन्ना आकुला चला च मूलसन्ततिर्यस्य सः क्रमशीर्णाकुलमूलसन्ततिः। जनापरागकृतेन नृपस्य पारतन्त्र्येण बाह्या मूलसन्ततिर्भिद्यत एव। आभ्यन्तरा तु बैलवतीति विशेषणद्वयेन द्योत्यते। जनापरागात् प्रागवस्थां निरूप्य पूर्वं नृपमित्युक्तम्, इदानीं तु जनापरागकृतां द्वेष्यतां विमृश्य रिपुरिति। उन्मूलयितुं सुकर इति। अकृच्छ्रसाध्याया उन्मूलनक्रियार्थायाः क्रियायाः कर्म भवतीत्यर्थः। ननु सङ्कुचितविषयो जनापरागेण परतन्त्रो भवति, न तु व्याप्तविषयः सार्वभौम इति चेन्नेत्याह — महानपीति। सर्वजनीनो महानपरागो महतः सार्वभौमस्याप्युच्छेदहेतुरिति भावः। ननु जनापरागकृतं व्यसनं स एव निर्वर्तयितुं शक्नुयादिति चेन्नेत्याह — तरुवदिति। तरुर्वृक्ष इवेत्यर्थः। यथा महीयसा समीरणेन कृतमात्मविघातं नैसर्गिकजाडिमा पादपो वेदितुमपि न शक्नोति, किं पुनर्निवर्तयितुं, तथैव मदमानोपबृंहितमहामोहाक्रान्तो महीपतिर्जनापरागजनितमात्मव्यसनं नैवावगच्छति, दूरे तदुपशमनार्थमुपायप्रयोगादीत्यभिप्रायः। विभूतिकृतेन मदमानोच्छ्रयेण विमोहितोऽपि महीपतिः जडिमैकरूपः कुठारक्रियामात्रच्छेद्यो वनस्पतिरिति नावगन्तव्य इति द्योतयितुं तस्य तरुसाम्यमुक्तं, न तरुत्वं रूपितम्। ननु यद्येवं जनापरागेण विवशीक्रियते रिपुः, तर्हि सद्य एवोच्छेद्यः। तदर्थं न कालक्षेपो योग्य इति तत्राह — सहिष्णुनेति। सहिष्णुना क्षमाशीलेन दोषामर्षाघनाक्रान्तेन कालज्ञेनैव व्यसनातुरोऽपि रिपुरुन्मूलयितुं शक्यः, न तु साहसिकेनेत्यभिप्रायः। समन्ततः प्रसरता समीरणेन प्रचलितस्य महतोऽपि वनस्पतेः क्रमेण कानिचिन्मूलानि शीर्णानि भवन्ति, कानिचिदाकुलानि भवन्तीति क्रमशीर्णाकुलमूलसन्ततिर्वनस्पतिर्यथेन्धनाद्यर्थिना कालज्ञेन कालक्षेपसहिष्णुना कालान्तरे सुखेनोन्मूल्यते, तथैवाविधेयप्रकृतिमण्डलः सुयोधनः कालान्तरे सुखेनोन्मूलनीयः, नैवेदानीमिति तात्पर्यार्थः॥ ३२॥

ननु राजाधीनसकलवृत्तयो जनाः प्रकृतयो वा कथमपरक्ताः प्रभोरुपप्लवं कर्तुं शक्नुवन्तीत्याशङ्क्याह — अणुरपीत्यादिना।

---

१. 'र्णा आकुला च मू', ख. पाठः. २. 'तिः। शीर्णं भिन्नत्वम्। आकुलत्वं चलत्वम्। ज' ३. 'चलती' घ. पाठः. ४. 'याया: क' क. पाठः. ५. 'हीयान', ६. 'दनद्दे' क. ग. घ. पाठः.

अणुरप्युपहन्ति विग्रहः
प्रभुमन्तःप्रकृतिप्रकोपजः ।
अखिलं हि हिनस्ति भूधरं
तरुशाखान्तनिघर्षजोऽनलः ॥ ३३ ॥

अन्तःप्रकृतिप्रकोपजो विग्रहः प्रभुमुपहन्ति । प्रभुः क्रियते क्षत्रियो या-
भिस्ताः प्रकृतयः । अन्तःप्रकृतयो बहिःप्रकृतय इति द्विधा प्रकृतयः। अविनी-
तो नृपातिर्यथेष्टचेष्टतया पूर्वं जानपदानां जनानामपरागं जनयति । तत्कृतां
बाधामपश्यन् पुनर्बाह्यप्रकृतीनामुद्वेगमुत्पादयति । प्रकुपिता अपि बाह्यप्रकृतयः
प्रभुणा स्वयं विग्रहीतुं न शक्नुवन्ति । ततस्तु निरङ्कुशेन नरेन्द्रेण कृतापमान-
व्यलीकाः प्रकुपिता अन्तःप्रकृतयः प्रकोपितजानपदबाह्यप्रकृतिना प्रभुणा
स्वयं विगृह्णन्त्येवेति क्रमोपजातो विरोध इह विग्रहशब्देन विवक्ष्यते । अपह-
न्ति अपकारेण हिनस्ति । प्रकृतिविग्रहः प्रभोरपकारं करोति । स च तस्य प्र-
भुत्वच्युतिरूपां हानिं जनयतीति भावः । प्रभुतया स्वेच्छायत्तसकलनिग्रहानुग्रहो
महीपतिः प्रकुपिताः प्रकृतीः प्रसादयितुं न प्रह्वीभवति । महीपतेः प्रभुत्वादिनि-
मित्तभूताः प्रकृतयश्च तद्विरोधे तस्मिन्न प्रणमन्तीति विरोधस्य क्रमोपचयः प्रभुप्र-
कृतिशब्दाभ्यां द्योत्यते । ननु परस्परान्वितानां प्रभुप्रकृतीनां विरोधो भवन्न-
पि स्वल्प एव । न तु सपत्नविरोध इव प्रथत इति कथमसौ प्रभुमपहन्यादिति
विरोधं गूढाशयेनानुवदति—अणुरपीति । प्रारम्भे स्वल्पोऽपि परिणामे पृथुली-
भविष्यतीति भावः । तत्र हेतुरन्तःप्रकृतिप्रकोपज इति । प्रमादजो बहिरङ्गप्रकृ-
तिप्रकोपजो विरोधो महानपि शनैः शाम्यत्येव । आभ्यन्तराणामभिषेका-
दिनृपकार्यप्रयोजिकानां प्रकृतीनां प्रभूतात् कोपाज्जातो विरोधः स्वल्पोऽपि प्रति-
दिनं प्रथत एवेति भावः । ननु सङ्कुचितविषयवृत्तीनां प्रकृतीनां विरोधेन
कथं व्याप्तविषयवृत्तेर्महीपतेरुपघातः स्यादिति शङ्कां दृष्टान्तेन परिहरति —
अखिलमित्यादिना । तरुशाखान्तनिघर्षजः अनलोऽखिलं भूधरं हिनस्ति हि ।
एकदेशोऽन्तः । नितरां घर्षणं निघर्षः । निघर्षशब्दसमभिव्याहारेणानलजन-
नोक्त्यैव वृक्षशाखयोः शुष्कता द्योत्यते । सङ्कुचितविषयवृक्षशाखाद्वयनिघ-

१. 'धा तः'। अ' ३. 'न्तीति । त' घ. पाठः·

र्वजातः तनुतरोऽप्यग्निर्व्याप्ततरं स्थिरतरं भूधरं पर्वतमखिलं समस्तं हिनस्ति। अग्निकर्तृका हिंसा दाह एवेति दहतीति लभ्यते। यद्यपि पूर्वस्मिन् वाक्य उपमेयव्यक्तये प्रकृतिशब्द एक एव प्रयुक्तः, तथाप्युत्तरस्मिन् वाक्ये उपमानव्यक्तये प्रयुक्तैः समष्टिव्यष्टितदंशविषयैः तरुशाखान्तशब्दैः प्रकृतिवर्गतद्वर्ग्या उपमेयतया प्रतीयन्त एव। प्रभुं प्रति प्रकुपितानां प्रकृतीनामैक्येनाभेद्यतां द्योतयितुं पूर्वत्र प्रकृतिशब्द एव प्रयुक्तः। उत्तरत्र तासां यथाप्रधानमनुगममवगमयितुं पृथक्पृथगुपमानशब्दप्रयोगः। यथा मिथः संघृष्टेषु वृक्षशाखानामवयवेष्वेव पूर्वमनलः समुत्पद्यते। तदनु क्रमेण प्रसरति। तथैव प्रकृतिवर्गान्तर्गतेषु केषुचित् पुरुषेषु पूर्वं प्रकोप उत्पद्यते। तदनु तदानुपूर्व्यात् प्रथत इति दहनोत्पत्तिप्रसरक्रमप्रतीत्या प्रकोपोत्पत्तिप्रसरक्रमो गम्यत एव। एतदुक्तं भवति—पर्वतोपत्यकादिभागवनान्तःस्थितवनस्पतिशाखान्तसंघर्षयोनिरुत्पत्तिसमये स्वल्पोऽपि समन्ततो वीजता समीरणेन परितः प्रसारितो दहनः समस्तमपि महीधरं सवृक्षगुल्मलतातृणसत्त्वसमूहमचिरेण दहति, तथैव भूमण्डलावच्छिन्नजनपदान्तर्गतनगरान्तःस्थितप्रकृतिप्रकोपजन्मा प्रारम्भे तनुतरोऽपि नृपापचारेण परिबृंहितो विग्रहो महीयांसमपि महीपतिं समित्रज्ञातिबलमविलम्बितमेवावसादयतीति ॥ ३३ ॥

एवमविनीतस्य सपत्नस्योन्मूल्यतामुपपाद्य तत्समुन्नतिः समुपेक्षणीयेत्युपपादयति — नयवानित्यादिना।

नयवान् विनयप्रमाथिनः
समुपेक्षेत समुन्नतिं द्विषः।
सुजयः खलु तादृगन्तरे
विपदन्ता ह्यविनीतसम्पदः ॥ ३४ ॥

नयवान् विनयप्रमाथिनो द्विषः समुन्नतिं समुपेक्षेत। नयवान् प्रशस्यनयः। अभ्युदयपर्यवसायिता नयस्य प्रशस्यताहेतुः। प्रशस्येन नयेनाविनाभूतो विनय इति नयवानित्यनेनैव विनयवानिति लभ्यते। विनयं प्रभुत्वेन मथ्नाति विलोडयतीति विनयप्रमाथी तस्य। पूर्वं विनयमादृत्य पश्चात् प्रभुत्वेन तन्निराकुर्वत इत्यर्थः। नयमूलस्य विनयस्य प्रमाथेन नयस्य प्र-

१. 'क्तः। ता', २. 'तुमुत्तरत्र पृ' [illegible] पाठः ३. 'तत्तत्क' ख. पाठः

माथः प्रतीयत एव । समन्तादुन्नतिः समुन्नतिः पुरराष्ट्राटवीषु तत्तद्धनधान्यादिसमृद्धिः, ताम् । समुपेक्षेत, सम्यगुपेक्षेत तद्विघाताय न प्रवर्तेतेत्यर्थः । प्रयोजनपर्यवसायित्वमुपेक्षायाः सम्यक्त्वम् । उपेक्षामुपायमाश्रितः फलप्राप्तेः प्रागेव अन्तराले न कुर्वीतेति भावः । द्विष इति समुन्नतेः शत्रुसम्बन्धोक्त्या अनिष्टायास्तत्समुपेक्षायाः प्रयत्नातिशयसाध्यता द्योत्यते । समुपेक्षायाः फलमाह — तादृगन्तरे सुजयः खल्विति । स इव दृश्यमानस्तादृक्, तत्समः अविनीत इत्यर्थः । अन्तरे छिद्रे । सुजयः लघुना प्रयत्नेन जेतुं शक्यः । विनीतेन नीतिमतेत्यर्थात् सिध्यति । अप्रमादिना प्रमादी सुजय इति प्रसिद्धोऽयमर्थ इति खलुशब्देन द्योत्यते । नन्वविनीतोऽपि सम्पत्समग्रः कथं सुजय इति तत्राह — अविनीतसम्पदो विपदन्ता हीति । विपद् विशिष्टं व्यसनमन्तः पर्यवसानभूमिर्यासां ताः विपदन्ताः । अविनीतानां सम्पदो विशिष्टव्यसनानुबन्धा इत्यर्थः । अविनीतानां नहुषरावणादीनां सम्पदस्तथा दुरन्ताः श्रूयन्त इति हिशब्देन द्योत्यते ॥ ३४ ॥

नन्वविनीतेन मानिना नृपेण कृतापरागाः प्रकृतयः परेण क्रियमाणं तस्य परिभवमेवोपेक्षन्ते, न तु राज्यहरणमिति सम्पत्सात्कृतं राज्यं प्रतिजिहीर्षतामस्माकं मनोरथः कथं नयेन साध्यः स्यादिति तत्राह — लघुवृत्ततयेत्यादिना ।

लघुवृत्ततया भिदां गतं
बहिरन्तश्च नृपस्य मण्डलम् ।
अभिभूय हरत्यनन्तरः
शिथिलं कूलमिवापगारयः ॥ ३५ ॥

अनन्तरः नृपस्य मण्डलमभिभूय हरति । अन्तरं भेदः, तद् यस्य नास्ति सोऽनन्तरः अतिसन्निकृष्टः तद्वंश्य इत्यर्थः । मण्डलं राज्यम् । प्रकृतिप्रधानाः पौरजानपदा मण्डलवासिनो जना इह मण्डलशब्देन विवक्ष्यन्ते । बलीयसोऽपि बाह्यस्य शत्रोर्मण्डलस्याभिभव एव शक्यः न हरणं, सन्निकृष्टस्य तु नीतिमतस्तदुभयं शक्यमिति भावः । मण्डलस्याभिभाव्यत्वे हार्यत्वे च हेतुमाह — शिथि-

लमिति। अवयविनोऽवयवानां विश्लेषः शैथिल्यम्। इह तु स्नेहविश्वासादीनां मनोवृत्तीनामवयविनो मनसो[1] विश्लेषः शिथिलशब्देन विवक्ष्यते। तनुतरनृपविषयस्नेहविश्वासादिभावमित्यर्थः। शैथिल्ये हेतुमाह — भिदां गतमिति। भेदो भिदा। नृपादित्यर्थात् सिध्यति। इच्छापूर्वको भेदो न यादृच्छिक इति कर्मणि विहितया भिदामिति द्वितीयया द्योत्यते। मण्डलस्य नृपाद् भेदे हेतुमाह — लघुवृत्ततयेति। एतद् नृपस्येत्यनेनैव सम्बध्यते। व्यापारो वृत्तं नृपसम्बन्धात् तद्रक्षणभरणादिति गम्यते। लघु स्वल्पं मण्डलविषयं रक्षणभरणादि वृत्तं यस्य स लघुवृत्तः, तद्भावो लघुवृत्तता तया। अविनीतो नृपः प्रकृतीनां पौरजानपदानां च रक्षणादिपूदासीनः प्रतिकूलश्च भवेत्। ततस्तदभिप्रायानुगुणप्रवृत्तिविरहरूपात् तस्माद् भेदं सकलमेव मण्डलं गच्छेद्, न कतिपये जना इत्यभिप्रायः। भिदाशब्दो बहिश्शब्देनान्तश्शब्देन च संबध्यते बहिरन्तश्च भिदां गतमिति। बाह्येषु वागादिव्यापारेषु आभ्यन्तरेषु मनोव्यापारेषु च भिन्नम् अन्यथाभूतमित्यर्थः। बाहिर्व्यक्तं मण्डलस्य भेदं शमयितुमनुद्यते मदोद्धते नृपे स्थिरतरोऽभ्यन्तरस्तद्भेदो भवतीति शब्दक्रमेण[3] द्योत्यते। अथवा बाह्यानां पौरजानपदानां भेदो बहिर्भेद इह विवक्षितः। आभ्यन्तराणां प्रकृतीनां भेदोऽन्तर्भेदः। राज्यकार्यबहिरङ्गानां प्रकृतीनां प्रभुप्रातिकूल्यकृतो बुद्धिभेदः शीघ्रमभिव्यज्यते। अभ्यन्तराणां तु तन्त्रनिर्वाहप्रयोजिकानां तासां नृपौदासीन्यकृतो मतिभेदः कदाचित् कैश्चिदुन्नीयत इत्यभ्यन्तरस्य भेदस्य प्रतीतावप्राधान्यमन्वाचयार्थेन चशब्देन द्योत्यते। अभिभूयेति क्त्वाप्रत्ययेनाऽभिभवहरणक्रिययोः क्रियान्तराव्यवधानं निमित्तनिमित्तिभावश्च सूच्यते। हरतीति। तस्य तस्मिन् ममत्वादिसंबन्धं निवर्तयतीत्यर्थः। अविनीतनृपोपप्लुतस्य मण्डलस्य प्रयोजनं गुप्त्यादि कर्तुमनन्तरेण तन्मण्डलं ह्रियते, न तु स्वभोगाद्यर्थमिति प्रत्याययन्ननन्तरः स्वरक्षणीयं स्वविषयं स्वीकरोतीति हरतीति परस्मैपदेन द्योत्यते। अविनीतेन मदमानोद्धतेन सुयोधनेनापरञ्जिते कुरुमण्डले समासमयैरनुकूलकालनियतिसहायबलैरस्माभिः कृतेऽभियोगे तदपरञ्जिता अस्मदनुरञ्जिताश्च भूयिष्ठाः प्रकृत्यमात्यपौरजानपदादयस्तस्य सपत्नस्य व्यसनमुपेक्षेरन्। केचित् पुनरात्माविशेषं तेन मानिता

१. 'स्ता', २. 'लभे', ३. 'भरेण' क. ग. घ. पाठः.

ज्ञातयो बन्धवश्च ज्ञातिबन्धुवच्चाभ्यर्चिताः सुहृदः सुहृद्वत् सम्भाविता अनुजीविनश्च तस्य विजयार्थं यथाशक्ति व्याप्रियेरन् । तदस्तु, तान् प्रतिकूलानखिलान् विक्रमबलातिशयेनोन्मूल्य तं च सपत्नमुन्मूल्य ततः कुरुमण्डलमात्मसात्कृत्य कृत्स्नं भूमण्डलं पालयितुं वयं शक्नुयामेति तात्पर्यार्थः । नन्वविनीते नृपे सापरागमस्थिरं मण्डलं रन्ध्रज्ञो रिपुः काममभिभवतु । तेन तु चिरानुबन्धं तदनन्तरोऽपि कथं हर्तुं शक्नुयादिति, तत्राह—आपगारयैः कूलमिवेति । कूलं तीरम् । यथा नदीसन्निकृष्टेन भूभागेन चिरश्लिष्टमपि कूलं भेदे सति नदीवेगो हरति, तथा नृपेण चिरबद्धमपि मण्डलं रन्ध्रे सत्यनन्तरो नृपो हरतीति समुदायार्थः । ननूपमेयं मण्डलं नृपस्येत्यन्यसम्बन्धित्वेनोक्तम् । कूलं तु केवलमित्युपमानोपमेयवैषम्यमस्तीति चेदुच्यते । नद्या अवयव इति वा नदीसन्निकृष्टस्य भूभागस्यावयव इति वाऽन्यसम्बन्ध एवार्थः कूलतीरादिशब्दैरभिधीयते, न वृक्षादिशब्दैरिव केवलः । तेन मण्डलमिव कूलमप्यन्यसम्बन्धित्वेनैव प्रतीयते । अर्थप्रतीतिफलो हि शब्दप्रयोगः, न स्वरूपफलः । कूलशब्देनैव प्रतिसम्बन्धिनः प्रतीतेस्तद्वाची[2] शब्दो न प्रयुक्तः । आपगाशब्दसन्निधानेन नदीकूलमिति च प्रतीयते । दृष्टान्ते च विशेषणानि योजनीयानि । लघुवृत्ततयेति । परिणाहो वृत्तम् । विरलावयवत्वमिह लघुत्वं विवक्षितम् । विरलावयवसंस्थानतया बहिरन्तश्च भिदां भेदमवयवविश्लेषम् । गतं प्राप्तम् । शिथिलं स्वं[3]स्थानाच्च्यवितुमारब्धम् । अभिभूय भङ्क्त्वेत्यर्थः । कूलस्य स्वत एव भूभागेन नद्याश्च सम्बन्धोऽस्तीति । यथा[4] द्विसम्बन्धिनः कूलस्योपमानतया मण्डलस्यापि द्विसम्बन्धित्वं प्रतीयते, यथा स्थलीनद्योरवयवत्वेन कूलं प्रतीयते, तथा पूर्वानन्तरनृपयोः स्वत्वेन मण्डलमवगम्यते इति सामान्येन प्रतीतं मण्डलस्य द्विसम्बन्धित्वं कुरुराज्यस्य सुयोधनयुधिष्ठिरसम्बन्धित्वं द्योतयति । यथा प्रावृषि वर्षद्भिः पयोदैः कुल्यादिभिश्चोपबृंहितप्रवाहा नदी वेलां विलङ्घ्य कूलं हर्तुं[5] शक्नोति न ग्रीष्मे शुष्यत्समृद्धजला, तथैव समयसमापनसमये शक्रादिभिस्त्रिदशैर्यदुपाञ्चालादिभिश्च उपबृंहितबलावयवं सुयोधनं सपत्नमवधूय तन्मण्डलं हर्तुं श-

---

१. 'यः तीं' ख. पाठः. २. 'तौ तद्वा' क. ग. घ. पाठः. ३. 'स',
४. 'ते । तथा' क. पाठः. ५. 'ताव' क. ग. घ. पाठः.

क्नुयाम, नेदानीमीदृशकार्श्या इत्ययं चार्थोऽनेन श्लोकेन द्योत्यते । यथा प्रसन्नस्वादुसलिलायास्तरङ्गिण्या नैसर्गिकं सकलानुग्राहकत्वं, कूलभञ्जकत्वमौपाधिकं, तथैव धर्म्यरम्यचरितस्य धर्मात्मजस्य स्वाभाविकं सकलानुग्राहकत्वं, सपत्नोन्मथनमौपाधिकमित्यादि चात्र द्योत्यत एव । नदीवेगः कूलं हत्वा विनाशयति । अनन्तरो नृपतिस्तु सपत्नान्मण्डलं हत्वा पालयतीत्युपमानादुपमेयस्य व्यतिरेकं द्योतयितुमुपमालङ्कारोऽङ्गीकृतः, न रूपकम् ॥ ३५ ॥

अनुशासतमित्यनाकुलं
नयवर्त्माकुलमर्जुनाग्रजम् ।
स्वयमर्थ इवाभिवाञ्छित-
स्तमभीयाय पराशरात्मजः ॥ ३६ ॥

**अनुशासत**मित्यादि । पराशरात्मजः तमभीयाय । पराशरात्मजशब्देन द्वैपायन उच्यते । तच्छब्देन प्रस्तुतो युधिष्ठिरः परामृश्यते । अभीयाय अभिजगाम । कीदृशं युधिष्ठिरम् अर्जुनाग्रजम् इति । नयवर्त्म अनुशासतम् अर्जुनाग्रजं वृकोदरम् । इति इत्थम् अनेन प्रकारेण । नयवर्त्म नीतिमार्गम् । अनुशासतम् एवं कर्तव्यं नैवमिति विविच्यावबोध्य नियुञ्जानमित्यर्थः । विविच्य ज्ञापनविषय एवानुशास्तिः प्रसिद्धः 'अथ शब्दानुशासनमि'त्यादौ । अनाकुलमित्यनुशासनविशेषणं, तमित्यस्य विशेषणं वा । वृकोदरं नयवर्त्म अनुशासतो नयवर्त्मविदो युधिष्ठिरस्य मनसि वचसि च न संभ्रमो बभूवेति भावः । अनुशासनस्यानाकुलत्वं समीचीनत्वं चानन्तरोक्तेनेदृग्गुणेन वाक्यसन्दर्भेणैव प्रतीयते । किमपरं प्रमाणमुच्यत इति द्योतयितुमिति शब्दः प्रयुक्तः । आकुलमित्येतदर्जुनाग्रजमित्यस्य विशेषणम् । परिभवासहिष्णुतया युधिष्ठिरभावानिश्चयेन कृत्यविपर्ययेणाज्ञानेन विपर्ययज्ञानेन च विचलितमित्यर्थः । वृकोदरस्यानुशासनविषयत्वेनेप्सिततमत्वात् प्रधानकर्मत्वम् । नयवर्त्मनस्त्वनुशासनसंबन्धि(त्व)मात्रं विवक्षितमित्यप्रधानकर्मत्वम् । दुह्यादिषु परिगणनादनुशासिर्द्विकर्मकः । आदावुपसान्त्वनरूपं युधिष्ठिरवचनं दृढसंरम्भतया वृकोदरस्य

१. 'तनम', २. 'मार्ज्ञो', ३. 'ता', ४. 'त्मांर्जु', ५. 'न्धि मा' क. ग. घ. पाठः. ६. 'टृ' ख. पाठः.

दुष्करोपसान्त्वनत्वात् क्रमेणानुशासनरूपेण परिणतमिति द्योतयितुमनुशास-
तमित्युक्तं, नोपसान्त्वयमानमिति । अथवा नयवर्त्माकुलमित्येकं पदम् अर्जुनाग्र-
जविशेषणम् । नयवर्त्मनि नीतिमार्गे आकुलं ससंभ्रमं, नयतत्त्वस्यानिर्णयेना-
नवस्थितमित्यर्थः । 'मरुतः सुतमि'ति विशेष्यपदेन, 'दर्शितविक्रियं', 'कोपप-
रीतमानसमि'ति विशेषणद्वयेन च मतिविपर्ययपर्यस्तधृतेर्वृकोदरस्य द्विषदभि-
योगोद्यमो द्योतितः । महामतेर्युधिष्ठिरस्य वचनोपन्यासक्रमेण शनैश्शनैः शा-
न्तसंरम्भः स एव पश्चान्नयमार्गानिर्णयमात्रदोषः संवृत्त इति नयवर्त्माकुलश-
ब्देन द्योत्यते । स्वाग्रजे वृकोदरे दृश्यमानेन सर्वाग्रजयुधिष्ठिरविषयेण स्नेह-
बहुमानातिशयेन तदनुजोऽर्जुनस्तादृशगुणो बभूव । तस्मात् संरब्धोऽपि वृकोद-
रो ज्येष्ठस्य महाराजस्य युधिष्ठिरस्य मतं नातिवर्तेत इति द्योतयितुमर्जुनाग्र-
जमित्युक्तं न मारुतिमित्यादि । अर्जुनादीनामन्येषामनुशासनोपलक्षणार्थं
वा अर्जुनादीनामनुजानामनुशासिता वृकोदरः सर्वाग्रजेन युधिष्ठिरेणैवानुशा-
सनीय इति वार्जुनाग्रजशब्देन द्योत्यते । अनुशासनस्यासमाप्तिं द्योतयता-
नुशासतमिति शतृप्रत्ययेन वृकोदरानुशासने युधिष्ठिरेण बुभुत्सितं युधि
सुयोधनसहायानां महास्त्रविदां भीष्मादीनां निवारणोपायं वचनमध्ये समाग-
म्यावबोध्य तस्य मतिगौरवमधृष्यतां च संरक्षेयमिति द्वैपायनस्याशयविशेषो
व्यज्यते अभिवाञ्छितोऽर्थः स्वयमिवेति । अभि अभिमुखम् अव्यवहितं वा-
ञ्छित इष्टः अर्थः प्रयोजनं सपत्नोच्छेदसाध्यः साम्राज्यलाभः स्वयं साक्षा-
दनुपचरितो मुख्यतमः । इवशब्द उत्प्रेक्षाव्यञ्जकः । युधिष्ठिरप्रवृत्तिप्रयोज-
कतया द्वैपायनस्य तदर्थसाधकत्वं न तु तत्प्रवृत्तिमनपेक्ष्य स्वमहिम्नेति द्योत-
यितुं मुनीन्द्रस्य युधिष्ठिरप्रयोजनमुख्यात्मत्वमुत्प्रेक्षितं नाध्यवसितमिति । त-
मिति तच्छब्दः प्रकरणशक्त्या युधिष्ठिरं परामृश्य विश्रान्तः पुनरनुस्वानशक्त्या
तमेव मुनीन्द्रेण तथानुभूततया विषयीकरोति । तेनैतद् द्योत्यते — तदा तदा
धार्मिकस्य युधिष्ठिरस्यानर्थनिवारणमनुग्रहविशेषं च कृतवान् द्वैपायनस्तदानीमपि
धर्मैकनिष्ठस्य तस्य गुणाधिक्यमनुग्राह्यतातिशयमनुशिष्यताविशेषं चानुस्मृतवा-
निति । प्रस्तुतप्रसिद्धानुभूतार्थविषयो हि तच्छब्दः । अभीयायेति । अभिराभि-

१. 'जस्य वि', २. 'यदो', ३. 'नु', ४. 'तं सु', ५. 'चितो', ६. 'क्षां व्यञ्जयति । यु' क. ग. घ. पाठः. ७. 'न तदा धा' क. ग. पाठः.

मुख्ये वर्तते । अनुग्रहौन्मुख्यमिहाभिमुख्यं विवक्षितम् । इयाय जगाम, अनुग्रहोन्मुख आजगामेत्यर्थः । ननु कुरुकुलगुरुर्मुनीन्द्रस्तेषां सुयोधनादीनामभिभवं वधं वा नानुमन्येत, तत् कुतस्तदुपायमुपदिशेदिति शङ्का पराशरात्मजशब्देन निरस्यते । पराशरो हि नृशंसतमानां नराशनानां निश्शेषीकरणाय राक्षससत्रं कृतवानिति श्रूयते । परास्ता आशरा राक्षसा येन स पराशर इति च पराशरशब्दस्य निरुक्तिः । 'राक्षसः कौणपः क्रव्यात् क्रव्यादोऽसृक्प आशर' इत्यमरसिंहः । ततस्तस्य पराशरस्यौरसः पुत्रो द्वैपायनो दुरितैकनिष्ठानां दुष्टचेतसां धार्तराष्ट्राणामभिभवं वधं वा प्रयोजयेदेवेत्यभिप्रायः । अर्जुनाग्रजं कात्स्न्र्येनानुशासितुमपर्याप्नुवतो युधिष्ठिरस्याग्रे तदानीमेव तदाकाङ्क्षितस्य मुनीन्द्रस्यागमनोक्त्या धर्मराजस्यानुकूलदैवत्वं द्योत्यते ॥ ३६ ॥

मधुरैरवशानि लम्भय-
न्नपि तिर्यञ्चि शमं निरीक्षितैः ।
परितः पटु बिभ्रदेनसां
दहनं धाम विलोकनक्षमम् ॥ ३७ ॥

मधुरैरित्यादि । उत्तरेण श्लोकेनायं श्लोकः संबध्यते न पूर्वेण । मुनीन्द्रमभिपश्यतां युधिष्ठिरादीनामनेन विमर्शक्रमद्योतनं तथा सत्येव युज्यते । मधुरैर्निरीक्षितैस्तिर्यञ्च्यपि शमं लम्भयन् । जातिवाची तिर्यक्शब्दः पुल्लिङ्ग एवेति विशेषणतां गतेन तिर्यञ्चीति पदेन भूतानीति विशेष्यपदमाक्षिप्यते । अथवा तिर्यक्षु नपुंसकानि तिर्यञ्चीत्यनेनोच्यन्ते । शमविरोधिनां तामसत्वातिशयं द्योतयितुं तिर्यग्जातिरेव तामसी, तत्रापि नपुंसकान्यतितामसानीति । भूतशब्दाध्याहारे तिर्यञ्चि भूतान्यपि शमं लम्भयन् इत्यन्वयः । भूतशब्दः प्राणिवाची । अनध्याहारे तिर्यञ्च्यपि शमं लम्भयन्नित्यन्वयः । तिर्यञ्चि तिर्यङ्मुखेन्द्रियाणि शब्दादीन् विषयानपि सम्यगवगन्तुमसमर्थानि अज्ञानविपर्ययज्ञानाभ्यां नित्यसंबद्धानीति लभ्यते । अवशानि परतन्त्राणि । तिर्यञ्चोऽपि प्रबललुब्धकशरभादिभीत्या दुर्बलशशादिजिघत्सया च सन्ततं समन्ततः क्षिप्यन्त इति नैषां स्वातन्त्र्य-

१. 'नु' ग. पाठः. २. 'हि' श. घ. पाठः.

लेशोऽपि सम्भवति। जानता स्वतन्त्रेण शमो लभ्यते इति तिर्यक्त्वावशत्वे शमविरोधिनी। शमम् अनुचितस्येन्द्रियव्यापारस्योपरमम्। लम्भयन् प्रापयन्। निरित्युपसर्गः पृथक्त्वं द्योतयति। निरीक्षितैः पृथक् प्रतिविषयं प्रहितैरीक्षितैर्दृष्टिपातैरित्यर्थः। तेन सर्वानुग्राहकस्य मुनीन्द्रस्य परमकारुणिकत्वं ध्वन्यते। तिरश्चां शमसम्बन्धविरोधमपिशब्दो द्योतयति। निरीक्षितानां रूक्षतया भयमुद्भाव्य किं शमं लम्भयतीति, नेत्याह — मधुरैरिति। हृदयार्द्रताहेतुमाह्लादं जनयद्भिरित्यर्थः। सौम्यैरेव निरीक्षितैश्चपलप्रकृतीनि तिर्यञ्च्यपि शमं लम्भयन्नित्यनेन तस्यानुभावविशेषो व्यज्यते। धाम बिभ्रत् तेजो धारयन्। परितः समन्ततः। पटु निपुणम्। विषयप्रकाशनपरः शक्त्यतिशयस्तेजसः पटुत्वम्, आदित्यवद् व्याप्तिविषयप्रकाशनादिकरं न प्रदीपवत् सङ्कुचितवृत्तीत्यर्थः। एनसां दहनं पापानां दाहकम्। नन्द्यादिना कर्तरि ल्युः। अनेन विशेषणेन धाम्नो वह्निना साम्यं ततो व्यतिरेकश्च व्यज्यते। दाहकत्वं साम्यनिमित्तम्। प्रत्यात्मसमवेतानां सूक्ष्माणाममूर्तानां दुरितानां दाहकमिदं तेजः, वह्नितेजस्तु स्थूलानां मूर्तानामिन्धनादीनामेव दाहकतया दृष्टमिति व्यतिरेकः प्रतीयते। विलोकनक्षमं विलोकनस्य विविच्य दर्शनस्य क्षमं योग्यं, पुनः पुनर्दर्शनीयमित्यर्थः। अनेन तेजसश्चन्द्रसाम्यं प्रतीयते। मुनेर्विशेषणान्येतानि विशेष्यैस्तैर्गुणैः सूर्याग्निसोमातिशायीति लभ्यते। मुनीन्द्रागमनक्षणोपजाद्वारेणोत्तरश्लोकस्थया ददृश इति क्रियया संबध्यन्ते। मुनीन्द्रागमनक्षणोपजा- तैरद्भुतविशेषैर्जनितो युधिष्ठिरादीनां विमर्शक्रमोऽप्यनेन श्लोकेन द्योत्यते। एवं पूर्वं क्षोभस्वभावानां मृगपक्षिणामाकस्मिकीं स्तिमिततां विलोकयतां तेषां किमेतदिति वितर्कोऽभूत्। तदनन्तरं विश्वप्रकाशकं विश्वपावनं विश्वानन्दविधायि तेजस्त्रयातिशायि परमाद्भुतं तेजोऽभिपश्यतां हरिहरादिभिरयं देशोऽनुगृह्यत इत्यहो धन्याः स्म इति सचमत्कारो विमर्शो बभूवेति ॥ ३७ ॥

सहसोपगतः सविस्मयं
तपसां सूतिरसूतिरेनसाम्।

---

१. 'न परमकारुणिकस्य स' ख. पाठः. २. 'ते। तस्य मु' क. ख. पाठः.

दद्दशे जगतीभुजा मुनिः
स वपुष्मानिव पुण्यसञ्चयः ॥ ३९ ॥

सहसेति । स मुनिः जगतीभुजा दद्दशे । स इति प्रस्तुतप्रसिद्धानुभूतार्थविषयस्तच्छब्दः । इह तु तन्त्रेणावृत्त्या वा तदर्थत्रयं तच्छब्देन परामृश्यते । पूर्ववाक्ये प्रस्तुतो महानुभावतया प्रसिद्धो युधिष्ठिरेणाभ्युदयदायितयानुभूतश्च[1] द्वैपायनस्त्रिधा तच्छब्देन परामर्शमर्हति । मुनिरिति । 'मन ज्ञाने' इति धातोर्निष्पन्नो मुनिशब्दस्तपस्विजातिविशेषे प्रसिद्धः । इह तु ज्ञानैश्वर्यसमग्रे द्वैपायने वर्तते । प्रकृष्टां क्रियाशक्तिं ज्ञानशक्तिं चानुग्राह्येषु सङ्क्रमयितुं समर्थ इति तात्पर्यार्थः । जगत्याः पालयितृत्वं भोक्तृत्वं चाद्य मया लब्धमेवेति द्वैपायनदर्शने युधिष्ठिरस्य प्रतीतिरासीदिति जगतीभुजेत्यनेन द्योत्यते । दर्शनकर्मतया मुनेरीप्सिततमत्वं मुनिदर्शनकृतो युधिष्ठिरदृशोः प्रीतिविशेषश्च दद्दश इत्यनेन द्योत्यते । सविस्मयमिति क्रियाविशेषणं सविस्मयं दद्दश इति । मुनीन्द्रदर्शनसमय एव युधिष्ठिरस्य विस्मयो बभूव, न त्वनन्तरं कालक्रमेणेति प्रतीतिः क्रियाविशेषणस्य फलम् । सविस्मयदर्शने हेतुमाह — सहसोपगत इति । सहसा यदृच्छया । उपगतः समीपं प्राप्तः । इहेदानीं द्वैपायन आगमिष्यतीत्येवंरूपस्य युधिष्ठिरादीनां विमर्शस्य प्रागभावः सहसेत्यनेन द्योत्यते । सहसेत्येतत् पदं दद्दश इत्यनेन च संबन्धुं[2] शक्यमुचितं च सहसा दद्दश इति । तेन योगशक्त्या तिरोहितदिव्यमूर्तिर्द्वैपायनः पुण्यवतां पाण्डवानां सन्निकर्षे तदनुग्रहार्थमाविर्बभूवेति व्यज्यते । मुनिशब्दशक्त्या द्योतितोऽर्थो विशेषणद्वयेन स्फुटीक्रियते । तपसामिन्द्रियशमप्रधानानां प्रकृष्टतमानां पुण्यानां सूतिरुत्पत्तिस्थानम् । सूयते अस्मिन्निति सूतिः । 'अकर्तरि च कारके संज्ञायाम्' (३. ३. १९) इत्यधिकरणे क्तिन्प्रत्ययः । एनसां पापानाम् असूतिः लयस्थानमित्यर्थः । अत्र सूतिविशेषणेन नञा तद्विरोधी प्रत्याय्यते । पुण्योत्पादनेन पापसंहरणेन च स्वयं परमेश्वर इवाश्रितानुगृह्णन्निति लभ्यते । एवं सामान्यविषयं तस्यानुग्राहकत्वमभिव्यज्य विशेषविषयमभिव्यङ्क्तुं विशेषणान्तरमादत्ते — वपुष्मान् पुण्यसञ्चय इवेति । वपुष्मान् मूर्तिमान् पुण्यसञ्चयः पुण्यानां विशुद्धानां धर्माणां सञ्चयो निबि-

१. 'भूतस्य', २. '[illegible]' [illegible] पाठः.

इतरः समूहः। इवशब्देनोपमा व्यज्यते उत्प्रेक्षा वा। परोक्षप्रमाणविषयाद-न्तरान्तरा दुरितसंपृक्तात् पुण्यान्तरात् प्रत्यक्षविषयत्वफलेन मूर्तिमत्त्वेन दुरितासंस्पर्शद्योतकेन निबिडत्वेन च पुण्यविशेषस्य व्यतिरेको व्यज्यते। तादृशेन पुण्यसंचयेन मुनीन्द्रस्य साम्यमिवशब्दो द्योतयति तद्भावोत्प्रेक्षां वा इति व्यतिरेकोपमा व्यतिरेकोत्प्रेक्षा वा अयमलङ्कारः। अचेतनः पुण्यसंचयः परमेश्वराधिष्ठित एव स्वसम्बन्धिनामनुग्रहं करोति। सर्वदर्शी द्वैपायनस्तु स्वसंबन्धिनामनुग्रहविशेषे स्वतन्त्र इत्युपमानोपमेययोर्विशेषं विमृश्य मुनीन्द्रस्य पुण्यसञ्चयतुल्यता तद्भावोत्प्रेक्षा वा कृता, न तत्त्वेन रूपणम्। तादृशस्य द्वैपायनस्य दर्शने मूर्तिमत्त्वेनाभिव्यक्तो मम पुण्यसंचय इति धर्मात्मजस्य निश्चयो बभूवेति भावः॥ ३८॥

अथोच्चकैरासनतः परार्ध्या-
दुद्यन् स धूतारुणवल्कलाग्रः।
रराज कीर्णः कपिलांशुजालैः
शृङ्गात् सुमेरोरिव शीतरश्मिः॥ ३९॥

अथोच्चकैरिति। अथ परार्ध्यादासनत उद्यन् स रराज। आसनादुत्थानस्य द्वैपायनदर्शनक्रियानन्तर्यमथशब्दो द्योतयति। परार्ध्यात् प्रकृष्टात्। आसनतः विष्टरात्। उद्यन् उद्गच्छन्, उत्तिष्ठन्नित्यर्थः। स युधिष्ठिरः। रराज दिदीपे। बृसीरूपादासनादिति वक्तव्ये परार्ध्यादासनत इत्युक्तम्। तेन द्वैपायनदर्शनजनितेन प्रमोदातिशयेन विस्मृतानुभूयमानवनवासो युधिष्ठिरः स्वराज्यस्थमेवात्मानं मन्यमानस्तदानीमेवात्मनः सिंहासनादुत्थानमभ्यमन्यतेति[2] द्योत्यते। उच्चकैरिति क्रियाविशेषणं युधिष्ठिरविशेषणमासनविशेषणं वा उच्चकैरुद्यन्, उच्चकैः सः, उच्चकैरासनत इति। अस्याव्ययत्वात् सर्वथा विशेषणत्वं सम्भवति। उत्थानस्योन्नतत्वं तात्कालिकं तदुत्तमाङ्गाभ्युन्नमनम्। युधिष्ठिरस्य तु मनस उन्नतिः। आसनस्य संस्थानोच्छ्रयः। अरुणं बभ्रु वल्कलं तरुचर्मनिर्मितं वसनम्।

१. 'नैतद् दृश्यते — द्वै'। २. 'ति। उ' क. ग. घ. पाठः।

धूतं कम्पितमरुणं वल्कलस्याग्रं दशा येन सः धूतारुणवल्कलाग्रः। तेन द्वैपायनदर्शने सति सहसोत्थितस्तस्य तद्गौरवकृतः संभ्रमातिशयो द्योत्यते। मुनीन्द्रदर्शने जाता तात्कालिकी युधिष्ठिरस्य दीप्तिर्भीमादिसमवेतमुखप्रसादमनःप्रमोदादिफलमजनयदिति रराजेति परस्मैपदेन द्योत्यते। तदानीन्तनी युधिष्ठिरस्य दीप्तिर्विश्वाभ्युदयहेतुरिति द्योतयितुं दृष्टान्तमाह— सुमेरोः शृङ्गात् शीतरश्मिरिवेति। उद्यन्निति पूर्वस्मादनुषज्यते। युधिष्ठिरभावनारूढं हिरण्मयं सिंहासनमुपमेयत्वेन विवक्षितमिति तादृशं सुमेरुशृङ्गमुपमात्वेनोपात्तमित्युपमानोपमेयवैषम्यदोषो न शङ्कनीयः। अथवा पावनत्वं सत्सेव्यतादिगुणयोगित्वमासनस्य पराध्यर्त्वमभिप्रेतम्। सुमेरुशृङ्गं च तादृशगुणयोगेनैव आसनस्योपमानं स्यादित्युपमानोपमेययोर्न वैषम्यम्। न चोपमायां रूपकवदतिसादृश्यं विवक्ष्यते। कपिलांशुजालैरिति। अरुणानां रश्मीनां समूहैरित्यर्थः। हेतौ तृतीया। जालशब्देन रश्मीनां निबिडत्वं द्योत्यते। बहुवचनेन रश्मिसमूहानां बहुत्वम्। कीर्ण इति। विक्षिप्त इत्यर्थः। 'कॄ विक्षेप' इति पठ्यते। विक्षिप्तैरंशुजालैः तदानीमिन्दुर्विक्षिप्तो भवति, यथोर्मिजालैरूर्मिमाली। उपमानस्य चन्द्रस्य विक्षिप्तांशुजालहेतुकं विक्षिप्तत्वमभिधीयमानमुपमेयस्य युधिष्ठिरस्य विक्षिप्तवल्कलदशाजालहेतुकं विक्षिप्तत्वं द्योतयतीत्युपमानोपमेययोर्न विशेषणवैषम्यम्। शीतरश्मिशब्दः स्वाभिधेयस्य चन्द्रस्य जनाह्लादहेतुं प्रकृतिमधुरतां विरोधितमोनिरासहेतुं तेजस्वितां च व्यञ्जयंस्तदुपमेयस्य युधिष्ठिरस्य तद्द्वितयं द्योतयति॥ ३९॥

अवहितहृदयो विधाय सोऽर्हा-
मृषिवदृषिप्रवरे गुरूपदिष्टाम्।
तदनुमतमलञ्चकार पश्चात्
प्रशम इव श्रुतमासनं नरेन्द्रः॥ ४०॥

अवहितेति। स नरेन्द्रः ऋषिप्रवरे ऋषिवदर्हां विधाय पश्चात् तदनुमतमासनमलञ्चकार। प्रकृतपरामर्शिना तच्छब्देनैव युधिष्ठिरस्येत्यर्थे सिद्धेऽपि पुन-

१. 'न' ... [illegible]

नरेन्द्रशब्दोपादानेन सपत्नापहृतं साम्राज्यं मुनीन्द्रप्रसादे सति सम्प्रति मया प्राप्तमेवेति युधिष्ठिरस्य प्रतीतिर्द्योत्यते । ऋषिप्रवर इति । ऋषीणां वेदधर्मात्मतत्त्वदर्शिनां द्विजानां प्रवरे श्रेष्ठ इत्यर्थः । अधिकरणविशेषे विषये सप्तमी । ऋषिप्रवरविषयामर्हां पूजामित्यर्थः । ऋषिवद् ऋषिरिवेत्यर्थः । युधिष्ठिरस्य तदानीं तापसवृत्तित्वाद् नरेन्द्रत्वस्यानपायाद् ऋषिसाम्यमुक्तं न त्वृषित्वमेव । 'तेन तुल्यं क्रिया चेद्वतिः' (५. १. ११५) इति वतिप्रत्ययः । गुरूपदिष्टामिति । गुरुणा पुरोहितेनोपदिष्टाम्, अनेन साधनेनेत्थं क्रियतामिति ज्ञापितामित्यर्थः । अवहितम् अप्रमत्तमेकाग्रं हृदयमन्तःकरणं यस्य सः अवहितहृदयः । निखिलकरणनियामकस्य हृदयस्यावहितत्वोक्त्या श्रोत्रादीनां वागादीनां च सर्वेषां करणानामवहितत्वमुक्तमेव । तदनुमतं तेन द्वैपायनेनानुमतमनुज्ञातम्, उपवेश्यत्वेनोक्तमित्यर्थः । स्वतोऽवहितस्य युधिष्ठिरस्य तदानीमवहितत्वोक्तिर्मुनीन्द्रदर्शनजनितेन हर्षातिशयेन विधूतस्यावधानस्य पुनर्वशित्वकृतां प्रत्यापत्तिं द्योतयति । मुनिवराध्यासनेनैव युधिष्ठिरस्याध्यासनेन मुनिवरोचितस्य विष्टरस्य शोभा जातेति द्योतयितुमलङ्चकारेत्युक्तं, न त्वध्यासितवानिति । आसनोपवेशनस्य कालविक्षेपं द्योतयता पश्चाच्छब्देन नरेन्द्रस्य मुनीन्द्रगौरवातिशयकृतनिभृततरत्वं द्योत्यते । युधिष्ठिरविष्टरयोर्भूषणभूष्यभावस्य नियमं द्योतयितुं दृष्टान्तमाह— श्रुतं प्रशम इवेति । यथा श्रुतस्य प्रशम एव भूषणं नान्यः पराक्रमो बलं वा, तथैव तस्य तापसविष्टरस्य युधिष्ठिर एव भूषणं, नान्यस्तापसो नरदेवो वेति भावः । अर्हाविधाने विष्टरोपवेशने च युधिष्ठिरस्य विनयविशेषं पश्यन् द्वैपायनस्तत्कारणं श्रुतालङ्करणमभ्यन्तरं तस्य प्रशमं विममर्शेति चानेन दृष्टान्तेन द्योत्यते ॥ ४० ॥

व्यक्तोदितस्मितमयूखविभासितोष्ठ-
स्तिष्ठन् मुनेरभिमुखं स विकीर्णधाम्नः ।
तन्वन्तमिद्धमभितो गुरुमंशुजालं
लक्ष्मीमुवाह सकलस्य मृगाङ्कमूर्तेः ॥ ४१ ॥

व्यक्तोदितेत्यादि । सकलस्य मृगाङ्कमूर्तेः लक्ष्मीमुवाह । स युधिष्ठिरः । सकलस्य समग्रस्य सम्पूर्णस्य । मृगाङ्का मूर्तिर्यस्य स मृगाङ्कमूर्तिः, तस्य, चन्द्रस्येत्यर्थः । लक्ष्मीं श्रियं, शोभामित्यर्थः । उवाह बभार ।

१. 'ना' ग. पाठः.

यथा चन्द्रस्य निखिलदृश्यायां बाह्यायां मण्डलरूपायां मूर्तावेवापचयमालि-न्यादयो दोषाः प्रतीयन्ते, न तु नित्यनिर्मले नित्यपरिपूर्णेऽभ्यन्तरे मण्डले, तथैव युधिष्ठिरस्य बाह्यायां मूर्तावेव वनवासकृताः कार्श्यमालिन्यादयो दोषाः प्रतीता न त्वभ्यन्तरे हृदय इति द्योतयितुं मृगाङ्कमूर्तेरित्युक्तं, न मृगलाञ्छनस्येति । हर्षहेतुकोऽनुल्बणो हासः स्मितम् । 'स्मिङीषद्धसन' इति पठ्यते । स्मितस्य मयूखा रश्मयः स्मितमयूखाः तत्समयाविर्भूतानां दन्तानां दीप्तयः । व्यक्तोदितैः स्पष्टोद्गतैः स्मितमयूखैर्विभासितः विशेषेण द्योतितः ओ-ष्ठो दशनच्छदो यस्य स तथोक्तः । मुनीन्द्रसन्दर्शनजनितेन हर्षातिशयेन वि-कसितमुखपुण्डरीक इति लभ्यते । मुनेरभिमुखं पुरस्तात् तिष्ठन् स्थितिं लभ-मानः, उपविशन्नित्यर्थः । गतिनिवृत्त्यर्थतया पठितस्तिष्ठतिरत्रोपवेशनरूपायां गतिनिवृत्तौ वर्तते । पूर्वं क्षयावस्थां प्राप्तो युधिष्ठिरस्तदानीं मुनीन्द्रागमनस्य विजयोपायस्य लाभेन स्थानं प्राप्त इति द्योतयितुं तिष्ठन्नित्युक्तं, नोपविशन्नि-त्येव । मुनेरिति युधिष्ठिरसाम्राज्यप्रत्यापत्तिकारणं कारणेश्वराणां हरिहरादी-नामभिप्रायं प्रत्यग्दृष्ट्या पश्यत इत्यर्थः । अतीन्द्रियज्ञानवति प्रसिद्धो मुनि-शब्दः । विकीर्णधाम्न इति विस्तारिततेजस इत्यर्थः । अनेन विशेषणेन स्व-सम्बन्धिनां दुरितादिप्रतिबन्धं निरुन्धानस्तपोयोगविशेषकृतस्तस्यानुभावविशे-षो व्यज्यते । गुरुमभित इति । 'अभितःपरितस्समयानिकषाहाप्रतियोगेष्वपि द्वितीया वक्तव्या' (वा० २.४.१८) इति षष्ठ्यर्थे द्वितीया । गुरुमभितः बृह-स्पतेः पुरस्तादित्यर्थः । अभित इत्यनेनाकाङ्क्षितः पूर्वार्धेन सन्निहितः तिष्ठ-च्छब्दः तदन्वययोग्यतया विभक्तिविपरिणामेनात्रावतिष्ठत इत्यनुषज्यते । तेन बृहस्पतेरभिमुखं तिष्ठतश्चन्द्रस्येत्यर्थः सिध्यति । इद्धमंशुजालं तन्वन्तमिति । इद्धं दीप्तम् अंशुजालं रश्मिसमूहं तन्वन्तं विस्तारयन्तम् । एतद् गुरुमित्यस्य विशेषणम् । घनतुहिनाद्यावरणाभावेन रश्मिसमूहस्य दीप्तिर्भवति । तेन शरद्व-सन्तयोरन्यतरस्मिन् ऋताविति प्रतीयते । दीप्तरश्मिना स्वोच्चक्षेत्रगतेन गुरुणा दृष्टश्चन्द्रो यथा विश्वशुभक्रियाहेतुर्भवति, समृद्धतपोयोगज्ञानैश्वर्येण द्वैपायनेन मुनीन्द्रेण प्रसादामलया दृष्ट्या सन्धुक्षितो युधिष्ठिरः तथैव विश्वाभ्युदयहेतुर्ब-भूवेति चानेन दृष्टान्तेन द्योत्यते ॥ ४१ ॥

इति चित्रभानुकृतौ शब्दार्थदीपिकायां
किरातार्जुनीयव्याख्यायां द्वितीयः सर्गः ।

## अथ तृतीयः सर्गः।

ततः शरच्चन्द्रकराभिरामैरुत्सर्पिभिः प्रांशुमिवांशुजालैः।
बिभ्राणमानीलरुचिं पिशङ्गीर्जटास्तडित्वन्तमिवाम्बुवाहम् ॥

तत इत्यादि। उचितवेदी मुनिदेवतावनतमतिर्महामतिर्महाकविरनेन कुलकेनाभिगम्यतामनुग्रहशीलतां महानुभावतां च द्योतयन् द्वैपायनमनुवर्णयन् धर्मात्मजस्य तदाभाषणावसरं दर्शयति —ततो धर्मात्मजः सुखोपविष्टं मुनिमाबभाषे। कीदृशं मुनिमित्याकाङ्क्षायामाह — उत्सर्पिभिरित्यादि । उत्सर्पिभिरुद्गमनशीलैः, उपरि सूर्यरश्मीनभिभूय व्यापिभिरित्यर्थः। अंशुजालैः रश्मिसमूहैः। प्रांशुमिव अतिदीर्घमिव। मुनिसमीपवर्तिनां प्रतीतिमनुसृत्य तद्वपुरैतिश्लिष्टांशुजालहेतुका तस्य प्रांशुत्वोत्प्रेक्षा कृता। शरदश्चन्द्रः शरच्चन्द्रः। सर्वर्तुसाधारणस्यापि चन्द्रस्य प्रावृष्यनभिव्यक्तरूपस्य शरदि विशेषाभिव्यक्तेः शरदा विशेषसम्बन्धोक्तिः। शरच्चन्द्रस्य करैः किरणैरिव अभिरामैः, मनोह्लादिभिरित्यर्थः। 'उपमानानि सामान्यवचनैः' (२. १. ५५) इति समासः। मुनिरश्मिसमूहानामुपमेयतयैव चन्द्ररश्मीनां समूहत्वहेतुर्निबिडत्वं प्रतीयते। तेन चन्द्रकरौघरम्यैरिति नोक्तम्। मुनिदीधितीनां चन्द्रदीधितिभिः सादृश्योक्त्या तद्वतोर्मुनिचन्द्रयोः सादृश्यं गम्यत एव। तेन शीतलैरंशुभिर्जननयनानन्दविधायी चन्द्रो यथा स्वयममृतरसात्मिकया स्वशक्त्या स्थावरजङ्गमानाप्याययति, तथैव परमकारुणिको मुनीन्द्रोऽपीति द्योत्यते। जटाः बिभ्राणमिति। ताच्छील्ये चानश्प्रत्ययः। शानचि तु भृञो ञित्त्वात् क्रियाफलस्य कर्तृगामिता स्यात्। निस्स्पृहस्य मुनेः स्वप्रयोजनार्थं जटाभरणमनुचितमेव। कृतकृत्यस्य मुनीन्द्रस्य जटाभरणशीलतोक्त्या तु पुण्यप्रकर्षरूपस्य तपसोऽवश्यानुष्ठेयता द्योत्यते। पिशङ्गीरिति कनकवर्णा इत्यर्थः। 'षिद्गौरादिभ्यश्च' (४. १. ४१) इति ङीष्प्रत्ययः। आनीलरुचिमिति। नीलशब्दः स्निग्धमास-

१. 'चरम', २. 'द्रुमि', ३. 'रि' ख. पाठः.

रूपे कृष्णवर्णे वर्तते । आङत्र भृशार्थः । रुचिर्दीप्तिः । तेजोन्तराणि तिरस्कुर्वती विश्वव्यापिनी मुनीन्द्रस्य दीप्तिः पूर्वं दृग्विषयतां गता, तत्तिरोहिता मूर्तिस्तु पश्चात् क्रमेणेति द्योतयितुमानीलरुचिमित्युक्तं, न त्वानीलतनुमिति। मूर्तेर्निर्गत्य बहिः प्रसरन्तस्तेजोवयवा अंशुकरादिशब्दैरुच्यन्ते । मूर्त्यनुस्यूता प्रकाशसमष्टिर्दीप्तिरुच्यादिशब्दविषय इति विभागः शब्दशक्तिविशेषेण व्यज्यते । युधिष्ठिराश्रममागतो द्वैपायन इत्याकर्ण्य तद्दिदृक्षया समागच्छतां तपोधनानां प्रतीतिक्रमोऽप्यंशुजालानीलरुचिजटाशब्दैर्द्योत्यते । चन्द्रकरदृष्टान्तेन सार्वकालिकं तस्यानुग्राहकत्वसामान्यं विभाव्य कालविशेषकृतमनुग्राहकत्वविशेषं द्योतयितुं दृष्टान्तान्तरमाह — तडित्त्वन्तमम्बुवाहमिवेति । तडित्त्वन्तमिति प्रशस्तवर्णया प्रशस्तवर्षहेतुभूतया तडिता विद्युता सम्बद्धमित्यर्थः । प्रशंसायां मतुप्प्रत्ययः । अम्बुवाहमिति क्रियायोगेन मेघवचनोऽम्बुवाहशब्दो मेघस्य सद्योऽनुग्राहितां द्योतयति । भुवनाभ्युदयप्रदमम्बु वहन् जीमूतो यथानुग्राह्याणां तनुभृतामभिमुखमाविर्भवति, तथैव तादृशकारुण्यं वहन् महामुनिरनुग्राह्याणां पाण्डवानामभिमुखमाविर्बभूवेति चाम्बुवाहशब्देन द्योत्यते । उपमानगतेन शब्दगम्येनाम्बुना समानगुणमुपमेयगतं कारुण्यं स्वोपमेयत्वेनाक्षिप्यत एव । विद्यायोगविशेषकृतदीप्तिभिर्जटाभिः स्वदीप्तिहेतुभूता मुनीन्द्रान्तर्गता विद्याविशेषा योगविशेषाश्च व्यज्यन्ते । नन्वेकैव तडिन्मेघे दृश्यते । जटानां तु बहुत्वमुक्तमित्युपमानोपमेययोर्विशेषणवैषम्यमुपमादोष एवेति चेद्, उच्यते । यद्यपि बहुवचनेन जटानां बहुत्वमुच्यते, तथापि तासामेकग्रन्थिकृतं नियतमेकत्वमस्त्येवेत्यापाततः प्रतीतमपि वैषम्यं साम्यपर्यवसायितया न दोषप्रतीतिं जनयति । तपःपिशुनजटादीप्तिहेतूनां द्वैपायनस्य विद्यायोगविशेषाणां भूमानं द्योतयितुं जटानां बहुत्वमुक्तम् । एकग्रन्थिकृतेन तासामेकत्वेन समस्तविद्यासमष्टिविशिष्टा विद्या मुनीन्द्रेण विजयाय दित्सितेति द्योत्यते। सविशेषणयोरुपमानोपमेययोर्वर्णसाम्यमतिस्फुटमेवेत्यलं बहुना ॥ १ ॥

एवं सन्निकर्षक्रमावगम्यं मुनीन्द्रस्य किरणदीप्तिमूर्तीनामौज्ज्वल्यं माधुर्यं चोपवर्ण्य विलोकनाभ्यासोपलभ्यं तस्य बाह्यमाभ्यन्तरं च प्रसादमनन्यसामान्यं वपुःप्रकर्षं च वर्णयति —

प्रसादलक्ष्मीं दधतं समग्रां वपुःप्रकर्षेण जनातिगेन ।
प्रसह्य चेतस्सु समासजन्तमसंस्तुतानामपि भावमार्द्रम् ॥ २ ॥

समग्रां प्रसादलक्ष्मीं दधतम् । कालुष्यापगमकृतं स्वच्छत्वम् अनुग्राह्याणां गुणविशेषदर्शनेन द्रुतमनुग्रहेच्छा च प्रसादशब्दार्थः । इहोभयं विवक्षितम् । समान एवोभयेषां स्वसम्बन्धे धार्तराष्ट्रान् विहाय तद्विघातहेतुः पाण्डवेष्वनुग्रहः कथं विधेय इति चिन्तया कृतं द्वैपायनस्य मनसि कालुष्यं तेषां पापस्वभावतानिश्चयेन दूरमपगतम् । युधिष्ठिरादीनां पाण्डवानामनन्यलभ्यगुणविशेषदर्शनेन द्रुतं तदनुग्रहेच्छा च सञ्जातेत्यर्थद्वयं प्रसादशब्देनेह विवक्ष्यते । प्रसादलक्ष्मीमिति । प्रसादसम्बन्धिनीं प्रसादहेतुकां प्रसादव्यञ्जिकां श्रियं, विग्रहशोभामित्यर्थः । समग्रां सकलाम् । प्रसादलक्ष्मीमित्येव वा समग्रं प्रसादमित्येव वा प्रयुक्तेऽपि प्रसादस्य कात्स्न्यं न प्रतीयत एव । उभयविधस्य प्रसादस्य कात्स्न्र्यप्रतिपत्तये समग्रां प्रसादलक्ष्मीमित्युक्तम् । दधतं धारयन्तम् । जनातिगेन वपुःप्रकर्षेणासंस्तुतानां चेतस्स्वपि प्रसह्यार्द्रं भावं समासजन्तम् । जनातिगेनेति चेतनसमूहातिवर्तिना, दिव्यादिव्यादिशरीरेष्वदृष्टेनेत्यर्थः । वपुःप्रकर्षेण वपुषो विग्रहस्यातिशयेन । आह्लादहेतुमाधुर्यरामणीयकरूपो वपुःप्रकर्ष इह विवक्षितः । न तु भीतिहेतुस्तेजस्वितारूपः । असंस्तुतानामपरिचितानां सकृन्मुनीन्द्रं दृष्टवतामदृष्टवतामेव चेति लभ्यते । चेतस्सु मनस्सु । चेतसां पृथग्विधत्वं द्योतयता बहुवचनेन तेषु सममेकभावसमावेशासंभवो द्योत्यते । यस्य यस्मिन्निन्द्रियव्यापारावृत्तिरूपः परिचयो भवति, तस्यैव तस्मिन् विषये यथोचितमार्द्रो रूक्षो वा भावो जायते । अपरिचयेन मनसां पृथग्विधत्वेन चोपजातमेकस्मिन्नार्द्रभावस्य विरोधं द्योतयन्नपिशब्दो मुनीन्द्रस्य सर्वातिशायि माधुर्यं द्योतयति । प्रसह्येत्यव्ययं बलात्कारे वर्तते । आर्द्रभावविरोधिनीं तेषां प्रवृत्तिं प्रकृतिं वा तिरस्कृत्येत्यर्थः । आर्द्रं सरसं स्नेहादरादिरूपमित्यर्थः । भावमभ्यन्तरविकारं समासजन्तं समभिमुखमव्यवहितमासजन्तं समवाययन्तमित्यर्थः । युजिरस्थायिनि सम्बन्धे वर्तते, सञ्जिस्तु स्थायिनि । असंस्तुतानां पृथग्विधेषु चेतस्स्वार्द्रभावसमासञ्जनोक्त्या प्रसन्नस्य मुनीन्द्रस्य तुष्कर[illegible]शक्तिर्द्योत्यते ॥ २ ॥

सर्वेषां चेतःस्वार्द्रभावं समासजन् मुनीन्द्रो न हृद्यविषयवन्मनसः क्षोभहेतुः, प्रत्युत प्रशमहेतुरेवेत्याह — अनुद्धतेत्यादिना ।

**अनुद्धताकारतया विविक्तां तन्वन्तमन्तःकरणस्य वृत्तिम् ।**
**माधुर्यविस्रम्भविशेषभाजा कृतोपसंभाषमिवेक्षितेन ॥ ३ ॥**

अन्तःकरणस्य वृत्तिं विविक्तां तन्वन्तम् । स्वदर्शिनां स्वदृग्विषयाणां चेत्यर्थात् सिध्यति । अन्तःकरणस्येति जातावेकवचनम् । मनःप्रभृतीनां सर्वेषामभ्यन्तराणां करणानां ग्रहणार्थमन्तःकरणस्येत्युक्तं, न मनस इत्यादि । वृत्तिं व्यापारम् । विविक्तां शुद्धां क्षोभचापलादिदोषरहितां शमधैर्यादिगुणसहितां चेत्यर्थः । तन्वन्तं कुर्वन्तम् । शुद्धाशयानामन्तःकरणस्य शुद्धिं पुष्यन्तमेव न । शुद्धिवासनारहितानां प्राकृतानामन्तःकरणस्य पूर्वमनुत्पन्नां शुद्धिमुत्पादयन्तमपीत्यर्थः[1] । प्रकर्षप्रतिपत्तये तन्वन्तमित्युक्तं न पुष्यन्तमिति । अत्र हेतुमाह — अनुद्धताकारतयेति । स्वसन्निधिकृतयेत्यर्थात् सिध्यति । शमविरोधी उद्धतः, तद्विपरीतोऽनुद्धतः । वक्त्रनेत्राद्याश्रयसौम्यतोग्रताद्यनुविद्धप्रसादप्रकोपादिमनोवृत्त्यवगमहेतुरवस्थाविशेष आकारः । अनुद्धतः प्रशान्तः आकारो यस्य सोऽनुद्धताकारः, तद्भाव अनुद्धताकारता, तया । हेतौ तृतीया । अन्तःकरणवृत्तेर्विविक्तता स्वजन्मनैवाकारानुद्धतिं जनयति । आकारानुद्धतिस्तु स्वप्रतीत्या प्रशमादिरूपाया अन्तःकरणवृत्तेर्विविक्तताया हेतुरपि[3] । स्वकीयस्य परकीयस्य वा प्रशान्तस्याकारस्य दर्शनेन मनोवृत्तिरपि प्रशान्ता भवत्येवेति प्रतीत्यनुसरणे[2] विपरीतो हेतुहेतुमद्भाव इति शङ्काया नावसरः । रजस्तमःप्रकृतीनां येषां पूर्वमुद्धत आकारः, तेषामाकारोऽपि मुनीन्द्रानुभावेन तदानीमनुद्धतः प्रशान्तो जात इति द्योतयितुमनुद्धताकारतयेत्युक्तं न शमान्विताकारतयेति । मुनीन्द्रानुभावजनिता मनोवृत्तेर्विविक्तताकारानुद्धत्यविनाभूतेति द्योतयितुं चित्रहेत्वलङ्कारोऽत्र विवक्षितः । अथवेत्थम्भूतलक्षणे तृतीया । अनुद्धताकारता विविक्ताया अन्तःकरणवृत्तेरुपलक्षणमव्यभिचारिचिह्नं, यथा शङ्खचक्रादि वि-

---

१. 'र्थप्रतिपत्त्युपप', २. 'स्वयमेवानु', ३. 'रेवेति विपरीतो हेतुहेतुमद्भाव इति शङ्कायाः स्व', ४. 'ण ना' क. ५. [illegible] ६. 'त्तेरुप' ख. पाठः.

ण्वादीनाम् । अथवा 'सहयुक्तेऽप्रधाने' (२. ३. १९) इत्यत्र सहार्थयोगस्य विवक्षितत्वादत्र सहार्थे विवक्षिते सहशब्द आक्षिप्यते । अनुद्धताकारतया सहान्तःकरणस्य वृत्तिं विविक्तां तन्वन्तमित्यर्थः । विविक्ताया अन्तःकरणवृत्तेस्तनोतिक्रियाकर्मत्वं वाच्यमेव, अनुद्धताकारतायास्त्वर्थाक्षिप्तम् । तदा सहोक्तिरलङ्कारः । सर्वेष्वपि पक्षेषु मुनीन्द्रानुभावेन तत्सन्निहितानां सर्वेषामन्तर्बहिश्च प्रशमादिरूपा सिद्धिरुपजातेत्ययमर्थः सिध्यत्येव । द्विषद्विषयरोषपरूषितस्य मारुतेः संरम्भोऽपि मुनीन्द्रानुभावेन सद्यः प्रशान्त एवेति च वाच्यशक्त्या व्यज्यते । एवं सर्वविषयं मुनीन्द्रस्य सौम्यभावमुपवर्ण्य युधिष्ठिरादिविषयमाभिमुख्यविशेषमुन्मीलयति — माधुर्येत्यादिना । ईक्षितेन कृतोपसंभाषमिव । ईक्षितेन ईक्षणव्यापारेण । उपेत्युपसर्गः सामीप्ये वर्तते । समित्याभिमुख्ये । औचित्यचातुर्यवति प्रशस्ते वचने भाषतिर्वर्तते, न वचनमात्रे । कृता उपसंभाषा सन्निकृष्य अनुकूलहितभाषणं येन सः कृतोपसंभाषः, तम् । इवशब्देनोत्प्रेक्षा व्यज्यते । उत्प्रेक्षायां हेतुमाह — माधुर्यविस्रम्भविशेषभाजेति । ईक्षितस्य विशेषणमेतत् । आर्द्रतानिमित्तं सौम्यत्वं माधुर्यम् । सकलं स्वहृद्गतं प्रतीताय प्रियाय निःशङ्कं निवेदयितुमभिरुचिं जनयन् भावविशेषो विस्रम्भः । तयोर्विशेषोऽसाधारणः प्रकर्षो माधुर्यविस्रम्भविशेषः, तं भजंस्तद्भाक्, तेन । अभ्यन्तरसौम्यभावविस्रम्भविशेषव्यञ्जकेनेत्यर्थः । गरीयसो महानुभावस्य मुनीन्द्रस्याशयमविज्ञाय तदभिमुखं वक्तुमप्रगल्भस्य युधिष्ठिरस्य विवक्षावसरस्तस्य वचनेनेव स्निग्धतापसन्नेन दृष्टिपातेनैव दत्त इत्यभिप्रायः ॥ ३ ॥

एवं मुनीन्द्रस्य पाण्डवानुग्रहाभिमुख्यमभिधाय तत्तदभीप्सितस्य पुण्योपबृंहणपापसंहरणरूपस्यानुग्रहविशेषस्य विधाने तस्य शक्तिविशेषं दर्शयति—

**धर्मात्मजो धर्मनिबन्धिनीनां प्रसूतिमेनःप्रणुदां श्रुतीनाम् ।**
**हेतुं तदभ्यागमने परीप्सुः सुखोपविष्टं मुनिमाबभाषे ॥ ४ ॥**

धर्मात्मज इत्यादि । श्रुतीनां प्रसूतिम् । श्रूयत इति श्रुतिरिति व्यु-

१. 'यान्तः', २. 'णवृं', ३. 'त्वन्वयः' ख. पाठः ४. 'ता', क. घ. पाठः,

त्पत्त्या श्रुतिशब्दो वेदे योगरूढः । स्वार्थज्ञानं स्वविहितक्रियानुष्ठानं च विना स्वशब्दश्रवणेनैव श्रेयस्करो वेद इति वेदस्य शक्त्यतिशयो नित्यता च श्रुति-शब्देन द्योत्यते । इदानीमिव कल्पान्तरेष्वपि वेदः श्रुतिविषय एव, न कदा-चित् कृतिविषयः स्यादित्यस्यार्थस्य प्रतीतेर्नित्यस्यैव वेदस्योत्पत्त्युपपत्तिर्बहुव-चनेन व्यज्यते । एक एव वेदो द्वैपायनेन चतुर्धा विभक्तः । तस्य विभक्त-रूपस्य तस्मादुत्पन्नत्वमुपचर्यत इति प्रसूतिमिति । प्रसवाधिकरणमित्यर्थः । अ-धिकरणे क्तिन्प्रत्ययः । कीदृशीनां श्रुतीनाम् । धर्मनिबन्धिनीनाम् एनः-प्रणुदाम् धर्मं स्वर्गापवर्गदं पुण्यकर्म[1] ताच्छील्येन[2] नित्यं बध्नतीनां स्वविहित-क्रियानुष्ठायिनां विशिष्टपुण्यवासनाविधायिनीनामित्यर्थः । अथवा धर्मं निकटे बध्नतीनां विधिवाक्यैः पुण्यकर्मणः कर्तव्यतातिशयमव्यवधानेन मनसि दर्शय-न्तीनामित्यर्थः । एनःप्रणुदामिति एनांसि पापानि प्रकर्षेण नुदतीनां क्षिपतीनाम् । स्वाश्रितानामित्यर्थात् सिध्यति । अथवा नुदतिरिह निषेधार्थे वर्तते । एनांसि प्रकर्षेण निषेधन्तीनां निषेधवाक्यैः पापानामकर्तव्यतातिशयं प्रत्याययन्ती-नामित्यर्थः । विशिष्टवैदिकविद्योपदेशेन युधिष्ठिरस्याभीष्टमनुग्रहं विधातुं मुनीन्द्रो व्यवसितवानिति सविशेषणेन श्रुतिशब्देन द्योत्यते । सुखोपविष्ट-मिति । सुखमकृच्छ्रमव्यग्रेन्द्रियशरीरम् । उपविष्टमासितम् । अनेन वचनोपक्रम-स्यावसरः सूच्यते । मुनिशब्दार्थः प्रागुक्त एव । युधिष्ठिरस्य मुनीन्द्रपक्ष-पातविषयताहेतुर्विशिष्टविद्याग्रहणार्हता च धर्मात्मजपदेन द्योत्यते । तदभ्या-गमने हेतुं परीप्सुः । तस्य मुनीन्द्रस्य अभ्यागमने अव्यवधानेनागमने शिष्या-दिप्रेषणमपर्याप्तमिति मत्वा साक्षात् स्वमूर्त्त्यैवागमने सन्निकर्षप्राप्तौ । हेतुं कारणम् । परीप्सुः कार्त्स्न्येन बुभुत्सुः । परिपूर्वस्याप्नोतेरलमर्थतया प्रसिद्ध-त्वात् परीत्युपसर्गेण तस्य बुद्ध्यर्थता न क्रियते । गत्यर्थानां धातूनामुत्सर्गतो बुद्ध्यर्थताविधानादीप्सुरित्यनेनैव बुभुत्सुरित्यर्थः प्रतीयते । तत्पर्याप्तिप्रति-पत्तये पुनः परीत्युपसर्गः प्रयुक्तः । प्राक्तनेषु व्यसनेषु स्वयमागत्यानुग्रह-करणदर्शनात् तदानीमपि तदभ्यागमनस्य स्वानुग्रहचिकीर्षा हेतुरिति हेतुसा-मान्यमवगच्छता युधिष्ठिरेण हेतुविशेष एव जिज्ञासितः । मुनीन्द्राभ्यागमहेतु-परीप्सायां युधिष्ठिरेण साक्षादुक्तिरनुचितेति मत्वा महाकविरुचितज्ञताया

---

१. 'र्म नित्यं ता', २. 'न ब' [illegible]

स्ववचनेनैव तामाविश्चकार, न युधिष्ठिरवचनेन । आबभाष इति । अभिमुखं बभाषे । मुनीन्द्रस्य युष्मच्छब्दवाच्यताम् आत्मनोऽस्मच्छब्दवाच्यतां चापाद्य उचितं वचनम् ऊच इत्यर्थः । तेन औदासीन्यद्योतिका तटस्थता व्यावर्त्यते ॥ ४ ॥

गरीयसि व्यसन इव कृत्यसङ्कटे निमज्जन् निखिलदुःखास्कन्दिना मुनीन्द्रसन्दर्शनेन कृतार्थतां नीयमानो धर्मराजो विस्मयानन्दवशतया पुण्यप्रकर्षैकलभ्यस्य तस्य समग्रमङ्गलतामुपपादयति — अनाप्तेत्यादिना ।

**अनाप्तपुण्योपचयैर्दुरापा फलस्य निर्धूतरजाः सवित्री ।**
**तुल्या भवद्दर्शनसम्पदेषा वृष्टेर्दिवो वीतबलाहकायाः ॥ ५ ॥**

एषा भवद्दर्शनसम्पद् वीतवलाहकाया दिवो वृष्टेस्तुल्या । दिवो वृष्टेरिति व्यधिकरणे षष्ठ्यौ । द्युसम्बन्धिन्या वृष्टेरित्यर्थः । वृष्टेर्द्युसम्बन्धनियमाद् वृष्टिशब्देनैव द्युसम्बन्धे सिद्धे पुनर्दिव इति द्युसम्बन्धोक्त्या मानुषलोकसन्निकर्षदोषास्पृष्टात् सुरसरित्प्रवाहाधाराद् विशुद्धतराद् दिव ऊर्ध्वभागाद् वृष्टेरुत्पत्तिर्द्योत्यते । वीताः विगताः वलाहकाः मेघाः यस्याः सा वीतवलाहका, तस्याः । वलाहकराहिता वृष्टिर्वसुधाविशुद्धिसमृद्धिहेतुः पुण्यतमनभोगङ्गाप्रवाहोद्भूतेति पुराणेषु श्रूयते । तुल्या सदृशी । भवतो दर्शनं भवत्कर्तृकं भवत्कर्मकं च विलोकनं भवद्दर्शनं, तदेव सम्पद् भवद्दर्शनसम्पत् । मुनिदर्शनस्य सम्पद्धेतुत्वमैकान्तिकमिति द्योतयितुं तस्य सम्पत्त्वरूपणमेव कृतं, न सम्पत्सम्बन्धमात्रम् । 'उपमितं व्याघ्रादिभिः —' (२. १. ५६) इति समासः । अथवा वीतबलाहकाया इत्येतद्दिव इत्यस्य विशेषणम् । उभयथाप्यर्वाक्पदचारिणामर्वाग्जलग्राहिणां मेघानां सम्पर्केण कृता वृष्टेः कालुष्यशङ्का निरस्यत एव । एषेति । विविधदुःखानि विधूय विशिष्टाह्लादविधायित्वेन स्फुटतरमनुभूयमानेत्यर्थः । यैः पुण्यस्योपचयः परिपोषः न आप्तः न लब्धः ते अनाप्तपुण्योपचयाः, तैर्दुरापा कृच्छ्रेण प्राप्या, नैव प्राप्येत्यभिप्रायः । निर्धूतरजा

---

१. 'कदर्शनं भ', २ 'तत्सं' क. घ. पाठः. ३. ४ 'वा' ख. ग. पाठः. ५. 'क्पदग्रा' क. घ. पाठः. ६. 'प्यानेनै' क. ग. पाठः. ७. 'त्यर्थः ।' ख. पाठः.

इति । निरित्युपसर्गो बहिःक्षेपे वर्तते । रागादिदोषनिदानं दुरितमिह रजःकार्यतया रजःशब्देन लक्ष्यते । निर्धूतं बहिः क्षिप्त्वा कम्पितं दूरस्थतां नीतं रजः यया सा निर्धूतरजाः । भवद्दर्शनेन समस्तं रज एव निर्धूतम् । तत्कार्यमशेषं दुरितं निर्धूतमिति प्रतिपत्तिर्लक्षणाफलम् । फलस्य सवित्रीति । फलस्य प्रयोजनस्य ऐहिकामुष्मिकस्य । सवित्री जनयित्री । विशेषणत्रयेण मुनीन्द्रदर्शिनः कालत्रयेऽपि पुण्यातिशयवत्त्वं व्यज्यते । पूर्वस्मिन् विशेषणे मुनीन्द्रदर्शनस्य पुण्योपचयं विना दुरापतोक्त्या तद्दर्शिनः पुण्यातिशयवत्त्वं व्यज्यते । तादृशमुनीन्द्रदर्शनं पुनः स्वयं पुण्यरूपतया तदानीं दुरितौघनिर्धूतिकरं पश्चादभीष्टफलजनकं चेत्युत्तराभ्यां विशेषणाभ्यां वर्तमानभविष्यत्कालयोरपि तद्दर्शिनः पुण्यातिशययोगित्वं गम्यत एव । वर्तमानस्यैव रजोनिर्धूननस्य सुकरत्वमविलम्बितत्वं च व्यञ्जयितुं भूतार्थो निष्ठाप्रत्ययः प्रयुक्तः । भावस्त्विममर्थं 'हरत्यघम्'(स० १. श्लो० २६)इत्यादिना श्लोकेन व्याचष्टे । दृष्टान्तेऽपि विशेषणानि योजनीयानि । परममङ्गला नभोगङ्गाजलमयी वृष्टिरपि पुण्योपचयं विना दुर्लभैव । ग्रीष्मसमये पार्थिवरसेषु रविकिरणशोषितेषु शिथिलावयवाया भुवः समुद्भूतं रजो यया निर्धूतं सा निर्धूतरजाः । ग्रीष्मसमय एव शरीरिणां शोषकस्य निरसनीयस्य रजसः सम्भव इति तेन वृष्टेः सन्तापनोदिता व्यज्यते । ग्रैष्मिकस्य सोष्मणो रजसो निर्धूनने तदविनाभूतः सन्तापो निर्धूत एव । रजस एवंविधस्य विशेषस्याविवक्षायां व्यर्थविशेषणतैव स्यात् । वृष्टिरपि सस्यादिसमृद्धिविशेषरूपस्य फलस्य सावित्री । अनभ्रवृष्टिरैहिकमेव फलं जनयति । मुनिदर्शनं तु ऐहिकमामुष्मिकं चेति व्यतिरेकं व्यञ्जयितुमुपमा स्वीकृता, न रूपकम् । सर्वत्र चोपमारूपकातिशयोक्तिषु यथोत्तरं साधर्म्यादिप्रतीतिप्रकर्षोऽवगन्तव्यः ॥ ५ ॥

एवं मुनीन्द्रदर्शनस्य श्रेयस्करतामुपपाद्य तदभ्यागमनस्य तदतिशयमुपपादयति — अद्येत्यादिना ।

**अद्य क्रियाः कामदुघाः क्रतूनां सत्याशिषः सम्प्रति भूमिदेवाः ।**
**आ संहतेरस्मि जगत्सु जातस्त्वय्यागते यद् बहुमानपात्रम् ॥**

१. 'द्योत्यते' क. ख. पाठः

क्रतूनां क्रियाः अद्य कामदुघाः । क्रतूनां यज्ञानां राजसूयादीनाम् । क्रियाः कृतयः अनुष्ठानानि । अद्य इदानीम् । कामदुघाः इष्टप्रपूरिकाः । भवन्तीति वाक्यशेषः । काम्यमानवचनोऽत्र कामशब्दः । कर्मसाधनो घञ्प्रत्ययः । 'दुहः कब् घश्च'(३. २. ७०) इति कर्तरि कप्प्रत्ययः । 'दुह प्रपूरण' इति पठितोऽपि दुहिः क्षीरकर्मके गोस्तनापादाने कांस्यपात्राद्यधिकरणे पूरणविशेषे प्रयुज्यते । तेन दुहिकर्मणां कामानां क्षीरसाम्यं गम्यते । असञ्जातपीडापचयाभ्यः क्रतुक्रियाभ्यः कामानां निष्पादनमिह दोहनत्वेनारोपितम् । भोक्तुरभोक्तुर्वा चेतनस्यैव कामदोहनकर्तृत्वं सम्भवति, न त्वचेतनानाम् । भोगसाधनतया प्रतीयमानगोसाम्यानां क्रतुक्रियाणां दोहनस्य सौकर्यविवक्षया कर्तृत्वमारोपितमेव, न मुख्यमित्यवगन्तव्यम् । कामानां क्षीरसाम्येन प्रतिदिनं नवत्वेनोत्पत्तिः । क्रतुक्रियाणां गोसाम्येन पुनःपुनः कामोपादने शक्त्यपरिसमाप्तिश्च द्योत्यते । कस्य क्रतुक्रियाः कामदुघा इत्याकाङ्क्षायां सामर्थ्यान्ममेति प्रतीयत एव । क्रतुप्रतिपादकवेदभागाध्ययनेन दानविशेषेण च क्रतूनां फलं भवत्येव । तादृशास्त्वमुख्याः क्रतवः । साङ्गोपाङ्गमनुष्ठिताः क्रतवो मुख्या इति क्रतूनां मुख्यत्वं द्योतयितुं क्रतूनां क्रिया इत्युक्तं, न क्रतव इत्येव । कात्स्न्येन सम्यगनुष्ठिताः समस्ता मम क्रतव इदानीं चिरायाभीप्सितप्रदाः संवृत्ता इति तात्पर्यार्थः । न केवलं क्रतुक्रिया ममेदानीमभिमतदायिकास्तत्फलोपचयहेतवो ब्राह्मणानां प्रीतयोऽपीत्याह — भूमिदेवाः सम्प्रति सत्याशिष इति । भूमौ द्विजा वसन्ति । त्रिदशास्तु दिवीति स्थानभेदमात्रकृतस्तेषां भेदः । समुचितनिग्रहानुग्रहसामर्थ्यं तेषामुभयेषां समानमेवेति द्योतयितुं भूमिदेवा इत्युक्तं न विप्रवर्या इति । सम्प्रति इदानीम् । सत्याशिष इति । सत्या तथाभूतार्था आशीः अभिमताशासनं येषां ते सत्याशिषः । अत्रापि सामर्थ्याद् भवन्तीति ममेति चापेक्षितं पदमापतत्येव । हविर्भिरभ्यर्चिता देवा इव दक्षिणाभिः संमानिताः संप्रीता द्विजोत्तमाः परममभिमतं ते भूयादिति यामाशिषं मयि प्रायुञ्जत, साद्य परिपूर्णफला जातेति तात्पर्यार्थः । अद्येत्यस्यानुषङ्गेणैव विवक्षितार्थसिद्धौ तदेकार्थं सम्प्रतीति पदं पुनः प्रयुक्तम् । तेन क्रतुक्रियाणामिव द्विजाशिषां श्रेयस्करत्वे नैरपेक्ष्यं द्योत्यते । उक्तेऽर्थे हेतुमाह — त्वय्यागते आ संहृतेर्जगत्सु बहुमानपात्रं जातोऽस्मि यदिति । बहुमानस्यादरस्य पात्रं भाजनमसाधारणो विषयो जातः संवृत्तः ।

अस्मीत्यव्ययमहमित्यस्यार्थे वर्तते । यदिति । यदेतद् दृष्टं फलं तत इत्यर्थः । उत्तरवाक्यगतो यच्छब्दः पूर्ववाक्यगतस्य तच्छब्दस्य प्रयोगं नापेक्षत इति यच्छब्दप्रयोगेणैव तत इत्यर्थः सिध्यति । पात्रशब्दस्य नियतनपुंसकतया युधिष्ठिरविशेषणजातशब्दान्वयेऽपि न पुल्लिङ्गता । जन्मान्तरप्राप्तौ प्राग्जन्मसंस्थानमिव युधिष्ठिरस्य तदानीमभिनवबहुमानविषयताप्राप्तौ रिपुपरिभवकृतमनादरणीयत्वं स्मृतिविषयतामपि न प्राप्तं कुतः स्थितमिति द्योतयितुमस्मीत्यनेनैव विवक्षितार्थसिद्धौ पुनर्जात इत्युक्तम् । जगत्स्वित्यनेन बहुमानस्य देशसङ्कोचो बहुमन्तृसङ्कोचश्च निरस्यते । न ग्रामे नगरे जनपदे वर्षे भूमौ वा, किन्तु समस्तेषु[2] भुवनेषु समस्तेषु पुरुषेष्वित्यर्थः । आ संहृतेरित्यनेन कालसङ्कोचः प्रतिक्षिप्यते । न कानिचिद्दिनानि कांश्चिन्मासान् कानिचिद्वर्षाणि कानिचिद्युगानि, किन्तु लोकसंहारावधीत्यर्थः । कर्मविशेषानुक्त्या सर्वमेव जगदविशेषेण संहृतेः कर्मतया प्रतीयत एव । आङत्र मर्यादार्थः । 'पञ्चम्यपाङ्परिभिः' (२. ३. १०) इति पञ्चमी । त्वय्यागत इति । निमित्तसप्तम्येषा । आगतेन त्वयेत्यर्थः । अथवा 'यस्य च भावेन भावलक्षणम्' (२. ३. ३७) इति सप्तमी । मुनीन्द्रागमनेन युधिष्ठिरस्य बहुमानपात्रं[3] जन्म लक्ष्यते । जगत्स्वित्यधिकरणे सप्तमी । तवागमनेन जगदधिकरणस्य लोकसंहारावधेर्बहुमानस्य असाधारणो विषयो जातोऽस्मि यत्, ततः समस्तानि मम पुण्यान्यद्य पुष्कलफलानि जातानीति तात्पर्यार्थः ॥ ६ ॥

एवं मुनीन्द्रागमनस्य त्रिवर्गापवर्गहेतुतामभिव्यज्य तद्दर्शनमात्रायत्तानि तदानीं स्वेप्सितान्यैहिकानि विविच्य दर्शयति — श्रियमित्यादिना ।

**श्रियं विकर्षत्यपहन्त्यघानि श्रियः परिस्नौति तनोति कीर्त्तिम् ।**
**सन्दर्शनं लोकगुरोरमोघं तवात्मयोनेरिव किं न धत्ते ॥ ७ ॥**

तव सन्दर्शनं श्रियं विकर्षति । तव इति कर्मणि कर्त्तरि वा षष्ठी । सन्दर्शनमभिमुखदर्शनम् । श्रियं धनधान्यादिसमृद्धिं तदभिमानिनीं देवतां वा । विकर्षति प्रसह्य दूरादानयति । विरत्र दूरार्थद्यो-

---

१. 'स्य स' ख. पाठः, २. 'स्तेषु भुवनेषु पु', ३. 'त्रताज' क. पाठः.

तकः। अविधेयस्य चेतनस्याचेतनस्य वा बलेन स्वान्तिकप्रापणे कर्षतिर्वर्तते। पराङ्मुखीमागन्तुमनिच्छन्तीमपि श्रियमानयति, किं पुनरागच्छन्तीमागमिष्यन्तीं वेति तात्पर्यार्थः। पुरुषस्य दुरितैः पराङ्मुखीकृता श्रीः कथं बलादानेतुं शक्येत्यत्राह — अघान्यपहन्तीति। अघानि दुरितानि अपहन्ति अपहृत्य हिनस्ति। यैरिह श्रीः पुरुषात् पराङ्मुखी क्रियते, तानि दुरितानि समुन्मूलयतीति भावः। ननु पुण्येनैव श्रीरभिमुखी क्रियते न दुरितापनोदमात्रेणेति, तत्राह — श्रेयः परिस्नौतीति। श्रेयः पुण्यम्। जातावेकवचनम्। परिस्नौति फलोन्मुखं करोति। अभ्यन्तरस्य क्षीरस्य स्तनमुखं प्रति क्षरणं स्नौतेर्मुख्योऽर्थः। अत्र तु वासनारूपस्य सूक्ष्मस्य पुण्यस्य स्थूलफलप्रवाहोत्पत्तिकरः समुन्मेषविशेषस्तस्यामुख्योऽर्थो विवक्षितः। श्रियः समागमने चिरस्थितौ च हेतुं पुण्यविशेषं मनोवाक्कायेष्वभिव्यञ्जयतीति भावः। ननु जनस्यादरमनुरागं च दृष्टं निमित्तं विना पुण्यमात्रेण न श्रीः[२] पुरुषमभिगच्छति। प्रख्याते प्रतापवत्येव जनस्यादरानुरागौ भवतः इति, तत्राह — कीर्तिं तनोतीति। सर्वजनीनमादरमनुरागं च जनयन्तीं प्रशस्तिं विस्तारयतीत्यर्थः[३]। अत्यल्पमिदमुच्यते — तव सन्दर्शनमिमानि कतिपयानि फलानि जनयतीति। एतत् स्वविषयाणां समस्तान्यभिमतानि जनयतीत्याह — किं न धत्त इति। किमित्यनेनाकाङ्क्षितमर्थसामर्थ्यादभिमतमिति सिध्यति। किमभिमतं न कुरुत इत्यर्थः। अयुङ्क्तेत्यत्र युजिरिव केवलोऽप्ययं दधातिरपेक्षितमर्थं वक्तुं समर्थ इति वीत्युपसर्गो न प्रयुक्तः। अभिमतविधानं स्वकर्तृकदर्शनसम्बन्धि श्लाघ्यताख्यं फलं जनयतीति धत्त इत्यात्मनेपदेन द्योत्यते। तव सन्दर्शनमित्युत्तरवाक्येष्वनुषज्यते। मुनीन्द्रदर्शनस्यैकान्तिकफलत्वं फलव्यभिचारव्युदासेन विशदयति — अमोघमिति। एतत् सन्दर्शनविशेषणम्। अफलं मोघं तद्विपरीतममोघं, कदाचिदपि तव सन्दर्शनस्य न फलव्यभिचार इति भावः। तव सन्दर्शनमनुग्राह्यानुग्रहे स्वयमेव पर्याप्तं त्वदिच्छामपि नापेक्षते, कुतो हेत्वन्तरमिति द्योतयितुं दर्शनस्य कर्तृत्वमुक्तम्। अनिच्छापूर्वको दर्शनादि स्वसम्बन्ध एव त्वयानुग्रहः इच्छापूर्वकोऽपीति द्योतयितुं तवेत्यस्य विशेषणं कृतं लोकगुरोरिति(?)। लोकस्य हितोपदेष्टुः। इहार्थाल्लोकशब्देन अनुग्रहस्य विषयसङ्कोचो व्युदस्यते। गुरुशब्देन

१. 'स्वा श्रीः', २. 'स्नाता', ३. 'तामि' म. पाठः. ४. 'कं' क. पाठः.

तु ज्ञानशक्त्यायत्तो मुनिजनोचितोऽनुग्रहः, न प्रवृत्तिप्रबन्धायत्तः सुहृदुचित इति द्योत्यते । विजयोपायज्ञापनविद्योपदेशादिरूपे मुनीन्द्रोचित एव पराशरात्मजकर्तृकेऽनुग्रहे युधिष्ठिरस्येच्छा, न देवाद्युचिते वरप्रदानादिरूपे, न सुहृदाद्युचिते साहचर्यरूप इति च गुरुशब्देन द्योत्यते । मुनीन्द्रस्य सर्वानुग्रहसामर्थ्यं सर्वसाम्यं च द्योतयितुं दृष्टान्तमाह— आत्मयोनेरिवेति । आत्मयोनेः स्वयंभुवः, जगत्स्रष्टुरित्यर्थः । स्वयंभुवः सन्दर्शनमपि स्वविषयाणां श्रीप्रभृतीन्यभिमतानि फलानि जनयति । लोककर्तुस्तस्य लोकगुरुत्वं प्रसिद्धमेव । यथा सुरासुराणां साधारणोऽपि स्वयंभूरुदर्के विशुद्धचेतसां विबुधानां विजयायैवानुकूलो भवति, न दुष्टचेतसां दैत्यानाम् । तथैव पाण्डवधार्तराष्ट्राणां साधारणोऽपि द्वैपायनो धार्मिकाणां पाण्डवानामेव साह्यं करोति, न त्वधार्मिकाणां धार्तराष्ट्राणामिति चात्मयोनिदृष्टान्तेन द्योत्यते ॥ ७ ॥

एवं मुनीन्द्रदर्शनस्याभ्युदयदायित्वमुपपाद्य तदानीमात्मनैवानुभूतं मुनीन्द्रसन्निधेः शक्तिविशेषं दर्शयति — श्च्योतन्मयूख इत्यादिना ।

**श्च्योतन्मयूखेऽपि हिमद्युतौ मे ननिर्वृतं निर्वृतिमेति चक्षुः ।**
**समुज्झितज्ञातिवियोगखेदं त्वत्सन्निधावुच्छ्वसितीव चेतः ॥ ८ ॥**

त्वत्सन्निधौ मे चक्षुः निर्वृतिमेति । निमित्तसप्तम्येषा । तव सन्निधिना निमित्तेनेत्यर्थः । दुःखानन्तरमुपजातं सुखं निर्वृतिशब्देनोच्यते । चक्षुषो निर्वृतिर्विकासः । दुःसहदुःखतप्तेन चक्षुषा निर्वृतिरीप्सिततमैवेति द्वितीयया द्योत्यते । निर्वृतिपूर्वकालीनं दुःखविशेषमभिव्यङ्क्तुं चक्षुर्विशिनष्टि — समुज्झितज्ञातिवियोगखेदमिति । खेदो दैन्यम् । इहौचित्याच्चक्षुषो विकासविरहः खेदः । ज्ञातिभिर्वियोगो ज्ञातिवियोगः, तद्धेतुकः खेदो ज्ञातिवियोगखेदः । 'कर्तृकरणे कृता बहुलम्' (२. १. ३२) इति समासः । समुज्झितः कात्स्न्येन त्यक्तः ज्ञातिवियोगखेदः येन तत् तथोक्तम् । तव सन्निधेरन्यैः सर्वैरपि दुष्करा मम चक्षुषो निर्वृतिरिति द्योतयितुं विशेषणान्तरं कृतं — हिमद्युतावपि न निर्वृतमिति । हिमद्युतौ शीतरश्मौ, चन्द्र इत्यर्थः ।

चन्द्रस्य सन्तापहरणे शक्तिप्रकर्षं प्रकटयितुं हिमद्युतावित्युक्तं न निशाकर इति । एषापि निमित्तसप्तमी । हिमद्युतिना निमित्तेनेत्यर्थः । 'यस्य च भावेन भावलक्षणम्' (२. ३. ३७) इतीदं सूत्रं सामर्थ्यान्निमित्तार्थेऽपि सप्तमीं प्रयोजयति । निमित्तनिमित्तिनोरपि लक्षणलक्ष्यभावोऽस्त्येव । अत्रापि हिमद्युतिसत्ताक्रिया निर्वृतिक्रियाया निमित्ततया लक्षणम् । चन्द्रस्य निर्वृत्यनिमित्ततायामौत्सर्गिकं विरोधमपिशब्दो द्योतयति । न निर्वृतमनिर्वृतमित्यर्थः । नञर्थस्य नशब्दस्य सुप्सुपेति समासे ननिर्वृतमिति रूपं, नैकमितिवत् । हिमद्युतावपि न निर्वृतं यत् तन्निर्वृतिमेतीति यत्तदोराक्षेपेण वाक्यभेदो वा कल्प्यः । यौगिको हिमद्युतिशब्दः । चन्द्रमण्डलान्तर्गताया द्युतेरेव शैत्यमाह्लादकत्वं वा, न तु बहिः प्रसरतां मयूखानामपीति शब्दशक्तिविमर्शने हिमद्युतिशब्दस्यापरिपूर्ण एव चन्द्रः साक्षाद्विषयो भवति, न तु परिपूर्णोऽपि । तेन तस्य परिपूर्णताव्यक्तये विशेषणं कृतं— श्च्योतन्मयूख इति । श्च्योतन्तः क्षरन्तो मयूखा रश्मयो यस्य स तथोक्तः, तस्मिन् । श्च्योततिना मयूखानाममृतरसमयत्वं लट्प्रत्ययेन पुनस्तेषां क्रमेण सर्वतः प्रसरणं प्रतीयते । अमृतरसमयः प्रसृमररमयूखः परिपूर्णः पूर्णिमाचन्द्रोऽपि ज्ञातिसुहृदाद्यदर्शनदीनस्य मम चक्षुषो निर्वृतिं विधातुं न पर्याप्त इत्यभिप्रायः । तव सन्निधिना क्षणिका मम चक्षुषो निर्वृतिरेव न क्रियते, अन्तःकरणे समवायिनी स्थायिनी स्वस्थता चेत्याह — चेत उच्छ्वसितीवेति । चेतः चित्तम् । उच्छ्वसिति चिरस्थायिनो दुःखस्यापगमेन सत्त्वसुखोन्मेषमयीं स्वच्छामिच्छानुरूपां स्ववृत्तिं करोतीत्यर्थः । इवशब्दश्चित्तोच्छ्वासस्य वैकल्यं व्यञ्जयन् सपत्नोच्छेदसाम्राज्यलाभव्यवसायस्तस्य तदानीमपि न निष्पन्न इति द्योतयति । पूर्वोक्तं विशेषणद्वयं चेतसाप्यन्वेतुमुचितमेव । ज्ञातिवियोगखेदत्यागोक्त्या पितामहस्य मुनीन्द्रस्य ज्ञातित्वं युधिष्ठिरस्य ज्ञातिसंश्लेषाभिलाषश्च सूच्यते ॥ ८ ॥

एवं मुनीन्द्रसन्निधिमात्रेण कृतामात्मनः कृतार्थतां विभाव्य हृदि स्थितां तदभ्यागमहेतुपरीप्सां प्रकाशयति — निरास्पदमित्यादिना ।

१. 'शत्रा पु', २. 'त्व' घ. पाठः

निरास्पदं प्रश्नकुतूहलित्वमस्मास्वधीनं किमु निस्पृहाणाम् ।
तथापि कल्याणकरीं गिरं ते मां श्रोतुमिच्छा मुखरीकरोति ॥

प्रश्नकुतूहलित्वं निरास्पदं, ममेत्यर्थात् सिध्यति । ज्ञीप्साद्योतकं वचनं प्रश्नः । औत्सुक्यं कुतूहलित्वम् । प्रश्ने कुतूहलित्वं प्रश्नकुतूहलित्वम् । मुनेराभाष्यतया तद्विषयत्वं प्रश्नस्य प्रतीयते । 'हेतुं तदभ्यागमने परीप्सुरि'ति वाक्योपक्रमे युधिष्ठिरबुभुत्सितत्वेनोपक्षिप्तो मुनीन्द्राभ्यागमहेतुरिहौचित्यात् प्रश्नकर्म भवति । तेन प्रश्नकुतूहलित्वम् इत्येव प्रयुक्तेऽपि त्वदभ्यागमनहेतुप्रश्नकुतूहलित्वमित्यर्थः पूर्वापरपरामर्शिनां प्रतिपत्तॄणां चेतसि स्फुरत्येव । निरास्पदमिति । आस्पदं प्रतिष्ठा आश्रयः । अत्र त्वास्पदशब्देन हेतुविशेषो विवक्ष्यते[1] । हेतोः प्राबल्यं द्योतयितुं स्वशब्दं विहायास्पदशब्देन हेतुरुक्तः । निरास्पदं निरस्तप्रबलहेतुकमित्यर्थः । उक्तेऽर्थे हेतुमाह — निस्स्पृहाणामस्मास्वधीनं किमु । निस्स्पृहाणां निरस्तसमस्तविषयेप्सूनामित्यर्थः[2] । अस्मच्छब्देन जगद्गुप्त्यादिकरी क्षत्रजातिरेवाक्षिप्यते, न पाण्डवपञ्चकमात्रं पौरवमात्रं वा । आयत्तपर्या(यःयोऽ)स्वतन्त्रार्थोऽयमधीनशब्दः । (उ)उत वा इत्येते शब्दाः कियदादीनामुपरि प्रयुक्तास्तदर्थमात्रपर्यवसिता इति किमुशब्देन किंशब्दार्थ एव विवक्ष्यते । प्रेप्सितधर्मादयोऽकृतार्था एव द्विजा नरदेवदेवाद्यायत्तसिद्धयः, न तु निरस्तसमस्तस्पृहा जगदनुग्रहादिसमर्थाः परमेश्वरकल्पा भवादृशा इति भावः । एवमात्मनो मुनीन्द्रविषयप्रश्नहेत्वसंभवमुपपाद्य हेतुमनपेक्ष्य मनसि स्फुरन्तीं तदागमहेतुप्रश्नोत्सुकतां वचोभङ्ग्या प्रकाशयति — तथापीत्यादिना । तथापि ते गिरं श्रोतुमिच्छा मां मुखरीकरोति । तथापीति एवं त्वद्विषयप्रश्नहेत्वसंभवे सत्यपीत्यर्थः । गिरः शुश्रूषाविषयतायां हेतुतया विशेषणमुपादत्ते[3] कल्याणकरीमिति । ऐहिकामुष्मिकाभ्युदयविधानशीलामित्यर्थः । द्वैपायनवाचो मानुषादिवाच इव न ज्ञापकत्वमेव, कल्मषप्रमोषपुण्योन्मेषविधायिन्यास्त्वस्या[4] निगमगिर इव कारकत्वमप्यस्तीत्यभिप्रेत्य गिरो मुनीन्द्रसम्बन्धं द्योतयत् ते इति

१. 'ते । विविच्यते । हे', २. 'प्सूना' ख. पाठः. ३. 'मादत्ते' क. घ. पाठः.
४. 'स्वस्या' ख. पाठः.

विशेषणं कृतम् । पदच्युतानामस्माकं पदप्राप्तिरूपं कल्याणमुपायोपदेशप्रणाल्या प्रयोजयेति युधिष्ठिरप्रार्थनावचोभङ्ग्या कल्याणकरीमिति विशेषणेन व्यज्यते । मुखरीकरोतीति । पूर्वममुखरमिदानीं मुखरं करोतीत्यर्थः । वाचालपर्यायो मुखरशब्दः । च्विप्रत्ययेन युधिष्ठिरस्य नैसर्गिकं मितभाषित्वं मुखरत्वं तु कादाचित्कमिति द्योत्यते । मुनिवचनश्रवणेच्छाया मुखरीकरणकर्तृत्वमुक्तं न मुखरीभावहेतुत्वम् । तेन तस्याः प्राबल्यं प्रकाश्यते ॥ ९ ॥

इत्युक्तवानुक्तिविशेषरम्यं मनः समाधाय जयोपपत्तौ ।
उदारचेता गिरमित्युदारां द्वैपायनेनाभिदधे नरेन्द्रः ॥ १० ॥

इत्युक्तवानित्यादि । नरेन्द्रः द्वैपायनेन इति गिरमभिदधे । कीदृशो नरेन्द्रः, जयोपपत्तौ मनः समाधाय इत्युक्तवान् । जयप्राप्तिर्जयोपपत्तिः । अथवा जयोपायो जयोपपत्तिः । तदा, जय उपपद्यते प्राप्यते अनयेति करणे क्तिन्प्रत्ययः । मनः मननसाधनमन्तःकरणम् । समाधाय एकाग्रं कृत्वा । समाधायेति क्त्वाप्रत्ययेन जयोपायविमर्शहेतुकता वचनस्य व्यज्यते । तदानीं जयोपायविषया सङ्कल्पविकल्पात्मिकैव वृत्तिर्युधिष्ठिरस्यासीद्, न व्यवसायात्मिकेति द्योतयितुं मन इत्युक्तं न मतिमिति । इति इत्थम् । अनेन उक्तेन प्रकारेण । उक्तवान् गदितवान् । पर्यवसिते वाक्ये इत्यर्थः । तेन मुनीन्द्रस्य वचनावसरो व्यज्यते । उक्तिविशेषरम्यमिति । उक्तेः भणितेः विशेषेण असाधारणेन प्रकर्षेण रम्यं रमणीयं ग्राम्यतादिदोषविरहात् सहृदयहृदयसंवादीत्यर्थः । वचिक्रियाविशेषणमेतत् । 'अनाप्तपुण्योपचये'त्यादौ 'मुखरीकरोती'त्यन्ते वाक्यसन्दर्भे सपत्नोच्छेदं विधाय मम साम्राज्यं सम्पादयेति मुनीन्द्रं प्रति प्रार्थनाविशेषो वचोभङ्ग्या व्यज्यते । कुरुकुलगुरुं मुनीन्द्रं प्रत्यनुचितविषयोऽपि युधिष्ठिरस्य प्रार्थनाविशेषस्तदानीं क्रतुक्रियादीनां कामदुघत्वाद्युपन्यासेन मुनीन्द्रगिरः कल्याणकरत्वोक्त्या च प्रद्योतितः साक्षादुच्यमान इव न ग्राम्यतादोषमावहति । सर्वोऽप्यर्थो गम्यमानो रम्यो भवति, उच्यमानस्तु प्रत्युतेत्यभिप्रेत्योक्तिविशेषरम्यमित्युक्तम् । हृदयङ्गमध्वननसामर्थ्यमिहोक्तिविशेषशब्देन

१. 'योगतिप्रनाल्या', २. 'जक इति', ३. 'ना च व' ख. पाठः.

विवक्षितम् । उदारचेता इति । अनुग्रहशीले महति चोदारशब्दो वर्तते । अनुग्रहशीलं मुनिदेवादिभ्यो महान्तमनुग्रहमाशासानं युधिष्ठिरस्य चेत एव ज्ञातीनां सुयोधनादीनां वधकर्तव्यताबुद्ध्या परमनिःश्रेयसविधायिनो मुनीन्द्रादतिफल्गुसपत्नजयसाम्राज्यमात्रानुग्रहलिप्सया च लज्जितम् । न तूदारप्रकृतिर्युधिष्ठिरस्तदुदारतां निनायेति द्योतयितुमुदारचेता इत्युक्तं नोदार इति । उदारामिति । उत्कृष्टां समग्रानुग्रहसमर्थामित्यर्थः । गिरमिति आम्नायवत् प्रमाणभूतां वाचमित्यर्थः । आमनत्यर्थाद् गृणातेः क्विपि निष्पन्नो गीश्शब्दः । निःश्रेयसाद्यनुग्रहकरत्वरूप एव मुनीन्द्रगिरो गुणः प्रतिपादनविषयः । उक्तिप्रकारविशेषकृतस्तु माधुर्यादिरूपः श्रुतीन्द्रियग्राह्यतया स्वयमेव स्फुटतां यास्यतीति द्योतयितुमुदारशब्देन गिरं विशेष्याभिधाक्रियाविशेषणत्वेनेतिशब्दः प्रयुक्तः— इत्यभिदध इति । इत्थमनेन वक्ष्यमाणेन प्रकारेणेत्यर्थः । अभिदधे ऊचे । ब्रुविपर्यायत्वादभिदधातिर्द्विकर्मकः । द्वैपायनशब्दो व्यासे योगरूढः । द्वीपशब्दादपत्यार्थे 'नडादिभ्यः फक्' (४. १. ९९) इति फक्प्रत्यये कृते द्वैपायन इति रूपम् । स्वेच्छायत्ताभिव्यक्तजन्मनो नारायणात्मनो व्यासस्योत्पत्तौ यमुनाद्वीपस्य यादृशं पितृत्वं, पराशरस्यापि तादृशमेवेति द्योतयता द्वैपायनशब्देन तस्य ज्ञानैश्वर्यविशेषः प्रकाश्यते । नरेन्द्र इति । नराणां मनुष्याणामिन्द्रः प्रधानः, ईश्वर इत्यर्थः । स्वाभिधेयसमवेतां सर्वानुष्ठानशक्तिं वीर्यविनयादीनां गुणानां सामग्रीं च व्यञ्जयन् युधिष्ठिरविषयो नरेन्द्रशब्दः सुयोधनं विहाय द्वैपायनस्य युधिष्ठिरे साम्राज्यं समर्पयितुं समीहा समुचितैवेति द्योतयति ॥ १० ॥

**चिचीषतां जन्मवतामलघ्वीं यशोवतंसामुभयत्र भूतिम् ।**
**अभ्यर्हिता बन्धुषु तुल्यरूपा वृत्तिर्विशेषेण तपोधनानाम् ॥**

**चिचीषतामित्यादि** । जन्मवतां बन्धुषु तुल्यरूपा वृत्तिरभ्यर्हिता । जन्मवतामिति जन्मना नित्यान्वितानां संसारिणां पुंसामित्यर्थः । नित्ययोगे मतुप्प्रत्ययः । बन्धुषु इति विशिष्टसम्बन्धविषयेषु सुतसोदरादिष्वित्यर्थः । तुल्यरूपेति । तुल्यं तुलासंमितमन्यूनातिरिक्तं रूपं समस्त आत्मा यस्याः सा तुल्यरूपा । समस्ताया वृत्तेस्तुल्यत्वमुचितं, न तु तदेकदेशस्येति रूपशब्देन द्योत्यते । वृत्तिर्मनोवाक्कायाश्रयो व्यापारः । अभ्यर्हिता अव्यवधानेन पूजिता,

१. 'ता आ' स. पाठः.

निरुपाधिकस्यादरस्य गोचर इत्यर्थः। सर्वेषां बन्धूनां सर्वेषु बन्धुषु सततमनुजिघृक्षैव युक्तः न तु कदाचिदुपेक्षेत्याह — उभयत्र भूतिं चिचीषतामिति। उभाववयवौ यस्य तदुभयं, तत्र। 'सप्तम्यास्त्रल्' (५. ३. १०) इति सामान्येन विहितोऽपि त्रल्प्रत्ययो दाप्रत्ययवदेकवचनान्त एव प्रयोगेषु दृश्यते। भिन्नस्वभावव्यक्तिविवक्षया बन्धुष्विति बहुवचनम्। उभयत्रेत्येकवचनं तु जातिविवक्षया। भागद्वययुक्ते बन्धुसमुदाय इत्यर्थः। बन्धूनामवान्तरभेदस्याभेदपर्यवसायित्वमेवानुसन्धेयं, न विरोधपर्यवसायित्वमिति द्योतयितुमुभयत्रेत्युक्तं नोभयेष्विति। गुप्त्यादि कदाचित् कैश्चिदिष्यते। समृद्धिस्तु त्रिवर्गैकहेतुतया सर्वैः सदा प्रार्थ्यत इति भूतेश्चिचीषाविषयत्वमुक्तं न गुप्त्यादेः। अलघ्वीमिति। अत्र नञो विरुद्धार्थतया गुर्वीमिति लभ्यते। उदासीनादिषु स्वप्रयोजनाय जनैः समृद्धिमात्रं संपादयितुमिष्यते, बन्धुषु निर्दोषा गुणान्विता प्रशस्यैव समृद्धिः स्वप्रयोजनमनपेक्ष्यापीष्यत इति यशोवतंसामिति भूतेर्विशेषणेन व्यज्यते। यशोवतंसत्वरूपणे हि भूतेः कन्यासाम्यं गम्यते। तेन यथा संवर्धिता विभूषिता कन्या चिरतरोपभोगाय परेषु प्रतिपाद्यते, तथैव बन्धुषु भूतिरिति द्योत्यते। ममत्वाकृष्टानां संसारिणामपि बन्धुषु साम्यमेवोचितं न वैषम्यं, निर्ममाणां सर्वसमानां तपोधनानां किं पुनरित्याह — तपोधनानां विशेषेणेति। तुल्यरूपेत्याद्यनुषज्यते। तपोधनानां विशेषेण तुल्यरूपा बन्धुषु वृत्तिरभ्यर्हितेत्यन्वयः। विशेषेणातिशयेन, अतितरामित्यर्थः। मणिहिरण्यादिधनाभिलाष एव सर्वेषां वृत्तिवैषम्यमावहति। येषां तपस्विनां तप एव धनं न मणिहिरण्यादि, तेषां न बन्धुषु वृत्तिवैषम्यसम्भव इति तपोधनशब्देन द्योत्यते॥ ११॥

**तथापि निघ्नं नृप! तावकीनैः प्रह्वीकृतं मे हृदयं गुणौघैः।**
**वीतस्पृहाणामपि मुक्तिभाजां भवन्ति भव्येषु हि पक्षपाताः॥**

तथापीत्यादि। तथापि मे हृदयं निघ्नम्। तथापीत्यस्यार्थः पूर्वत्रोक्तः। सोऽत्रापि समानन्यायतयानुसन्धेयः। निघ्नमिति। अस्वतन्त्रं समं वर्तितुमसमर्थमित्यर्थः। हृदयस्य निघ्नतायां हेतुमाह — तावकीनैर्गु-

१. 'तिद्वयवि' क. पाठः. २. 'त्वमिति द्योतयितुमुभयमल', ३. 'था सम्बन्धितया यथा वि', ४. 'पुपुपृ', ... 'भ्रमिति' ख. पाठः.

णौघैः प्रह्वीकृतमिति । त्वदीयैः क्षत्रियमात्रेणालभ्यैर्भरतवंश्यदुर्लभैः पाण्डुसुतैरपि त्वदन्यैरसुलभैरित्यर्थः । 'युष्मदस्मदोरन्यतरस्यां खञ्च' (४. ३. १) इति खञ्प्रत्यये, 'तवकममकावेकवचने' (४. ३. ३) इति एकवचने परतो युष्मच्छब्दस्य तवकादेशे सति तावकीनैरिति रूपम् । गुणौघैरिति । गुणानां सत्यार्जवदयाक्षान्तिधैर्यादीनामोघैरविच्छिन्नैः समूहैरित्यर्थः । प्रह्वीकृतमिति इदम्प्रथमं प्रवणं कृतमित्यर्थः । मनुष्यादिरक्षणं क्षत्रियस्य प्रधानो गुणस्तवास्तीति तद्विरोधे गुर्वनुवृत्तिर्बाध्येति च नृपेत्यामन्त्रणेन द्योत्यते । ननु रागादिनिघ्नानां संसारिणामपि बन्धुषु प्रवृत्तिसाम्यस्यौचित्ये सति निस्स्पृहाणां साम्यविघातकं हृदयस्य निम्नत्वमयुक्ततरमिति तत्राह—वीतस्पृहाणामित्यादि। वीतस्पृहाणामपि भव्येषु पक्षपाता भवन्ति हि । भवितुं जनितुमेधितुं वा अर्हा भव्याः । जगदनुग्राहकजन्मलाभसमृद्धयो गुणवत्तरा इत्यर्थः । मुक्तिभाजामिति विशेषणेन वीतस्पृहतानियमो द्योत्यते । मणिहिरण्यादिविविधविषयस्पृहान्वितानामेव न केवलं, विगतसमस्तस्पृहाणामपि गुणवत्तरेषु निबिडतराः स्नेहविशेषा भवन्ति । न प्रतिभान्ति न क्रियन्ते वेत्यर्थः । और्वसंवर्त्तवसिष्ठादीनां सगरमरुत्तराघवादिविषया गुणप्रकर्षकृता स्नेहप्रकर्षता प्रसिद्धेति हिशब्देन द्योत्यते । बन्धुषु वृत्तिसाम्यमौत्सर्गिकं गुणप्रकर्षेणापवादेन बाध्यते इत्यभिप्रायः ॥ १२ ॥

कुरुकुलवृद्धेन धृतराष्ट्रेण राष्ट्रादसकृन्निर्वासिता वयं कथं गुणिन इति युधिष्ठिरस्य शङ्कायां भ्रान्तिमूलस्तेन युष्माकं त्यागो न तत्त्वावगतिहेतुक इत्याह—सुता न यूयमित्यादिना ।

**सुता न यूयं किमु तस्य राज्ञः सुयोधनं वा न गुणैरतीताः ।**
**यस्त्यक्तवान्वः स वृथा बलाद्वा मोहं विधत्ते विषयाभिलाषः ॥**

**सुता न यूयमित्यादि** । यूयं तस्य राज्ञः सुता न किमु । यूयमिति धृतराष्ट्रसोदरस्य पाण्डोः सुता इत्यर्थः । तेन सोदरसुताः सुता एवेति वदन्त्यो मन्वादिस्मृतयो द्योत्यन्ते । तस्येति । शतशृङ्गागमनादारभ्य युष्मान् सुतत्वेन स्वीकृतवतो युष्माभिश्च पितृत्वेनैव प्रतीतस्येत्यर्थः । राज्ञ इति स्व-

१. 'ह्रा अथि...' ... म ख. पाठः.

तन्त्रस्येत्यर्थः । औरसत्वाभावेन प्राप्तः सुतत्वनिषेधः किमुशब्देन क्षिप्यते । सुयोधनं गुणैर्नातीता वा किमु, यूयमित्यनुषज्यते । वाशब्दः समुच्चये[1] । गुणैः शौर्यवीर्यादिभिः । हेतौ तृतीया । सुयोधनकर्मकस्य पाण्डवकर्तृकस्य गुणहेतुकस्यातिक्रमणस्य निषेधः परिहासमुखेन प्राप्तो न वास्तवमुखेनेति क्षत्रियाणां प्रधानगुणस्य शौर्यस्याभावं सूचयता सुयोधनशब्देन द्योत्यते । स्वपुत्रत्वाद् गुणाधिकत्वाच्च पाण्डवा धृतराष्ट्रेण लालनीया एव नोपेक्षणीया अपि, कुतस्त्यक्तव्या इत्यभिप्रायः । एवं पाण्डवानामत्याज्यतामभिव्यज्य ते[2]-[3]स्यागिनस्तस्य दोषातिशयमाह — यो वस्त्यक्तवान् स वृथेति । वृथेत्यव्ययं क्रियाविशेषणं स्वान्वयाय त्यक्तवानिति क्रियापदमनुषञ्जयति । स वृथा त्यक्तवान् निर्हेतुकमुज्झितवानित्यर्थः । अथवा विफलपर्यायो वृथेत्यव्ययं द्रव्यविशेषणं, सः वृथा विफलः वन्ध्यजन्मेत्यर्थः । महर्षिसुतस्य तस्य सत्त्वमयः पितृसङ्क्रमितो यः प्रकृतिविशेषः, यश्च रजोमयो मातृसङ्क्रमितः, तयोर्मातृसङ्क्रमितेनैव प्रकृतिविशेषेण स युष्मांस्त्यक्तवान्, न सत्त्वोनुस्यूतेन पितृसङ्क्रमितेन स्वभावेनेति विभागं व्यञ्जयितुं यच्छब्दतच्छब्दौ प्रयुक्तौ न तच्छब्द एव । सत्पुत्रान् गुणोन्नतान् युष्मान् निष्कारणं त्यक्तवतो धृतराष्ट्रस्य नेत्रसममेव चित्तमिति युधिष्ठिरादिगुणैकदर्शिना मुनीन्द्रेणोक्तं नपुनः स्वपुत्रस्य गुणविशेषान् विमृश्य । विदुषोऽपि विषयाभिलाषः प्रसह्य मोहं कुरुत इति सर्वसाधारणेन दोषेण नायमपवदनीय इत्याह — बलाद्धीत्यादिना । विषयाभिलाषो बलान्मोहं विधत्ते वा । वाशब्दः पक्षान्तरं द्योतयति । बलादिति प्रसह्येत्यर्थः । मोहमन्यथाज्ञानम् । शास्त्रप्रमितं सोदरसुतानां सुतत्वं सर्वेषां नानुभवगम्यम्, आ जन्मनः स्नेहैकविषयाणामौरसानामात्मजत्वमनुभवसिद्धमिति निर्वृतिविधायितया विशेषतो बद्धेन्द्रियाः स्रक्चन्दनादिवत् तेऽपि विषयत्वेन विवक्ष्यन्ते ॥ १३ ॥

ननु स्वप्रयोजनाय सर्वो लोकः समीहते । प्रयोजनं च स्वात्मनः स्वात्मजानां चाभ्युदय इति स्वप्रयोजनार्थी धृतराष्ट्रः स्वात्मजविरोधिनां दायादानां निर्वासनं कृतवान् यत्, तद् विवेकहेतुकमेव न मोहमूलमिति शङ्कायामाह — जहातीत्यादिना ।

---

१. 'यार्थः । गु' क. घ. पाठः. २. 'तत्तत्या' ख. पाठः. ३. 'जि', ४. 'ततानु' क. घ. पाठः.

**जहाति नैनं कथमर्थसिद्धिः संशय्य कर्णादिषु तिष्ठते यः।**
**असाधुयोगा हि जयान्तरायाः प्रमाथिनीनां विपदां पदानि ॥**

एनं कथमर्थसिद्धिः न जहाति । एनमित्यनन्तरप्रस्तुतमन्वादिष्टं धृतराष्ट्रमित्यर्थः । अर्थसिद्धिरिति । अर्थस्य प्रयोजनस्य सिद्धिः पौष्कल्येन निष्पत्तिः । कथं केन प्रकारेण न जहाति न त्यजति । सर्वैः प्रकारैस्त्यक्तुमर्ह[२]तीत्यर्थः । गुणाधिकानां स्वपुत्राणां युधिष्ठिरादीनां त्यागस्याननुगुणत्वं द्योतयितुं नैनमित्युक्तं[३] न नो तमिति । पुत्रवित्तादिसमृद्धिरूपा अर्थसिद्धिर्यद्यपि धृतराष्ट्रे दृश्यते, तथापि पश्चादवश्यमेनमियं त्यक्ष्यति । तत् कथमिदानीमेवं[४] न त्यजतीत्यर्थः । अर्थसिद्धेस्तु त्यागे हेतुमाह — संशय्य कर्णादिषु तिष्ठत इति । इदं वाच्यमिदं वेति कृत्यसंशये यः कर्णादीन् कृत्यनिर्णयहेतुतयावलम्बत इत्यर्थः । 'प्रकाशनस्थेयाख्ययोश्च' (१. ३. २३) इति तिष्ठतेरात्मनेपदम् । ननु दुर्योधनस्य कृत्यसंशये कामं कर्णो निर्णयहेतुषु प्रथमो भवतु । धृतराष्ट्रस्य विधेयद्वैधे तु दुर्योधनस्यैव प्राधान्येन निर्णयप्रयोजकत्वमुक्तं 'दुर्योधनो मन्युमयो महाद्रुम' इत्यादिषु तस्यैव प्राधान्येन प्रतिपादनात्[५] । इति कथं कर्णादिष्वित्युच्यत इति चेत् । उच्यते । सत्यमस्त्येव दुर्योधनस्य साम्राज्ये प्राधान्यं, कृत्यनिर्णये तु कर्णस्यैव तद्युक्तं, तथापि दुर्योधनस्य तद्वात्सल्यनिघ्नस्य तत्साम्राज्यसंपादनैकरुचेर्धृतराष्ट्रस्य च सपत्नोच्छेदविधायियुद्धविषय एव सदा मन्त्रः[६] । तत्र च महेष्वासो महास्त्रविद् भार्गवशिष्य एव तयोर्द्वयोरपि कृत्यनिर्णयं प्राधान्येन प्रयोजयितुं पर्याप्त इति कर्णादिष्वित्युक्तं न दुर्योधनादिष्विति । किमौरसतया सुयोधनादयः साम्राज्यादौ नियोज्याः किं वा गुणाधिकतया युधिष्ठिरादय इत्येवंप्रकारेषु कृत्यसंशयेषु दुर्योधनस्याभिमानामर्षौ सन्धुक्षयतः समरसिन्धुकर्णधारस्य कर्णस्य वीरवादैः सौबलस्यच्छलकौशलोक्तिभिः दुःशासनस्य सपत्नशासनजल्पनैश्च विपर्यासितः पर्य[८]-

---

१. 'कृ', २. 'त्येवेत्य', ३. 'क्तं नो' क. घ. पाठः. ४. 'व प्र', ५. 'नात् । उ', ६. 'न्त्रः । स तत्र म', ७. 'साः सुताः सु' ख. पाठः. ८. 'र्यस्तधृ' क. पाठः.

स्तधृतिराम्बिकेयः स्वात्मजैः सुयोधनादिभिर्युधिष्ठिरादीनां निरासादि कारयितुं निश्चिनोतीत्यभिप्रायः । ननु कर्णादीनामुपायेन तेन समग्रं साम्राज्यं प्राप्तं, तत् कथमुच्यते कर्णाद्यधीनकृत्यनिर्णयमेनमर्थसिद्धिः कथं न जहातीति, तत्राह — असाधुयोगा इत्यादि । असाधुयोगाः विपदां पदानि हि । असाधूनामसतां योगाः उपायाः विपदामनर्थानां पदानि स्थानानि । प्रधानहेतव इत्यर्थः । प्रमाथिनीनामिति प्रकर्षेण मथनशीलानां, मूलक्षयकरीणामित्यर्थः । जयान्तराया इति । सपत्नाभिभवसर्वोन्नतत्वजनवशीकाररूपाणां जयानामन्तराया विघ्ना इत्यर्थः । असाधूनामसुरराक्षसादीनामुपायाः परिणामे विपत्पर्यवसायिन एव दृश्यन्त इति सर्वजनीनां प्रसिद्धिं हिशब्दो द्योतयति । अथवा असाधुयोगा इति असाधुसम्बन्धा इत्यर्थः । कर्णाद्युपायेन भवन्ती सिद्धिरनर्थानुबन्धिन्येवेति तात्पर्यार्थः ॥ १४ ॥

प्रासङ्गिकशङ्कापरिहारानुषङ्गेण साम्बिकेयानां सुयोधनादीनां गुणाभावो दोषातिशयश्च प्रकाशितः । अथ विवक्षितं वीतस्पृहपक्षपातहेतुं युधिष्ठिरस्य गुणप्रकर्षं प्रतिपादयति — पथश्च्युतायामित्यादिना ।

**पथश्च्युतायां समितौ रिपूणां धर्म्यां दधानेन धुरं चिराय ।**
**त्वया विपत्स्वप्यविपत्तिरम्यमाविष्कृतं प्रेम परं गुणेषु ॥ १५ ॥**

त्वया विपत्स्वपि गुणेषु परं प्रेम आविष्कृतम् । समयमध्ये त्वयेत्युक्तं न युष्माभिवृकोदरादीनां साहसोद्यमस्य दोषत्वं द्योतयितुं त्वयेत्युक्तं न युष्माभिरिति । विपत्स्वपीति । गुणवतां निर्गुणानां च विपत्सद्भावो गुणप्रेमविरोधी । तथापि गुणवतां व्यसनागमे गुणार्जनैकप्रवणैरस्माभिर्व्यसनागमनिवारणोपायो न निरूपित इति गुणप्रेमकृतान्येतानीति प्रतीतिर्भवति । निर्गुणानां तु दौर्गत्यादयो विपदो लोभादिदोषहेतव एवेति स्वतो विपत्सद्भावस्य गुणप्रेमविरोधित्वमपिशब्दो द्योतयति । गुणेषु शमादिषु । परं प्रेम प्रकृष्टः प्रियभावः, स्नेहसार इत्यर्थः । आविष्कृतं प्रकाशितम् । नैसर्गिकमेव युधिष्ठिरस्य गुणेषु प्रेम न त्वौपाधिकं याद्दच्छिकं वेति त्वया जनानां निश्चयो निर्वर्तित इत्यर्थः । अविपत्तिरम्यमिति । एतत् क्रियाविशेषणम् अविपत्तिरम्यमाविष्कृतमिति । प्रेमविशेषणं वा । अविपत्ताविव रम्यमविपत्तिर-

रम्यम् । अविपत्तिः समृद्धिः, 'कर्तृकरणे कृता बहुलम्' (२. १. ३२) इति बहुलग्रहणसामर्थ्यादत्र समासः । समृद्धौ हि सर्वेषां सत्त्वोन्मेषेण यशोहेतुषु गुणेष्वभिरुचिर्भवति । तेन तदानीं निर्वेदादिदोषास्पृष्टतया गुणप्रेम रम्यं, व्यसने तु तमोनिघ्नतया नैव गुणेषु प्रेम भवेत् । भवदपि निर्वेदादिदूषितत्वादरम्यमेवेति सर्वसाधारणो गुणप्रेम्णः स्वभावः । तव तु नित्यसत्त्वतया संपत्स्विव विपत्स्वपि रम्यमेव गुणप्रेमेति युधिष्ठिरस्य लोकाधिकत्वमविपत्तिरम्यमित्यनेन द्योत्यते। अथवा अविपत्ति रम्यमिति द्वे पदे । अविपत्ति विपत्तिरहितम्, अत एव रम्यम् । दैववशात् तव विपत्तौ सत्यामपि गुणप्रेम्णस्तु नैव विपत्तिरिति भावः । गुणानुरागाविष्करणप्रकारमाह — पथ इत्यादिना । रिपूणां समितौ पथश्च्युतायां धर्म्यां धुरं चिराय दधानेन । रिपूणां शत्रूणां सुयोधनादीनां समितौ अभिन्नमनस्यभिन्नदेशस्थिते समूह इत्यर्थः । समितिसदःसभादिशब्दास्तादृश एव समूहे प्रसिद्धाः । तेन तदा कुरुषु नैकोऽपि धर्ममार्गमाद्रियत इत्यर्थः सिध्यति । पथः मार्गात्, धर्म्यादित्यर्थात् सिध्यति । च्युतायां भ्रष्टायां सन्मार्गस्यैकदेशे समीपे वा स्थितिरपि तदानीं रिपुसमितेर्नासीत्, कुतः कार्त्स्न्येन तद्व्याप्तिरिति द्योतयितुं पथश्च्युतायामित्युक्तं न पथि भ्रमन्त्यामित्यादि । सत्ताक्रियायाः सातत्यानुगमात् तद्वाचिनः शब्दस्य प्रयोगं विनापि तदर्थः सिध्यति । तेन पथश्च्युतायां, सत्यामित्यन्वयः प्रतीयत एव । 'यस्य च भावेन—' (२. ३. ३७) इत्यादिना सप्तमी । धर्म्यां धर्मादनपेताम् । धुरं दुर्वहं व्यापारम् । चिराय दीर्घकालं न तदानीमेव । दधानेन ताच्छील्येन धारयता । ताच्छील्ये चानश्प्रत्ययः । नृशंसेषु शत्रुषु निकृत्यैव स्वयमपकुर्वाणेषु तद्विषयं रोषं विहाय सदाचरितं धर्ममेव सादरमाचरतस्तव वीतस्पृहपक्षपातहेतुगुणप्रकर्षो लोके प्रथित इति तात्पर्यार्थः ॥ १५ ॥

ननु गुणान्वयो नियमेन विपदपगमं सम्पदागमं च करोति । सपत्नैः कृतविध्वंसाः संपद्धीना वयं कथं गुणिन इति शङ्कायामाह —

**विधाय विध्वंसमनात्मनीनं शमैकवृत्तेर्भवतश्छलेन ।**
**प्रकाशितत्वन्मतिशीलसाराः कृतोपकारा इव विद्विषस्ते ॥१६॥**

विधायेत्यादि । ते विद्विषः भवतो विध्वंसं विधाय कृतोपकारा इव । ते सुयोधनादयः । विद्विषः विशिष्टाः शत्रवः । भवतः * प्रशस्यतया संवृत्तः । सपत्नैस्तु स नोपचिकीर्षया कृतः, प्रत्युत अपचिकीर्षयैव । अपकारस्यावास्तवत्वं व्यञ्जयता इवशब्देन विद्विषां भावदोषो द्योत्यते । शमैकवृत्तेरिति । शम एक एव वृत्तिर्यस्य सः शमैकवृत्तिः, तस्य । रोषादेर्विकारस्य लेशेनाप्यस्पृष्टस्ये-त्यर्थः । अजातशत्रुतया त्वं कदाचित् कैश्चिदपि नापकार्यः इत्यनेन विशेष-णेन व्यज्यते । छलेन छद्मना । करणे तृतीया । त्वां प्रत्यपकार एवानुचितो विध्वंसरूपस्तु सोऽनुचिततरः, छलकरणस्तु सोऽनुचिततम इति शमैकवृत्तिवि-ध्वंसच्छद्मशब्दैर्द्योत्यते । अनात्मनीनमिति । आत्मने हितमात्मनीनं तद्विरुद्ध-मनात्मनीनम् । 'आत्मन्विश्वजनभोगोत्तरपदात् खः' (५. १. ९) इति आत्मञ्छ-ब्दात् खप्रत्ययः । विध्वंसनस्यानात्मनीनत्वं सुयोधनादिकर्तृकतया छलकरण-तया युधिष्ठिरविषयतया च व्यज्यते । विध्वंसविधायिनां विद्विषां कथं कृतो-पकारसमत्वमिति तत्राह — प्रकाशितत्वन्मतिशीलसारा इति । प्रकाशितौ प्र-कटितौ त्वन्मतेः शीलसारौ यैस्ते तथोक्ताः । जनानुद्वेजको धर्माद्यनुगुणो मनोवृत्तिविशेषः शीलम् , सारः स्थैर्यं बलं च । शीलसारयोर्मतिसम्बन्धोक्ति-रभ्यन्तरतया तयोर्नैसर्गिकत्वं द्योतयति । परिभवादिसहनरूपा क्षमा तदनुब-न्धिनो विनयादयश्च शीलेन भवन्ति । धैर्यविवेकादयस्तु मनःस्थैर्येण बलेन चेति निखिलगुणमूलयोस्तव शीलसारयोः प्रकाशनमेव रिपुविहितेन विप्रकारेण कृतं, न तु स्वल्पापि क्षतिरिति परिभवितुमिच्छन्तोऽपि विद्विषस्त्वां परिभवितुं न शक्ता इति तात्पर्यार्थः ॥ १६ ॥

द्विविधो हि प्रकर्षः गुणहेतुको विक्रमहेतुकश्च । तत्र गुणहेतुकेन प्रकर्षेणान्यदुर्लभा कीर्त्तिस्त्वया लब्धा, धरित्री तु विक्रमहेतुकेनैव तेन लब्धुं शक्या न त्वाद्येनेत्याह — लभ्या धरित्रीत्यादिना ।

**लभ्या धरित्री तव विक्रमेण ज्यायांश्च वीर्यास्त्रबलैर्विपक्षः ।**
**अतः प्रकर्षाय विधिर्विधेयः प्रकर्षतन्त्रा हि रणे जयश्रीः ॥**

---

* अत्र मातृकायां किञ्चिद् गलितमिति भाति ।

विक्रमेण धरित्री तव लभ्या । विक्रमेणेति करणे तृतीया । तवेति कर्तरि षष्ठी 'कृत्यानां कर्तरि वा' (२. ३. ७१) इति । शस्त्रास्त्रप्रयोगप्रधान उत्साहविशेषे विक्रमशब्दो वर्तते । अत्र परिसङ्ख्या विवक्ष्यते । विक्रमेणैव भूमिस्त्वया लब्धुं शक्या, न तु समयलक्षणेन, न च धृतराष्ट्रादीनां स्नेहेन, पौरुषेण वेत्यर्थः । विस्तीर्णतया स्पृहणीयतया च दुस्त्यजतरा भूमिर्विक्रममन्तरेण सपत्नाद् दुरापतरे(पि ? ति) धरित्रीशब्दस्यार्थशक्त्या द्योत्यते । तवेति । ज्ञातिस्नेहेन[2] विक्रममनादृत्य मार्दवेनैव वर्तमानस्येत्यर्थः । यदि भूमिर्विक्रमेणैव लभ्या, तर्हि संप्रत्येवास्माभिर्विक्रमो विधेय इति तत्राह — विपक्षः वीर्यास्त्रबलैर्ज्यायांश्चेति । विपक्षः शत्रुः धार्तराष्ट्रः । अभिप्रायः सहायादिसमूहः सिद्धान्तश्च पक्षशब्देनोच्यन्ते[४] । विरुद्धः पक्षो यस्य स विपक्ष इति शत्रौ योगरूढोऽयं विपक्षशब्दः । तेन तस्य विग्रहैकविषयत्वं व्यज्यते । आफलोदयं मनस्विकृतो विपुलतमो[६] व्यवसायो वीर्यम् । ब्रह्मेन्द्रादिदेवताशक्त्यभिव्याप्तौ धनुर्वेदगुरूपदिष्टः सप्रयोगो मन्त्रग्रामोऽस्त्रम् । मौलादिषड्विधं गजादिचतुरङ्गसैन्यं बलम् । तेषां समुदितत्वं समासेन द्योत्यते वीर्यास्त्रबलैरिति । हेतौ तृतीया । ज्यायानिति । प्रशस्ततरस्त्वत्तोऽधिक इत्यर्थः । ज्यायस्त्वस्याप्राधान्यं ध्वनयन्नन्वाचयार्थश्चकारः । सहायसंसर्गकृतं[७] तस्य ज्यायस्त्वं, न स्वाभाविकमिति द्योतयति । यदि रिपुर्वीर्यादिभिर्ज्यायस्त्वादजय्यस्तत् कथमुक्तं विक्रमेण धरित्री तव लभ्येति तत्राह — अतः प्रकर्षाय विधिर्विधेय इति । धरित्री त्वया विक्रमेणैव लभ्या, न सामादिभिर्यद्[८] , वीर्याद्यतिशयादरातिरजय्यश्च यदिति प्रस्तुतं हेतुद्वयमत इत्यनेन परामृश्यते । प्रकर्षाय अतिशयाय । विधिः सकरणेतिकर्तव्या विशिष्टफला क्रिया । विधेयः सावधानं कर्तव्य इत्यर्थः । त्वयेत्यर्थात् सिध्यति । द्विषन्तं दुर्योधनं तत्सहायान् भीष्मादींश्च परिभवितुं पर्याप्तं वीर्यादिप्रकर्षं प्रयत्नेनोपार्जयेति तात्पर्यार्थः । ननु भीष्मादय एव वीर्यादिभिरसत्तः प्रकृष्टतराः, सुयोधनादयस्तु निकृष्टतरा एव । तैरेव जिता हृतसाम्राज्या वयमिति प्रकर्षनिकर्षाधीनौ जयपराजयाविति नियमो नास्त्येवेति शङ्कायामाह — रणे जयश्रीः प्रकर्षतन्त्रा हीति । जय-

१. 'न विक्र' ख. पाठः. २. 'चित्तमना' क. पाठः ३. 'हः स्निग्धश' ख. पाठः. ४. 'न्ते । वि' क घ. पाठः. ५. 'नस्वीकृतोऽपि वि', ६. 'रो' ख. पाठः. ७. 'सम्बंस्कृतं', ८. 'भिर्वा' क घ. पाठः.

शोभा जयसमृद्धिर्वा जयश्रीः । मनोमुखविकासादिहेतुः प्रशस्यो जयो जयशोभा । तदात्वायतिफलानुबन्धी जयो जयसमृद्धिः । प्रकर्षतन्त्रा प्रकर्षाधीना । प्रकर्षसामान्यविषय एवायं प्रकर्षशब्दो रणजयश्रीशब्दसान्निध्यसामर्थ्याद्वीर्यादिसम्बन्धिनि प्रकर्षविशेषे पर्यवस्यति । द्यूतादिषुच्छलेन परिहासादिना वा कदाचित् कस्यचिज्जयो जयश्रीर्वा भवतु । वीर्यादिप्रकर्षैकनिर्वर्त्ये शस्त्रास्त्रप्रयोगानुबन्धिनि युद्धे तु वीर्यादिप्रकर्षं विना जयो नैव भवेदिति रणशब्देन द्योत्यते । युद्धेऽपि प्रतिभटानां प्रमादादिना कदाचित् कस्यचिद् जयमात्रं भवतु, जयश्रीस्तु प्रकर्षेणैव भवेदिति द्योतयितुं जयश्रीरित्युक्तं न जय इत्येव । युद्धे हि जयश्रियः प्रकर्षाधीनत्वं सर्वेषां प्रसिद्धमेव । तत्र न संशयो विप्रतिपत्तिर्वेति हिशब्देन द्योत्यते ॥ १७ ॥

विपक्षस्य वीर्यादिप्रकर्षं क्रमेण दर्शयति — त्रिःसप्तकृत्व इत्यादिना ।

**त्रिःसप्तकृत्वो जगतीपतीनां हन्ता गुरुर्यस्य स जामदग्न्यः ।**
**वीर्यावधूतः स्म तदा विवेद प्रकर्षमाधारवशं गुणानाम् ॥**

अत्र द्वितीयश्लोकस्थया प्रधानक्रियया सकारकाणामवान्तरक्रियाणामन्वयः । स भीष्मः कस्य मनः भयैकप्रवणं न कुर्यादित्येतत् प्रधानं वाक्यम् । अनेनान्वितान्यवान्तरवाक्यानि क्रमेण योज्यन्ते । यस्य जगतीपतीनां हन्ता गुरुः । तत्तद्विषयावच्छिन्नतया व्यस्तायाः समस्ताया भुवोऽधिपतीनां व्यस्तानि समस्तानि वा मौलादीनि बलानि विधेयान्येवेति तदन्विता एव राजानो जयाय परिभवपरिहाराय वोद्यच्छन्ते न केवला इति तदन्वितानां तेषामजय्यत्वमवध्यत्वं च द्योतयितुं जगतीपतीनामित्युक्तं न राज्ञामिति । जिगीषावभियुञ्जाने यशोमानधना एव समग्रसहायोत्साहावधानाः सर्वैरुपायैस्तस्य व्यवसायं व्यञ्जयितुं व्यायच्छन्ते न सर्वे । जिघांसौ तु वैरिणि संरब्धे सर्व एव सर्वैः प्रकारैस्तस्य मनोरथोन्मथनाय प्रवर्तन्त इति जयाद् दुष्करतरो वध इति तस्यै वीर्यप्रकर्षं द्योतयितुं हन्तेत्युक्तं न जेतेति । तेषां प्रमादादिना यदृच्छया वा कृतेन तद्वधेन तस्य वीर्यातिशयो निश्चेतुं न शक्यत

१. 'यासम्बन्धः । स', २. 'लानि ब' क. 'लादिब' ध. पाठः ३. 'सयितु', ४. 'स्य वरं वी' ख. पाठः

इति शङ्का त्रिःसप्तकृत्व इत्यनेन निरस्यते। भर्तृवधेन विविग्ना रेणुका 'हा हा रामे'ति सप्तकृत्वः क्रन्दितवती। तदुपश्रुतवान् परशुरामः प्रकोपवशात् तेषां पितृघातिनां जननीक्रन्दनसमसङ्ख्यावृत्तिं वधं प्रतिज्ञाय तथैव कृतवान्। पुनः कालान्तरे प्रत्युत्पन्नैस्तद्वैरमनुसरद्भिः क्षत्रियैरपराधे कृते संरोषामर्षसंरम्भस्तेषां सम्राजामनवाप्तसाम्राज्यानां च दण्डोत्तरं सप्तकृत्व एव वधं कृतवान्। पुनश्च महीयसि समये व्यतीते समुद्भूतैस्तद्वैराभिमानवासनाविवशैः पार्थिवैरागसि विहिते काष्ठाधिरूढरोषामर्षसंरम्भाभिनिवेशविवशीकृतचित्तवृत्तिर्भृगुकुलकेतुः सस्त्रीबालवृद्धानां तेषां संहारमेव कृतवानिति क्षत्रियविषयं तस्य वैरानुबन्धं द्योतयितुं त्रिःसप्तकृत्व इत्युक्तं न त्वनेकवारमिति। क्षत्रियवैरी यस्य गुरुरित्युक्त्यान्यदुर्लभाः शीलविनयादयो भीष्मस्य गुणविशेषा व्यज्यन्ते। त्रिःसप्तकृत्वो जगतीपतीनां हन्तेत्यनेन विशेषणेन स्वनाम्नैव परशुरामो गम्यते। 'अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौ'रित्यत्र यथा चन्द्रः। सामान्यविषयोऽयं गुरुशब्दः सामर्थ्याद् धनुर्वेदोपदेष्टरि गुरुविशेषे विश्राम्यति। सप्तसङ्ख्याविशिष्टा हननक्रियावृत्तिः सप्तकृत्व इत्यनेनोच्यते। सा पुनस्त्रिसङ्ख्याविशिष्टा त्रिरित्यनेन। 'सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' (५. ४. १७) इति सप्तञ्छब्दात् कृत्वसुच्प्रत्ययः। 'द्वित्रिचतुर्भ्यः सुच्'(५. ४. १८) इति त्रिशब्दात् सुच्प्रत्ययः। गुरुसंसर्गकृत एव भीष्मस्य न वीर्यप्रकर्षः नैसर्गिकोऽप्यस्तीत्याह—स जामदग्न्यः यस्य वीर्यावधूतः तदा गुणानां प्रकर्षमाधारवशं विवेद स्मेति। यस्येति पूर्वस्मादनुषज्यते। स इति अन्यदुर्लभैरात्मैकसमवायिभिर्गुणैः समन्वित इत्यर्थः। जामदग्न्य इति पैतृकैस्तपोयोगादिभिर्विभासित इत्यर्थः। यस्य वीर्यावधूत इति यदेकसम्बन्धिना तपोब्रह्मचर्याद्युपस्कृतेन पराक्रमप्रतापादिरूपेण वीर्येण सामर्थ्यविशेषेण वा अवधूतः अवच्छिद्य कम्पितः शक्तिसङ्कोचं विधाय पूर्वस्माद् व्यवसायाच्चलित इत्यर्थः। तदेति तदानीं पूर्वमदृष्टस्य अचिन्तितस्य तादृशस्य विक्रमस्य दर्शनसमय इत्यर्थः। गुणानां वीर्यादीनां प्रकर्षमतिशयम्। आधारवशमाश्रयाधीनं विवेद स्म विविच्य विदितवानित्यर्थः। 'लट् स्मे' (३. २. ११८) इति लिडर्थे लट्प्रत्ययः। 'विदो लटो वा' (३. ४. ८३) इति तिबादीनांणलाद्यादेशविधानाद् वेदेति रूपम्। समर-

१. 'स तु रो' २. 'नया वि' ख. पाठः. ३. 'कथा तदार्द्रभावान्व', ४. 'तृकतपो' क. पाठः. ५. 'तस्विद्धि' क. पाठः.

समये स्वशिष्यस्य भीष्मस्य शस्त्रास्त्रप्रयोगेषु दाक्ष्यसौष्ठवलाघवादीनां गुणानामदृष्टपूर्वं प्रकर्षं प्रेक्ष्यातिविस्मयविवशः परशुरामस्तद्गुणानां स्वगुणातिशायितामभिपश्यन्नाश्रयगुणविशेषाधीन एव गुणानां प्रकर्षविशेषो न नैसर्गिक इति प्रतीयायेत्यभिप्रायः ॥ १८ ॥

तस्य स्वाविलङ्घ्यवीर्यदर्शनादेव परशुरामस्य तादृशी प्रतीतिर्जाता न शिष्यस्नेहेनेति निश्चयं जनयितुं सर्वानिवार्यं भीष्मस्य वीर्यप्रकर्षं प्रकारान्तरेण प्रदर्शयति — यस्मिन्नित्यादिना ।

**यस्मिन्ननैश्वर्यकृतव्यलीकः पराभवं प्राप्त इवान्तकोऽपि ।**
**धुन्वन् धनुः कस्य रणे न कुर्यान्मनो भयैकप्रवणं स भीष्मः ॥**

यस्मिन्नन्तकोऽपि पराभवं प्राप्त इव । सर्वप्राणसंहर्तुरन्तकस्य परिभवासंभवमपिशब्दो द्योतयति । भीष्मस्य स्वसत्ताक्रियया अन्तकस्य परिभवप्राप्तेर्लक्षणमिति 'यस्य च भावेन—' (२. ३. ३७) इत्यादिना यस्मिन्निति सप्तमी । अथवा अन्तकपरिभवप्राप्तेः कारणत्वेन भीष्मोऽधिकरणमित्यधिकरण एवेयं[2] सप्तमी । परिभवप्राप्त्युत्प्रेक्षायां हेतुमाह — अनैश्वर्यकृतव्यलीक इति । ऐश्वर्यविपरीतं पारतन्त्र्यमनैश्वर्यं तेन कृतव्यलीकः कृतविप्रिय इत्यर्थः । कृतं व्यलीकं यस्य स कृतव्यलीक इति षष्ठीसमर्थोऽयं बहुव्रीहिः । सर्वप्राणिषु प्राणसंहारस्वातन्त्र्यरूपमैश्वर्यं ममास्ति । स्वच्छन्दमृत्यावस्मिन् भीष्मे तन्नास्तीतीच्छाविघातमप्रियं कृतवता अनेन परिभूत एवाहमित्यन्तकः प्रतीयायेति तात्पर्यार्थः । धनुर्धुन्वन् कम्पयन् गुणारोपणाय नमयन्नित्यर्थः । प्रथितवीर्यातिशयोऽयं स्वव्यवसायं सूचयता समरोद्यमेनैव सर्वेषां वीराणां भयं जनयति, न शस्त्रप्रयोगेण शत्रुभङ्गेन वेत्यसाधारणमस्य वीर्यविशेषं व्यञ्जयितुं धुन्वन् धनुरित्युक्तं न सृजन्निषूनित्यादि । निश्चितमेव सर्वेषां वीराणां भीष्मविषयं भयम् । सन्दिग्धं तु यदि कस्यचिदेकस्यैव न द्वयोर्बहूनां वेति द्योतयितुं कस्येत्युक्तं न कयोरिति केषामिति वा । भयैकप्रवणमिति भये एकस्मिन् प्रवणं प्रह्वं भयैकचिन्तापरं, भयव्यतिरिक्तैर्व्यवसायादिभिर्भावान्तरैरस्पृष्टमित्यर्थः[3] । 'विशेषणं विशेष्येण बहुलम्' (२. १. ५७) इत्यनेनायं समा-

१. 'णद्दन्तुर', २. 'वैषा स', ३. 'ति भावः । वि' क. घ. पाठः.
४. 'ति स' क. ख. पाठः.

सः । तेन भयशब्दस्य पूर्वनिपातः, नैकशब्दस्य । यद्यपि यशोमानधनस्य कस्यचिद्वीरस्य वपुषि भीष्मस्य धनुर्विधूननादिदर्शनेऽपि भयाभिव्यक्तिर्न भवति, तथापि तस्य मनसि तु सा भवत्येवेति द्योतयितुं कस्य मन इत्युक्तं न कस्य तनुरित्यादि । भीष्म इति तस्य नाम्नोऽन्वर्थतयापि भयहेतुत्वं द्योत्यते । विनेयविनयफले शस्त्रास्त्रशिक्षणे तस्य यादृशं धनुर्धूननादि, प्रतिवीरमारणफले दारुणे रणे तु न तादृशमिति रणशब्देन द्योत्यते ॥ १९ ॥

त्रिभुवनवीरः शान्तनवस्तेषामस्माकं च पितामह इति समञ्जसवृत्तिः सुयोधनप्रार्थनया प्रतियुध्यमानोऽपि नास्मासु स्ववीर्येण संरभेतेति शङ्कायां यद्यप्यसौ कुरूद्वहो धीरोदात्ततया युष्मासु न संरभेत, तथापि सम्मानदानादिभिः सुयोधनेन वशीकृतः सपुत्रो द्रोणस्तु संरभेतैवेत्याह — सृजन्तमित्यादिना ।

**सृजन्तमाजाविषुसंहतीर्वा सहेत कोपज्वलितं गुरुं कः ।**
**परिस्फुरल्लोलशिखाग्रजिह्वं जगज्जिघत्सन्तमिवान्तवह्निम् ॥२०॥**

गुरुं वा कः सहेत । गुरुशब्दो द्रोणे योगरूढः । तेन सर्वक्षत्राचार्यतया तस्याजय्यत्वं द्योत्यते । वाशब्दः समुच्चयार्थः । गुरुं गुरुसुतं चेत्यर्थः । प्रशमविशेषहेतुकेऽपराधादिदोषमर्षणे क्षमिर्वर्तते । सहिस्तु बलवीर्यादिविशेषहेतुके तीव्रतराणां शस्त्राभिघातादिक्रियाणां निवारणे मर्षणे च वर्तते । को गुरुं सहेतेति । गुरुसम्बन्धिनीनां तीव्रतराणां शस्त्रास्त्रप्रयोगादीनां क्रियाणां निवारणे[1] मर्षणे वा कः शक्नुयादित्यर्थः । जातिद्रव्ययोः क्रियागुणद्वारेणैव क्रियाविषयत्वं न स्वरूपेणेति स्वक्रियाणां सहनकर्मत्वं गुरावारोपितं क्रियातद्वतोरभेदविवक्षया । तस्यान्यानपेक्षाणां स्थित्यादिक्रियाणामिव बहुसाधनापेक्षाणां शस्त्रप्रयोगादीनां सौकर्यातिशयः सूच्यते । तया क्रियया विशिष्टो गुरुः प्रतिवीरैः सोढुं न शक्य इत्याह — आजौ इषुसंहतीः सृजन्तमिति । आजिशब्दः चतुरङ्गसङ्कुले भयङ्करे युद्धविशेषे प्रसिद्धः । आजन्ति आव्रजन्ति समन्ततश्चरन्ति गजरथाश्वपत्तयोऽस्मिन्निति घञाजिशब्दो व्युत्पाद्यते । इषुसंहतीः शरसन्ततीः । सृजन्तं मुञ्चन्तं

१. 'णे वा' ख. पाठः.

निर्मिमाणं वा । बह्वीनामिषुसंहतीनां सर्जनोक्त्या परमास्त्रविदस्तस्यास्त्रप्रयोगो द्योत्यते । इषुसर्जनमात्रविवक्षायामिषूनित्येव ब्रूयाद्, न त्विषुसंहतीरिति । तस्य तदिषुसर्जनमस्त्रसर्जनं वा संरम्भहेतुकमेव न जनविस्मयचिकीर्षाहेतुकमित्याह — कोपज्वलितमिति । कोपेन ज्वलितं दीपितं सुव्यक्तरूक्षतररोपचिह्नमित्यर्थः । द्रुपदवैरसुयोधनसम्मानादयस्तस्य कोपहेतवो युधिष्ठिरेण प्रतिपन्ना इति मुनीन्द्रेण विविच्य नोक्ताः । महारथोऽयं रुक्मरथः प्रतिवीरैः सोढुं न शक्य इत्येव न, सकलं सपत्नलोकं संहर्तुमपि शक्त इत्यत्र दृष्टान्तमाह — अन्तवह्निमिवेति । प्रलयवह्निमिवेत्यर्थः । परिस्फुरल्लोलशिखाग्रजिह्वमिति । परिस्फुरन्ति समन्ततो दीप्यमानानि लोलानि चञ्चलानि शिखाग्राणि ज्वालाप्रान्ता एव जिह्वा यस्य स तथोक्तः । परिस्फुरच्छब्देन ज्वालानां समन्ततो दुर्निरीक्षत्वं द्योत्यते । लोलशब्देन प्रलयवायुभिस्तासां तूर्णं प्रसार्यमाणत्वम् । प्रलयाग्नेर्ज्वालानामग्राण्येव कृत्स्नस्य जगतो ग्रसने प्रगल्भानि, तत्र तासां न कृत्स्नावयवापेक्षेत्यग्रशब्देन द्योत्यते । जगज्जिघत्सन्तमिति । लोकमत्तुमिच्छन्तमित्यर्थः । 'लुङ्सनोर्घस्लृ' (२. ४. ३७) इत्यदो घस्लादेशः । कृष्णाङ्गारभस्मादिदाह्यैकदेशावशेषाया दवाग्निदाहक्रियाया विलक्षणा भक्षणक्रियावत् स्वविषयनिःशेषीकरणरूपा प्रलयाग्नेर्दाहक्रियेति द्योतयितुं जिघत्सन्तमित्युक्तं न तु जगद्दिधक्षन्तमिति । सपत्नलोकं सञ्जिहीर्षोर्गुरोर्जगज्जिघत्सुर्युगान्ताग्निरुपमानम् । संहारसाधनभूतानामिषुसंहतीनां जगद्ग्रसनसाधनानि जिह्वात्वेनारोपितानि ज्वालाग्राणि । गुरोः सपत्नलोकसञ्जिहीर्षा कोपज्वलितशब्देन द्योतिता । युगान्ताग्नेर्जगज्जिघत्सा तु साक्षादुक्तैव । सविशेषणयोर्गुरुयुगान्ताग्न्योरुपमेयोपमानभावादियं वाक्यार्थोपमा । वाशब्दद्योतिते द्रौणावपि विशेषणद्वयं युगान्ताग्निसाम्यं च योजनीयम् ॥ २० ॥

ननु गुरोर्गुरुसुतस्य च यथोक्ता तदधिका वास्त्रशक्तिरस्त्येव । किन्तु शान्तनवस्येव तयोरपि गुणकृतः सम्बन्धकृतश्चास्मासु स्नेहानुबन्धोऽस्तीति शङ्कायां सुयोधनसौहार्दसंमाननिघ्नयोरपि तयोर्युष्मासु स्नेहानुबन्धः सत्यमस्त्येव । बाल्यात् प्रभृति युष्मासु बद्धवैरः सख्युः सुयोधनस्य साम्राज्यसम्पादनाय स्वयमेव व्याप्रियमाणो महाबलो महारथस्त्वाधिरथिर्युष्माकं विप्रकाराय मानुषेण दैवेन बलेन संरभेततरामित्याह — निरीक्ष्येत्यादिना ।

निरीक्ष्य संरम्भनिरस्तधैर्यं राधेयमाराधितजामदग्न्यम् ।
असंस्तुतेषु प्रसभं भयेषु जायेत मृत्योरपि पक्षपातः ॥ २१ ॥

राधेयं निरीक्ष्य मृत्योरपि भयेषु पक्षपातो जायेत । राधा नामाधिरथनाम्नः सूतस्य भार्या । तस्याः सुतो राधेय इति कर्णे योगरूढो राधेयशब्दः । तेन तस्य दैवी शक्तिर्द्योत्यते । राधा किल पुत्रार्थिनी पत्या सह व्रतोपवासादिभिः स्वजात्युचितैः पुण्यैः सर्वदेवतासमष्टिं प्रत्यक्षदेवं दिवाकरमाराध्य तत्प्रसादेन सहजैस्तनुत्रकुण्डलैर्दीप्तं दिव्यानुभावं वसुषेणमात्मजं लब्धवतीति लोकप्रसिद्धमेतदर्थजातं प्रकरणौचित्यादिसहायेन राधेयशब्देन द्योतयितुं शक्यत एव । आराधितजामदग्न्यमिति । आङ्पूर्वो राधिरर्चाविशेषकृते देवतादीनां प्रसादने वर्तते । परिचर्याप्रसादितजमदग्निनन्दनमित्यर्थः । जामदग्न्यशब्देन प्रसन्नस्य तस्यानुग्रहशक्तिर्द्योत्यते । अनेन विशेषणेन भार्गवास्त्रप्रधानस्य समग्रस्यास्त्रग्रामस्य तस्मात्तस्यावाप्तिर्द्योत्यते । संरम्भनिरस्तधैर्यमिति । संरम्भेण निरस्तं बहिःक्षिप्तं धैर्यं यस्य स तथोक्तः, तम् । संरम्भस्य धैर्यनिरासकतया तस्य समस्तरिपुसंहारोद्यमः सूच्यते । असंस्तुतेषु अपरिचितेष्वित्यर्थः । सर्वप्राणहरस्य मृत्योः स्वाश्रयेषु प्रतीतिस्तद्धेतुको वा परिचयो जात्वपि न जात इत्यर्थः । प्रसभमिति प्रसह्य बलात्कारेण । सर्वभयङ्करस्य मृत्योर्मम कुतोऽन्यतो भयस्यावकाश इत्यादिकं विवेकमुन्मथ्येत्यर्थः । भयेष्विति बहुवचनेन हेतुकृतं भयस्य बहुत्वं द्योत्यते । तस्य कर्णस्य नैसर्गिकं बलं दिव्यास्त्रशक्तिरस्त्रप्रभाव इत्येवमादयो भयहेतवो द्रष्टव्याः । स्नेहविशेषः पक्षपातः । जायेतेति । जनितुं सम्भवेदित्यर्थः । सम्भावनायां लिङ्प्रत्ययः । निरीक्षणपक्षपतनक्रिययोर्मृत्युरेव कर्तेति न समानकर्तृकत्वविरोधः । कृदभिहितस्य भावस्य द्रव्यवद्भावेऽपि क्रियात्वमस्त्येव । तादृशं लोकवीरं कर्णं युधि निरीक्षितवतो[1] भये स्नेह एव न जायेत । भयानुबन्धिनि विषादादिवर्गे हि स[2] जायेतेति द्योतयितुं पक्षपात इत्युक्तं न स्नेह इति । तद्दर्शिनां भयादीनि पलायनद्वारेण[3] प्राणरक्षणसाधनानि, शौर्यादीनि तु प्रत्युतैवेति द्योतयितुं भयेषु पक्षपातो जायेतेत्युक्तं न भयानि भवेयुरिति । एवं

---

१. 'यस्ने', २. 'पि' ख. पाठः. ३. 'ण प्रा' ख. पाठः.

श्लोकत्रयेण सुयोधनसहायानां भीष्मादीनां वीर्यास्त्रबलैर्ज्यायस्त्वं प्रतिपादितम् । तत्र भीष्मस्य वीर्यज्यायस्त्वमेव प्राधान्येन प्रतिपादितम् उचितज्ञतया वशितया चानाविष्कृतास्त्रबलप्रकर्षस्य तस्य लोकप्रसृतं वीर्यज्यायस्त्वमेव पाण्डवानां प्रतीपमिति । सुयोधनसंमानविवशीकृतस्य संरब्धस्य सपुत्रस्य द्रोणस्य तु शस्त्रप्रयोग इव चास्त्रप्रयोगः पाण्डवानां सैन्यसंहारहेतुरिति तस्य तत्प्रकर्षः प्रकाशितः । बलाधिकस्य जरासन्धस्य नियुद्धेनैव देहसन्धिभिदः कर्णस्य बलप्रकर्षो लोकप्रसिद्ध इति तं हृदि कृत्वैव तस्य प्रकर्षान्तरं प्रतिपादितमित्यलं बहुना ॥ २१ ॥

एवं विपक्षस्य वीर्यादिज्यायस्त्वादजय्यत्वमुपपाद्य युधिष्ठिरेण जिज्ञासितं तज्जयोपायमवबोधयति — ययेत्यादिश्लोकद्वयेन ।

**यया समासादितसाधनेन सुदुश्चरामाचरता तपस्याम् ।**
**एते दुरापं समवाप्य वीर्यमुन्मूलितारः कपिकेतनेन ॥ २२ ॥**

यया समासादितसाधनेन तपस्यामाचरता दुरापं वीर्यं समवाप्य कपिकेतनेन एते उन्मूलितारः तां विद्यां दातुमुपागतोऽस्मीत्यन्वयः । ययेति हेतौ तृतीया । समासादितानि सम्यगधिगतानि साधनानि येन स तथोक्तः, तेन । शमदमधैर्यादीनि तपस्यासाधनानीह साधनशब्देन विवक्ष्यन्ते । सत्त्वशुद्धिविधानद्वारेण विद्यायाः शमादिहेतुत्वम् । सुदुश्चरां सुतरां दुश्चरां कृच्छ्रेण चरणीयाम् । तपस्यां तपश्चर्याम् । आचरता आदरेण निर्वर्तयता । द्वितीयान्तात् तपःशब्दात् 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः' (३. १. १५) इति चरत्यर्थे क्यङ्प्रत्ययः । 'अ प्रत्ययात्' (३. ३. १०२) इति तदन्तादापि तपस्येति रूपम् । प्राक्तन्येव तपसा गुणवत्तरेण फल्गुनेनोपस्क्रियमाणत्वान्नूतनी भवतीति तस्य गुणविशेषं व्यञ्जयितुं तपस्यामाचरतेत्युक्तं न तपस्यतेत्येव । एत इति प्रस्तुता भीष्मादयस्तदनुबन्धिनश्च बुद्धिसन्निहिता एतच्छब्देन परामृश्यन्ते । कपिः केतनं केतुर्यस्य स कपिकेतनः, तेन । फल्गुनादिशब्दवदर्जुने योगरूढोऽयं शब्दः । खाण्डवदाहे पावकादर्जुनस्य गाण्डीवादिलाभं द्योतयता कपिकेतनशब्देन तस्य दैवानुकूल्यं देवादिविजयित्वं च द्योत्यते । तस्य रा-

१. 'स्य' क. पाठः. २. 'स्य तु वी' ख. घ. पाठः. ३. 'त्रि' क. पाठः. ४. 'नश्च', ५. 'बला', ६. 'स्व द्यो' क. ख. पाठः.

वणान्तकस्य रामस्य तादृशान् गुणान् विलोक्य तदितरेषु पुरुषेषु गुणवत्त्वेन गणनामकुर्वाणो महानुभावः कपिप्रवरो हनूमानपि तादृशैरेव वीर्यादिभिर्विजयस्य गुणैर्विवशीकृतस्तत्सम्बन्धमेवात्मनः श्लाघ्यं मन्यमानस्तं केतुभावेनाभजतेति च कपिशब्देन द्योत्यत एव । उन्मूलितार इति । कालान्तरे समयसमापनानन्तरमुन्मूलयिष्यन्त इत्यर्थः । भविष्यत्यनद्यतने कर्मणि लुट्प्रत्ययः । अनित्यमागमशासनमितीडागमस्यानित्यत्वादुन्मूलितार इत्यपि रूपं भवत्येव । इदानीमपि जिष्णुरिमान् भीष्मादीन् जेतुं शक्नुयादेव, पुनरनुत्थानकममीषामुन्मूलनं त्वमुष्य प्रकर्षान्तरेण साध्यमिति विमृश्य उन्मूलितार इत्युक्तं न जेतार इति । तपोबलेन किमेषामुन्मूलनमिति । नेत्याह—दुरापं वीर्यं समवाप्येति[1]। दुरापं दुःखेन प्राप्यमन्यैरलभ्यमित्यर्थः । पाशुपतादिमहास्त्रलाभोद्भवः प्रकर्षविशेष इह वीर्यशब्देन विवक्ष्यते । समवाप्येति सम्यगवधानेन लब्ध्वेत्यर्थः ॥ २२ ॥

**महत्त्वयोगाय महामहिम्नामाराधनीं तां नृप! देवतानाम् ।**
**दातुं प्रदानोचित! भूरिधाम्नीमुपागतः सिद्धिमिवास्मि विद्याम्॥**

महामहिम्नां देवतानामाराधनीमिति । महान् व्याप्तो महिमा निग्रहानुग्रहसामर्थ्यं यासां ता महामहिमानः, तासाम् । आराधनीं प्रसादनीम् । समष्टिव्यष्टिरूपाणां सर्वासां देवतानां प्रसादजननीमित्यर्थः । भूरिधाम्नीमिति । भूरि प्रभूतं धाम तेजो यस्याः सा भूरिधाम्नी, ताम् । स्वाश्रितानाम् अविद्यादिदोषसंहारे विद्यादिगुणसंपादने च शक्तिरिह धामशब्देन विवक्ष्यते । नृपेत्यामन्त्रणेन परिपालनस्यावश्यकर्तव्यत्वं प्रत्यापत्तिश्च द्योत्यते । प्रदानोचितेति । प्रशब्देन प्रकर्षो द्योत्यते । देयप्रकर्षकृत इह दानप्रकर्षो विवक्ष्यते । प्रकृष्टाया विद्यायाः प्रदाने संप्रदानत्वं प्राप्तुं योग्येत्यर्थः । नृपेत्यामन्त्रणेन प्रकरणेन च तुभ्यमिति संप्रदानमाक्षिप्यते । महत्त्वयोगायेति । महत्त्वेन महिम्ना योगाय अव्यवहितसम्बन्धायेत्यर्थः । अत्र तादर्थ्ये चतुर्थी । बाह्यैः सेनादिभिः कृते महत्त्वादिसम्बन्धो बाह्यः । अभ्यन्तरैर्विद्यादिभिः कृतस्त्वभ्यन्तरः । सिद्धिमिवेति । इयं विद्या सिद्धेरैकान्तिकं कारणं न[2] हेतुमात्रमिति सिद्धित्वोत्प्रेक्षया द्योत्यते । प्रकृष्टो मन्त्रविशेष इह विद्याशब्देनोच्यते । उपागत इति । उपेत्यु-

---

१. 'ति [illegible]न्वये', २. 'न विवक्ष्यते' क. ख. पा.

पसर्गः प्रतियत्नार्थः । प्रभूतं गुणान्तरमाधातुमागत इत्यर्थः । अस्मीत्यव्ययमहमर्थे वर्तते । भूरिधाम्नीत्यत्र 'अन उपधालोपिनोऽन्यतरस्याम्' (४. १.२८) इति ङीप्प्रत्ययः ॥ २३ ॥

**इत्युक्तवन्तं व्रज साधयेति प्रमाणयन् वाक्यमजातशत्रोः ।**
**प्रसेदिवांसं तमुपाससाद वसन्निवान्ते विनयेन जिष्णुः ॥ २४ ॥**

इत्युक्तवन्तमित्यादि । इत्युक्तवन्तं तं जिष्णुरुपाससाद । उक्तवन्तमिति निष्ठाप्रत्ययेन वाक्यसमाप्तिद्योतनद्वारेणोपासादनस्यावसरो द्योत्यते । तमिति तच्छब्देन प्रकृतो द्वैपायनः परामृश्यते । जिष्णुरर्जुनः । जिष्णुशब्दशक्त्या तस्य तपस्याविरोधिशीतोष्णादिसहनशक्तिर्द्योत्यते । उपाससादेति । विद्याग्रहणार्थमभिजगामेत्यर्थः । युधिष्ठिराय विद्यां दातुमुपागतं कथं जिष्णुरुपाससादेति तत्राह — व्रज साधयेत्यजातशत्रोर्वाक्यं प्रमाणयन्निति । व्रज साधयेति । मुनिं व्रज, समीहितं साधयेत्यर्थः । प्रकरणौचित्याभ्यां कर्मविशेष आक्षिप्यत इति नोक्तः । अनेनैव वाक्येन तपस्यार्थं गमने पाशुपताद्यर्थसाधने च युधिष्ठिरेणार्जुनस्य नियोगो विवक्षितः । अजातशत्रोर्वाक्यं प्रमाणयन्निति । धर्मात्मजस्य वचनं श्रद्दधान इत्यर्थः । सहजादयो बाह्या रागादयोऽभ्यन्तराश्च शत्रवस्तस्य न जाता इत्यर्थयोगेन धर्मात्मजे योगरूढोऽयमजातशत्रुशब्दः शीलप्रकर्षेण रञ्जितलोकस्य धर्ममहिम्ना निसर्गोदितशमादिगुणगणस्य धर्मात्मजस्य द्विविधशत्रुशातनसाधनभूतायां तस्यां विद्यायां नात्यन्तमपेक्षेत्यमुमर्थं[२] द्योतयति । जिष्णुशब्दस्त्वर्जुनस्य जयशक्तिमभिव्यज्य जेतव्यानां रिपूणां प्राप्तिं द्योतयंस्तज्जयसाधने विद्याविशेषे तस्याभीप्सामवगमयति[३] । मुनीन्द्रोक्तिमवच्छिन्दन्निति शब्दस्तद्वाक्यं साकल्येन स्मारयति । तथा सति जिष्णोस्तपस्यासाधनविद्यासम्बन्धं द्योतयन् 'ययें'त्यादिश्लोको मुनीन्द्रेण फल्गुनायोपदेष्टुमिष्टा[४] सा विद्येति द्योतयति । तेन मुनीन्द्रस्याप्यभिप्रायमवगम्य जिष्णुस्तमुपाससाद न पूर्वजनियोगमात्रेणेति गम्यते । प्रसेदिवांसमिति । प्रसन्नमित्यर्थः । 'भाषायां सदवसश्रुवः' (३. २. १०८) इति लिटः क्वस्वादेशः । मुनीन्द्रप्रसादेन जिष्णोर्विद्याग्रहणे मुख्याधिकारित्वं द्यो-

१. 'मित्यर्थे' क. घ. पाठः. २. 'र्थमजातशत्रुशब्दो द्यो', ३. 'भि', ४. 'दिष्टा सा' ख. पाठः.

त्यते । विनयेन अन्ते वसन्निवेति । निभृतत्वेन विद्यां गृह्णन् शिष्य इवेत्यर्थः । अजस्रं गुरुसन्निधावेवं वसतां विद्यां गृह्णतां शिष्याणां विनयविरोधिनो भावान्तरस्य प्राप्तिरेव नास्तीति द्योतयितुम् अन्ते वसन्निवेत्युक्तं न शिष्य इवेति । ननु मुनीन्द्रेण युधिष्ठिराय सा विद्योपदिष्टा । तेन पुनर्धनञ्जयायेति भारते कथ्यते । तत् किमिदं तद्विरुद्धमुच्यते इति चेत् । उच्यते — रसादिव्यञ्जनायैव कवयः कथां निबध्नन्ति । तेनेतिहासादिपूक्तमनुक्तं विरुद्धं च वस्तु रसौचित्यमनुसृत्य ते निबध्नन्तीति न दोषः । अयं तु महाकविर्भारविर्भारतस्याभिप्रायमेवं मन्यते स्म । पूर्वं मुनीन्द्रेण साम्राज्यस्य प्रत्यापत्तिं स्थैर्यं चाभीप्सते युधिष्ठिराय सा विद्योपदिष्टा । पश्चाद्युधिष्ठिरस्य भावमवगम्य तन्नियुक्ताय विजयाय विजयविक्रमस्थैर्ययोजनाय तेनेयमुपदिष्टा । युधिष्ठिरस्तु विजयैकनिष्ठमतिः पुनस्तामेव विद्यामुपशिक्षयन् धनञ्जयमभिस्मारितवानित्यलं बहुना ॥ २४ ॥

**निर्याय विद्याथ दिनादिरस्याद् बिम्बादिवार्कस्य मुखान्महर्षेः ।**
**पार्थाननं वह्निकणावदाता दीप्तिः स्फुरत्पद्ममिवाभिपेदे ॥२५॥**

निर्यायेत्यादि । अथ विद्या महर्षेर्मुखान्निर्याय पार्थाननमभिपेदे । अथेति विद्योपदेशग्रहणोचितायाः गुरुशिष्ययोः क्रियाया अनन्तरमित्यर्थः । निर्यायेति निर्गम्येत्यर्थः । अभिपेदे आभिजगामेत्यर्थः । गुरुप्रयत्नप्रतिपाद्याया विद्यायाः स्वयमभिगन्तृतोक्त्या कन्याया इव वरे तस्या गुणवत्तरे पार्थे प्रेमातिशयः प्रकाश्यते । विद्योपदेशग्रहणव्यापारयोर्मुखसम्बन्धित्वान्महर्षेर्मुखात् पार्थाननमित्युक्तं न महर्षेः पार्थमिति । हृदि स्थितां विद्यामुपदिशतो महर्षेर्मुखस्य तदपादानत्वमेव नाधिकः प्रयत्नः । अपूर्वां विद्यां गृह्णतः पार्थस्य मुखस्य त्वसकृदुच्चारणादिरूपः प्रभूतः प्रयत्न इति तस्य प्राधान्यं द्योतयितुं पार्थाननमित्युक्तं न पार्थस्य वक्त्रमिति । तत्पुरुषस्योत्तरपदार्थप्रधानत्वादाननस्य प्राधान्यमवसीयते । विद्योपदेशग्रहणोचितं गुरुशिष्ययोर्गुणप्रकर्षं प्रकटयितुं महर्षिपार्थशब्दौ प्रयुक्तौ, नोभयत्र तस्य मुखात्तदाननमिति तच्छब्द एव । पार्थशब्देन पृथाया दुराराधदुर्वासःप्रसादहेतवो विनयादयो गुणविशेषा व्यज्यन्ते । कीदृशान्महर्षेर्मुखात् । अर्कस्य बिम्बादिव सूर्यस्य मण्डलादिव । बिम्बमुखयोः

१. 'व स', २. 'स्मृ', ३. 'भि' ख. पाठः. ४. 'नभो यत्र तच्छब्द एव तस्य', ५. 'ति । पा' ख. पाठः.

शाब्दमौपम्यं, तद्गतोरर्कमहर्ष्योस्तत्सम्बद्धयोर्दीप्तिविद्ययोश्चार्थद्वययोरुपमानोपमेयभावे शब्देनोक्ते तत्सामर्थ्येनैव तदन्वितानामन्योन्यसमानगुणानामन्येषामपि स प्रतीयत इति तत्प्रतिपत्तये पृथगिवशब्दो न प्रयुक्तः। पद्मपार्थाननयोस्त्वर्कबिम्बादिभिरनुग्राह्यतया तद्विलक्षणत्वात् पृथगौपम्यं शब्देनैवोक्तम्। अर्कबिम्बौपम्येन महर्षिमुखस्य रम्यताविपर्ययो मा शङ्कीति दृष्टान्तं विशिनष्टि — दिनादिरम्यादिति। दिनादौ प्रभाते रम्याद्, नेत्रसुखकरादित्यर्थः। दृष्टान्तर्गतेन विशेषणेनैव तादृशो दार्ष्टान्तिकस्य गुणः प्रतीयत इति तस्य तादृशं विशेषणं न कृतम्। स्फुरदिति द्योतमानं, विकसदित्यर्थः। एतत् पद्मपार्थाननयोः साधारणं विशेषणम्। वह्निकणावदातेति वह्निकणवद् अवदाता स्वच्छेत्यर्थः। भुवनमवभासयन्त्योः पद्मपार्थाननविकासलक्ष्मीप्रदयोरर्कबिम्बमहर्षिमुखसंयुक्तयोर्दीप्तिविद्ययोर्वह्निकणौपम्यम् अविकृतवह्निसमष्टिस्थानीये द्युमणिमुनिसमवेते महत्यौ दीप्तिविद्यासमष्टी द्योतयति। आदावल्पतरोऽप्यभिराश्रयगुणानुगुणं वर्धमानो यथा व्याप्तविषयो दाहपाकप्रकाशनक्रियाः करोति तथैव विद्यापि कतिपयाक्षररूपत्वादल्पतरापि समग्रगुणं फल्गुनमाश्रित्य विवर्धमानशक्तिर्व्याप्तविषयाः द्विषद्दुरितदाहवेद्यबोधनादिकाः भुवनाभ्युदयदायिनीः क्रियाः करोतीति वह्निकणसाम्येनैव गम्यते ॥ २५ ॥

**योगं च तं योग्यतमाय तस्मै तपःप्रभावाद् वितितार सद्यः।**
**येनास्य तत्त्वेषु कृतेऽवभासे समुन्मिमीलेव चिराय चक्षुः ॥**

योगं चेत्यादि। तस्मै तं योगं च सद्यः वितितार। प्रकरणेन स इति कर्तृपदमाक्षिप्यते। तस्मा इति तच्छब्देन विद्याग्रहणार्थमुपपन्नो जिष्णुपदेनोक्तोऽर्जुनः परामृश्यते, न गृहीतविद्यः पार्थपदेनोक्तः। पार्थपदार्थस्योपसर्जनत्वेन परामर्शविषयत्वायोगात्। परामर्शविषयत्वे सत्यपि सन्निकर्षादिदंशब्देनैव परामृश्येत अस्मा इति। योगशब्देन देवताध्यानप्रकारविशेषो विवक्ष्यते।

१. 'छनीय इति' ख. पाठः. २. 'गनै', ३. 'योर्वि' क. पाठः. ४. 'वपाकदाहप्र' ख. पाठः. ५. 'तीति व', ६. 'कां', ७. 'नीं क्रियां क'. क. पाठः. ८. 'र सद्यः प्र', ९. 'नप' ख. पाठः.

तमिति वक्ष्यमाणगुणविशिष्टमित्यर्थः । चशब्देन पूर्वश्लोकोक्ता विद्या समुच्चीयते । एकक्रियासम्बन्धरूपेण समुच्चयेन विद्यायोगयोरेकफलत्वं द्योत्यते । भिन्नफलत्वे 'योगं ततोऽस्मै' इति ब्रूयात् । सद्य इति तदानीमेव, न कालान्तर इत्यर्थः । विद्याभ्यासलभ्यं भाविनं तस्य गुणविशेषं न प्रतिपालितवानिति भावः । विततार दत्तवानित्यर्थः । योगस्य तदधीनतासंपादनं द्योतयितुं वितताररेत्युक्तं नोपदिदेशेति । योगस्य सद्योवितरणे हेतुमाह— तपःप्रभावाद् योग्यतमायेति । पूर्वार्जितस्य तपसो महिम्नैव विशिष्टयोगग्रहणे अर्हतमाय मुख्याधिकारिणे इत्यर्थः । तच्छब्दद्योतितं विशिष्टफलमद्भुतं योगस्य विशेषमाह — येनेत्यादिना । येन तत्त्वेष्ववभासे कृते अस्य चक्षुश्चिराय समुन्मिमीलेव । तथाभूते परमार्थे वस्तुनि तत्तत्कार्यानुगते पृथिव्यादौ कारणे च तत्त्वशब्दो वर्तते । तत्त्वेष्विति विषयसप्तमी । बहुवचनेनावभासस्य सर्वविषयत्वं द्योत्यते । तत्त्वेष्ववभास इति[2] स्फुटे प्रकाश इत्यर्थः । 'यस्य च भावेन—' (२. ३. ३७) इत्यादिनेयं सप्तमी । येन समस्तेषु वस्तुष्वपरोक्षज्ञाने कृते[3] अभूतपूर्वे नि(व ? र्व)र्तिते सतीत्यर्थः । अस्येतीदंशब्दो गृहीतविद्यायोगमनन्तरोक्तमर्जुनं परामृशति । चक्षुः दर्शनसाधनभूतमिन्द्रियम् । चिराय दीर्घकालं, शश्वदित्यर्थः । समुन्मिमीलेव समन्तत उन्मिषितमिव । योगप्रभावजनितया दिव्यदृष्ट्या सर्वभावानामजस्रमपरोक्षत्वादुन्मीलनफलसिद्धेरर्जुनचक्षुषः सर्वकालीनमुन्मीलनमुत्प्रेक्षितम् ॥ २६ ॥

**आकारमाशंसितभूरिलाभं दधानमन्तःकरणानुरूपम् ।**
**नियोजयिष्यन् विजयोदये तं तपःसमाधौ मुनिरित्युवाच ॥**

आकारमित्यादि । मुनिस्तमित्युवाच । तमिति प्रकरणबलेनार्जुनं परामृशंस्तच्छब्दः पुनरनुस्वनितः प्रसिद्धिबलेन मुनिधर्मविलक्षणैः क्षत्रधर्मैस्तस्य सम्बन्धं द्योतयति । प्रकृतपरामर्शित्वमिदंशब्दतच्छब्दयोः समानम् । तत्र सन्निहितं प्रकृतमिदंशब्दः परामृशति, व्यवहितं तु तच्छब्द इतीदंशब्दतच्छब्दविदां स्थितिः । तत्र प्रयोजने सति प्रकृतत्वमात्रमाश्रित्य सन्निहितमपि क-

१. 'हितकरणे', २. 'ति अवदाते स्फु' ख. पाठः. ३. 'ते पूर्वनिवर्ति' घ. पाठः.

चित्तच्छब्देन परामृश्यते। तच्छब्दसूचितं तस्य मुनिवैलक्षण्यं विशेषणेन विवृणोति — आशंसितभूरिलाभमिति। आशंसितः प्रार्थितो भूरि प्रभूतो लाभः प्रयोजनं सपत्नविजयादिर्येन स आशंसितभूरिलाभः, तम्। मानसी प्रयोजनाशंसा कुतोऽवगम्य इति तत्राह — अन्तःकरणानुरूपमाकारं दधानमिति। अन्तःकरणसमवेतायाः शत्रुविजयाद्याशंसायाः सदृशं तदनुमानलिङ्गमाकारं नेत्रवक्त्रादिविकारं धारयन्तमित्यर्थः। जिष्णोस्तादृशमाशयं विजानतो मुनीन्द्रस्य तदनुगुणमाकूतं द्योतयति — विजयोदये तपःसमाधौ नियोजयिष्यन्निति। विजयस्य विशिष्टस्य जयस्य उदय उत्पत्तिः समृद्धिर्वा येन स विजयोदयः, तस्मिन्। तपसि समाधिरेकाग्रता तपःसमाधिः। अथवा तपःप्रधानः समाधिस्तपःसमाधिः। शीतोष्णादिसहनरूपव्रतोपस्कृता कायिकी धर्मचर्या तपः। निष्कलरूपपर्यवसायिनी देवताध्यानसन्ततिः समाधिः। नियोजयिष्यन्निति नियमयिष्यन्। नीत्युपसर्गौ नियमार्थे वर्तेते। तेन तदुपसृष्टो युजिर्नियमार्थः। अपवर्गफलात् तपःसमाधेर्निवर्त्य विजयफले तपःसमाधौ नियमेन स्थितिं लम्भयिष्यन्नित्यर्थः। विजिगीषोर्विजयस्य विजयार्थे तपसि स्वयं प्रवृत्तत्वात् तदानीं मुनीन्द्रस्य तपोनियमविधिरनुवादरूपः। पश्चात्तु तादृशे[2]मुनीन्द्रनियोगप्रामाण्येनैव तापसरूपस्य शतक्रतोरपवर्गमार्गोपपादनमर्जुनो नाद्रियेतेति[3] द्योतयितुं नियोजयिष्यन्नित्युक्तं न नियोजयन्निति। पश्चाद्भाविनी शतक्रतोरर्जुनपरीक्षा तदानीमेव मुनीन्द्रेण दिव्यदृष्ट्या दृष्टेति मुनिशब्देन द्योत्यते। नियोजयिष्यन्नित्यनेन सामान्येनोक्तस्य तपोनियमविधेर्विशेषो मुनीन्द्रेण वक्ष्यत इत्याह — इत्युवाचेति। इतीत्थमनेन वक्ष्यमाणेन प्रकारेण। उवाच स्फुटमभिदधावित्यर्थः ॥ २७ ॥

**अनेन योगेन विवृद्धतेजा निजां परस्मै पदवीमयच्छन्।**
**समाचराचारमुपात्तशस्त्रो जपोपवासाभिषवैर्मुनीनाम् ॥ २८ ॥**

अनेनेत्यादि। मुनीनामाचारं समाचर। मुनीनां ज्ञानिनां तपस्यताम्। आचारं परम्पराप्राप्तं पुण्यविधिम्। समाचर सम्यगादरेणानुतिष्ठ। आचारसमाचरणस्य प्रकारविशेषमाह — जपोपवासाभिषवैरिति। हेतौ तृतीया। जपादयः

१. 'येऽपि ब' २. 'शा' ख. पाठः. ३. 'नैनाद्रियते' क. ख. पाठः.

प्रकारविशेषा अनुष्ठीयमानाः प्रकारवत आचारसमाचरणे हेतवः। मन्त्रोच्चारणावृत्तिर्जपः। पुण्यक्रियार्थमनशनमुपवासः। त्रिसन्ध्यस्नानमभिषवः। जपादीनां समस्तानामनुष्ठेयता समासेन सूच्यते। साधारणं तपःप्रकारमुपदिश्य विशेषणद्वयेनासाधारणमुपादिशति — निजां पदवीं परस्मै अयच्छन् इति। निजामात्मीयां पदवीं मार्गं परस्मै अयच्छन् अदिशन्। गरीयसि गौरवाद् बलीयसो भयाद्वा स्वाङ्गीकृताद् वर्त्मनः स्थानाद्वा कदाचिदपि न त्वया चलनीयम्। तपस्यतस्तवैतद् व्रतमित्यभिप्रायः। उपात्तशस्त्र इति, उपस्थितगृहीतायुध इत्यर्थः। प्रागेव जिष्णुना गृहीतानां गाण्डीवादीनामायुधानां समीपस्थितिस्तन्मूर्त्यविनाभाव इह तपस्याङ्गत्वेन विधीयते। मुनिशब्दोपस्थापितं मौनमपीह तपस्याङ्गं विधीयत इत्यवगन्तव्यम्[1]। वाक्यभेदशङ्का मा भूदिति[2] तपश्चरणमिह प्राधान्येन साक्षाद्विहितं, तदङ्गानि त्वनुवादरूपेण विहितानि। सुदुश्चरस्यास्य तपसः समाचरणे तव सामर्थ्यमस्तीत्याह—अनेन योगेन[3] विवृद्धतेजा इति। अनेन इदानीमुपदिष्टेन। योगेन समाधिना। विवृद्धतेजाः विशेषोपचिततमोविरोधिशक्तिविशेष इत्यर्थः। अनेनेति तस्य योगस्य विशेषणेन प्रागपि योगशक्तिरर्जुनस्यास्तीति द्योत्यते॥ २८॥

एवं साङ्गनियमां तपस्यां विधाय कस्मिन् देशे तपश्चरणीयं, कां देवतामुद्दिश्य वेत्यर्जुनस्य जिज्ञासायामाह —

**करिष्यसे यत्र सुदुश्चराणि प्रसत्तये गोत्रभिदस्तपांसि।**
**शिलोच्चयं चारुशिलोच्चयं तमेष क्षणान्नेष्यति गुह्यकस्त्वाम्॥**

करिष्यस इत्यादि। गोत्रभिदः प्रसत्तये यत्र तपांसि करिष्यसे, तं शिलोच्चयमेष गुह्यकस्त्वां क्षणान्नेष्यति। गोत्रभिदः इन्द्रस्य प्रसत्तये प्रसादाय भूधारकत्वेन कल्पितानां पुनः स्वचङ्क्रमणेन लोकबाधकानां शैलानां पक्षभेदेन शासनं कृतवांस्त्रिलोकपतिर्महेन्द्रो दुष्टानां द्विषतां जिगीषया तपस्यतस्तव सङ्कल्पितं दास्यतीति द्योतयितुं गोत्रभिद इत्युक्तं न वज्रभृत इत्यादि। तपांसीति बहुवचनेन बहुभिर्बहुविधैस्तपोभिः प्रसाद्यः सुराधिराजः, नैकेन न चैकविधेनेति च द्योत्यते। तपःक्रियायाः फलस्य कर्तृसमवायं सूचयन् करिष्यस

१. 'म्'। तप', २. 'नि वाक्यभेदशङ्कामाभूदिति मु', ३. 'नेत्यादि। अ' ख. पाठः.

इत्यात्मनेपदम् आ फलनिष्पत्तेस्तस्याः कर्तव्यतां द्योतयति । लट्प्रत्ययेन तस्याविलम्बितत्वं व्यज्यते । शिलोच्चयं पर्वतम् । चारवः शोभना रमणीया रत्नमयाः शिलोच्चयाः शिलानामुपलानामुच्चया उन्नता निबिडाः समूहाः यस्मिन् स चारुशिलोच्चयः, तम् । शिलोच्चयस्य दिव्यतां द्योतयदिदं विशेषणं दिव्यदेशतपश्चर्याया महीयःफलतां विभावयति । एष इति आगत एव नागामीत्यर्थः । गुह्यको यक्षः, गन्तव्यस्य दिव्यदेशस्य मार्गविशेषज्ञ इत्यर्थः । क्षणादिति स्वल्पेनैव कालेनेत्यर्थः । हेतौ पञ्चमी । नेष्यति प्रापयिष्यति । क्रियाफलस्य परसमवायं द्योतयता नेष्यतीति परस्मैपदेन फल्गुनप्रीत्यर्थैव यक्षस्य प्रवृत्तिः न स्वप्रयोजनार्थेत्यर्जुने जनानुरागातिशयः प्रकाश्यते ॥ २९ ॥

इति ब्रुवाणेन महेन्द्रसूनुं महर्षिणा तेन तिरोबभूवे ।
तं राजराजानुचरोऽस्य सद्यः प्रदेशमादेश इवाधितष्ठौ ॥ ३० ॥

इति ब्रुवाणेनेत्यादि । नरेन्द्रसूनुमिति ब्रुवाणेन तेन महर्षिणा तिरोबभूवे । सम्राडात्मजस्यार्जुनस्य पुरःसरं विना गमनागमनानौचित्यं, तस्य मनुष्यत्वाद् दिव्यदेशगमने दिव्यमार्गदेशिकापेक्षां च द्योतयितुं नरेन्द्रसूनुमित्युक्तं, न कपीन्द्रकेतुमिति वा महेन्द्रसूनुमिति वा[1] । स्ववचनफलं गुणवत्तरस्य फल्गुनस्यानुग्रहं स्वप्रयोजनमेव मुनीन्द्रोऽमन्यतेति ब्रुवाणेनेत्यात्मनेपदेन द्योत्यते । वचनस्यासमाप्तिं सूचयता शानचा तस्य कृत्यसामान्यमुक्तं, तद्विशेषं तु विशेषज्ञो धनञ्जयः स्वयमेव ज्ञास्यतीति मुनीन्द्रस्यार्जुने बहुमतिविशेषो व्यज्यते । प्रयोजकवस्त्वभिधायि वाक्यद्वयमनुसारयन्निति शब्द उपदेशैकगम्यं वस्तु समस्तमुक्तं, प्रतिभागम्यमेव नोक्तमित्यभिव्यज्य मुनीन्द्रौदासीन्यशङ्कां निरस्यति । उपदेशरूप एवानुग्रहो महर्षीणामुचितः, वरप्रदानरूपस्तु देवानामेवेत्युपदेशमात्रकरणस्यौचित्यं महर्षिशब्देन द्योत्यते । आगम्योपदेशो महर्षीणां न युक्त इति शङ्का तेनेति तच्छब्देन निरस्यते । तेन पाण्डवानां पितामहेनेत्यर्थः । पुण्यवतां तादृशानामेव द्वैपायनो दृश्यः नान्येषामिति तस्य दुर्लभदर्शनत्वं द्योतयितुं तिरोबभूवे इत्युक्तं न जगामेति । भावे लिट्प्रत्ययः । अन्तर्दधे इत्यर्थः । 'कुगतिप्रादय' 'तिरोऽन्तर्धौ'(१. ४. ७१) इति तिरःशब्दस्य गतिसंज्ञायाम्,

१. 'त्यादि ब्रु' ख. पाठः. २. 'ति म' घ. पाठः. ३. 'लट्प्रत्ययेन न तु क' ख. पाठः. ४. 'म्यमेव नो' क. घ. पाठः. ५. 'म् ते प्राग् धातोरिति धातोः प्राक् प्रयोगः । राज' घ. पाठः.

(२. २. १८) इति समासः । राजराजानुचरः अस्य तं प्रदेशं सद्यः अधितष्ठौ । राजराजस्य वैश्रवणस्य । अनुचरः किङ्करः यक्षः । अस्य महर्षेः । तं प्रदेशं, यत्र महर्षिः स्थितवान् तत् स्थानमित्यर्थः । सद्यः तदानीमेव । अधितष्ठौ अधिष्ठितवान् । राज्ञां नरेन्द्राणां राजा राजराज इत्यन्वर्थो राजराजशब्दः । नरेन्द्रसूनोः सुरकार्यं करिष्यतस्तपस्यार्थं दिव्यदेशं गमिष्यतोऽर्जुनस्य मार्गोपदेशेन साहाय्यं कुर्या इति मनुष्यधर्मणा वैश्रवणेन नियुक्तः स यक्षस्तत्रागतवानिति राजराजानुचरशब्देन द्योत्यते । आदेश इवेति । अस्त्यादेः स्थानिनः स्थानं भूवादिरादेश इवेत्यर्थः । अस्त्यादेः कार्यं प्रत्ययोत्पत्त्यादि समग्रं यथा भूवादिः करोति, तथैव मुनीन्द्रस्य कार्यमर्जुनसाहाय्यं समग्रमसौ यक्षः करिष्यतीत्यादेशसाम्येन गम्यते । 'अधिशीङ्स्थासां कर्म' (१. ४. ४६) इत्यधिकरणस्य कर्मत्वाद् द्वितीया । 'अड्भ्यासव्यवायेऽपि' इति स्थासकारस्य षकारः ॥ ३० ॥

**कृतानतिर्व्याहृतसान्त्ववादे जातस्पृहः पुण्यजनः स जिष्णौ ।**
**इयाय सख्याविव संप्रसादं विश्वासयत्याशु सतां हि योगः ॥**

**कृतानतिरित्यादि**[1] । सः पुण्यजनः जिष्णौ संप्रसादमियाय । स इत्यनन्तरप्रस्तुतः । पुण्यजनः यक्षः । संप्रसादं समीचीनं प्रसादं, विश्वासमित्यर्थः । विश्वासेन हि मनस इन्द्रियाणां वा प्रसादस्य सम्यक्त्वं भवतीति कार्येण कारणं लक्ष्यते । कृतानतिः कृतप्रणामः । सान्त्वं साम वादो वाक्यं सान्त्वरूपो वादः सान्त्ववादः, व्याहृतो गदितः सान्त्ववादो येन स व्याहृतसान्त्ववादः, तस्मिन् । व्याहृतः सान्त्ववादो यस्य स व्याहृतसान्त्ववाद इति वा बहुव्रीहिः । वचनाङ्गोच्चारणप्रयत्नमात्रकृतं वादस्य सान्त्वरूपत्वं न प्रयत्नान्तरकृतमिति द्योतयितुं व्याहृतेत्युक्तं न कृतेति । जातस्पृहः जातस्नेहः, स्नेहेन हि दर्शनादिस्पृहा भवतीति स्पृहया स्नेहो लक्ष्यते । पुण्येन जनो जन्म यस्य स पुण्यजनः इति पुण्यजनशब्दो व्युत्पाद्यते । तेन देवगृह्यस्य तस्य वासविसम्बन्धयोग्यता द्योत्यते । अन्वर्थो जिष्णुशब्दोऽर्जुने रूढः, जिष्णौ जयशील इत्यर्थः । उपचारचातुर्यातिशयकृतं तदतिशायित्वमिह जयः विवक्षितः । विश्वासप्रकर्षविवक्षया सख्यौपम्यमुक्तम् । सख्याविवेति । अभिन्नेन्द्रियवृत्तौ स्नेहविश्वासभूमौ

1. 'धनदेन' य. घ. पाठः.

सुहृदीवेत्यर्थः। द्राघीयसा कालेन परस्परमनोविशुद्धिनिश्चये सति सर्वस्य सर्वस्मिन् विश्वासो भवति। तत् कथमुच्यते क्षणेन तस्य तस्मिन् विश्वासो बभूवेति। तत्राह — सतां योगः आशु विश्वासयति हीति। सतां निकृत्यादिदोषरहितानामार्जवादिगुणयुक्तानां प्रशस्यतमानां पुंसाम्। योगः सम्बन्धः। आशु अचिरेण। विश्वासयति विस्रम्भयति। अर्थसामर्थ्येनान्योन्यामिति लभ्यते। हिशब्दो हेतौ। सतां सद्भिः सम्बन्धः सद्यो विश्वासं जनयतीति यत्, तस्मात् तस्य पुण्यजनस्य तस्मिन् जिष्णौ विश्वासप्राप्तिर्युक्तैवेत्यर्थः॥ ३१॥

**अथोष्णभासेव सुमेरुकुञ्जान् विहीयमानानुदयाय तेन।**
**बृहद्द्युतीन् दुःखकृतात्मलाभं तमः शनैः पाण्डुसुतान् प्रपेदे॥**

अथोष्णभासेत्यादि। अथ तमः पाण्डुसुतान् प्रपेदे। अर्जुनस्य युधिष्ठिरेण विद्याशिक्षोपदेशस्य तपस्यार्थं गमनानुज्ञानस्य चानन्तर्यमथशब्दो द्योतयति। तमः मोहः। पाण्डुसुतान् युधिष्ठिरादीन्। प्रपेदे प्राप। तमःप्राप्तौ हेतुमाह—तेन विहीयमानानिति। तेन अर्जुनेन विहीयमानान् वियुज्यमानान्, अचिरभाविफल्गुनवियोगचिन्ताकृतमेव दुःखं तेषां मोहरूपेण परिणतं, किं पुनर्वियोगकृतमिति विहीयमानानिति लट्प्रत्ययेन द्योत्यते। दुःखहेतुरर्जुनवियोगः किमर्थं न निषिद्ध इति तत्राह — उदयायेति, समृद्धये। तादर्थ्ये चतुर्थी उदयाय विहीयमानानिति। तदानीं दुःखहेतुरप्यर्जुनवियोगः पश्चात् सपत्नोन्मूलहेतुतया साम्राज्यसाधक इति कथं तैस्तन्निषिध्यत इत्यभिप्रायः। किमविवेकिनां प्राकृतानामिव तेषां दुःखहेतुको मोहो जात इति शङ्का तमोविशेषणेन क्रियाविशेषणेन च व्युदस्यते। दुःखकृतात्मलाभं तमः आत्मलाभो जन्म कृच्छ्रेण कृतजन्म, कथञ्चिज्जातमित्यर्थः। शनैः प्रपेदे विलम्बितं प्राप। प्राकृतानां प्रियवियोगादिजनितेन दुःखेन सहसा मोहो जायते प्रतीयते च। तेषां पाण्डुसुतानां तु नैवमिति भावः। पाण्डुसुतान् तमः प्रपेद इत्यस्य पाण्डुसुतेषु मोहरूपं[2] तमः प्रतीतमित्यर्थः। इन्द्रियेषु मोहविकारस्य प्रतीतिरेवं[3] तमःप्राप्तिः नान्या। पाण्डुसुतेषु मोहस्य जन्मप्रतीत्योर्विलम्बितत्वे हेतुमाह — बृहद्द्युतीनिति। द्युतिशब्देन प्रकाशरूपं मोहविरोधि विज्ञानमिह

---

१. 'द्रा घी' क. ख. पाठः. २. 'पत्वं त' ख. पाठः. ३. 'व मोहस्य प्रा' क. ख. पाठः

विवक्ष्यते । प्रकाशरूपत्वं तमःप्राप्तिश्चैकत्र संभवतीत्यत्र दृष्टान्तमाह — उष्णभासा विहीयमानान् सुमेरुकुञ्जानिवेति । दार्ष्टान्तिकगतं विहीयमानपदं दृष्टान्तेऽनुषज्यते, उदयायेति च । दृष्टान्ते मण्डलाविर्भावरूपस्योदयस्य सूर्यसम्बन्धादिवैषम्यायै दार्ष्टान्तिके सपत्नाभिभवरूपस्योदयस्यार्जुनसंबन्धो विवक्षितः । अर्जुनस्योदय एव युधिष्ठिरादीनामुदय इति नासौ पृथग् वक्तव्यः । उपमानस्य सूर्यस्योष्णभाःशब्देनोक्त्या उपमेयस्यार्जुनस्य तीव्रा परपरिभाविका विक्रमशक्तिर्व्यज्यते । यथा सुमेरुकुञ्जेषु रत्नमयतया बृहद्द्युतिष्वपि समस्ततेजोधिष्ठायिना सूर्येण विरहे सति नैशस्य तमसः प्रसरो भवति, तथैव पाण्डुसुतेषु धैर्यविज्ञानादिसमन्वितेष्वपि समस्तशक्त्यास्पदेन धनञ्जयेन विरहे सति दुःखमयस्य तमसः प्रसरो बभूवेति तात्पर्यार्थः ॥ ३२ ॥

**असंशयालोचितकार्यनुन्नः प्रेम्णा समानीय विभज्यमानः।**
**तुल्याद् विभागादिव तन्मनोभिर्दुःखातिभारोऽपि लघुः स मेने**

असंशयेत्यादि । सः दुःखातिभारोऽपि तन्मनोभिर्लघुर्मेने । स इति शनैः प्राप्य क्रमेण वर्धमान इत्यर्थः । दुःखमेवातिभारः दुःखातिभारः, 'उपमितम्—' (२.१.५६) इत्यादिना समासः । दुःखस्यातिभारत्वरूपणेन गरीयस्त्वं द्योत्यते । गरीयसो लघुत्वेन मन्तव्यत्वं न संभवतीत्यौत्सर्गिकं विरोधमपिशब्दो द्योतयति । तन्मनोभिस्तेषां पाण्डुसुतानां मनोभिः । लघुर्मेने सुभर इति प्रतीत इत्यर्थः । क्षणिकवृत्तिषु तेषां मनःसु जिष्णुवियोगेन समुद्भूतं गुरुतरं दुःखं तदानीमेवोद्भूतेन तद्विरोधिना वृत्त्यन्तरेण तिरस्कृतं लघुतया प्रतीतम् । स्थायिवृत्तिषु तेषु तद्बुद्धिषु चानुस्यूतं तु तद्दुःखं तदवस्थमेवेति द्योतयितुं तन्मनोभिरित्युक्तं, न तु तैस्तदानीमिति, धीभिरेषामिति वा । गरीयसो दुःखातिभारस्य लघुतया मनने हेतुमाह—असंशयेत्यादिना । असंशयालोचितकार्यनुन्न इति । असंशयमविद्यमानसंशयं निश्चितम् आलोचितेन निरूपितेन कार्येण कर्तव्येन तपस्यादिना नुन्नः प्रेरितः । तपस्यार्थं महामुनेर्निदेशोऽवश्यकर्तव्य इति निश्चयेन निरस्त इत्यर्थः । अनेन विशेषणेन मुनिनिदेशकर्तव्यताया गौरवमुक्तम् । तेषामर्जुनविषयस्य स्नेहस्याबाध्यत्वं विशेषणान्तरेण व्यञ्जयति —

१. 'ति द्द' क. ख. पाठः. २. 'द्वि' ३. 'द्दं' ४. 'ति लघुः सुभरः मेने प्रतीयते स', ५. 'तीयत' ख. पाठः.

प्रेम्णा समानीय विभज्यमान इति । प्रेम्णा स्नेहेन समानीय समं नोदनसमकालमेवानीयाभिमुखं नीत्वा, मनःसमीपं प्रापय्येत्यर्थः । विभज्यमानः पूर्वमविभक्ततया परिपूर्णः पुनरवयवविश्लेषविभागकृतां न्यूनतां नीयमान इत्यर्थः । अर्जुनस्नेहमुनिनिर्देशकर्तव्यतानिश्चययोरन्योन्यं जिगीषतोरसकृद् बाध्यबाधकभावं द्योतयितुं समानीय विभज्यमान इत्युक्तं, न समानीतमिति समानीय विभक्तमिति वा । कार्यगौरवेण दुःखातिभारस्य कार्त्स्न्येन तन्मनोनिवेशनं निरुद्धम्, अर्जुनस्नेहेन च तस्य कार्त्स्न्येन नोदनं नानुमतमिति तयोः समं प्राबल्यमित्याभिप्रायः । कार्यालोचनदशायां गरीयसस्तस्य दुःखस्य साकल्येनानुपलम्भात् तदानीं तन्मनोभिस्तल्लघुतया प्रतीतमित्येव, न त्ववयवह्रासकृता तस्य लघुता जातेति द्योतयितुं तन्मनोभिर्लघुर्मेन इत्युक्तं, न तु तन्मनःसु लघुर्बभूवेति । तस्य दुःखस्य लघुताप्रतीतौ हेतुरुत्प्रेक्ष्यते — तुल्याद् विभागादिवेति । तुल्यात् तुलासंमिताद्, अन्यूनातिरिक्तादित्यर्थः । विभागादिति हेतौ पञ्चमी । यथा गरीयान् भारो भारिकैः पूर्वमातोलने दुर्वहतया प्रतीतः पश्चादपोद्धृत्य समविभागेन निवेशितस्तैः सुवहतया प्रतीयते, तथैव गुरुतरदुःखं पुरस्ताद् दुःसहतयाध्यवसितं पुनः कार्यपर्यालोचनेनापोद्धृतं प्रेम्णा विभज्यमानं तन्मनोभिः सुसहतया प्रतीतमिति तात्पर्यार्थः ॥ ३३ ॥

**धैर्येण विश्वास्यतया महर्षेस्तीव्रादरातिप्रभवाच्च मन्योः ।**
**वीर्यं च विद्वत्सु सुते मघोनः स तेषु न स्थानमवाप शोकः ॥**

धैर्येणेत्यादि । स शोकस्तेषु स्थानं नावाप । स इत्यर्जुनप्रवासजन्मेत्यर्थः । अभिषङ्गजन्मा वाङ्नेत्रादिबाह्येन्द्रियविकारः शोकः । स्थानं स्थितिम् । नावाप न लेभे । तत्र हेतुमाह—धैर्येणेत्यादिना । धैर्यस्य प्रथमोक्त्या शोकनिरोधे प्रधानो हेतुर्धैर्यमिति ध्वनितं, तस्मिन् सत्येवान्येषां हेतुत्वं नान्यथेति । तेन तेषां धीरोदात्तत्वं द्योत्यते । महर्षेर्विश्वास्यतयेति विश्वासार्हतया, भगवता द्वैपायनेन यदुक्तं तत् तथैव भविष्यतीति निश्चयेनेत्यर्थः । तेषां महर्षेर्विश्वास्यतानिश्चयेन तेषां धार्मिकत्वं ध्वन्यते । अरातिप्रभवात् तीव्रान्मन्योश्चेति । अरातयः शत्रवः प्रभवः, प्रसूतिस्थानं यस्य सः अरातिप्रभवः तस्माद्, द्यूतादिषु दारुणनिकारकारिभ्यः सुयोधनादिभ्यः सपत्नेभ्यः समुद्भूतादित्यर्थः ।

१. 'न नि' क. घ. पाठः.

तीव्राद् दारुणाद्, द्विषदुच्छेदपर्यवसायिन इत्यर्थः। मन्योः क्रोधाद् दास्यवन-वासादिरूपाद् दैन्याद्वा। 'मन्युर्दैन्ये ऽध्वरे क्रुधी'त्यमरः। अनेन तेषां तेजस्विता व्यज्यते। शोकनिरोधे मन्योरप्राधान्यं ध्वनयतान्वाचयार्थेन चकारेण तेषामुचित-ज्ञता ज्ञाप्यते। मघोनः सुते वीर्यं च विद्वत्सु। एतत् तेष्वित्यस्य विशेषणम्। मघोनः सुते अर्जुने वीर्यमुत्साहशक्त्यतिशयं विद्वत्सु सदा ज्ञातृषु। अनुक्ताः स्थै-र्यविवेकादयो गुणाश्चकारेण समुच्चीयन्ते। हेतुगर्भमिदं विशेषणम्। तेन तेषा-मर्जुनवीर्यादिज्ञानं शोकनिरोधहेतुतया धैर्यादिभिः समुच्चीयते। सात्त्विकाभ्यां धैर्यमहर्षिविश्वासाभ्यां रजोमयस्य मन्योर्विजातीयत्वं व्यञ्जयितुं पञ्चम्या तस्य हेतुत्वमुक्तं न तृतीययेति सप्रयोजनो रीतिभङ्गो न दोषाय। पूर्वं महाकवि-ना स्थूलधियां प्रतीतिमनुसृत्य तेषां शोकशिथिलीभावे धैर्यादिहेतुत्रयं साक्षा-दुक्तम्। पुनर्मध्यमबुद्धीनां मनोनुवृत्तये तेषामर्जुनवीर्यादिज्ञानं तद्धेतुतया ध्वनि-तम्। पुनर्ध्वनितत्त्वविदां महामतीनामाह्लादविषये तत्रैव वाक्ये मघोनः सुत इत्यनेन फल्गुने देवानां स्नेहविशेषमभिव्यज्य तस्य तच्छोकविगमहेतुत्वं द्योति-तम्। एवमेव प्रतिपत्तृबुद्ध्यनुसारेण सर्वत्र महाकवीनामुक्तिविशेषा भवन्तीति नोक्तिवैषम्यं महाकविवाक्येषु दोषत्वेन शङ्कनीयम्। तत्र हेतुरेव सहृदयैर्नि-रूपणीयः॥ ३४॥

**तान् भूरिधाम्नश्चतुरोऽपि दूरं विहाय यामानिव वासरस्य।**
**एकौघभूतं तदशर्म कृष्णां विभावरीं ध्वान्तमिवाततान॥**

तान्भूरीत्यादि। तदशर्म तान् दूरं विहाय कृष्णामाततान। तदिति अर्जुनवियोगासत्तिजातम्। अशर्म शर्मणः सुखस्य विरोधि दुःखम्। तान् युधि-ष्ठिरादीन्। दूरं विहाय भृशं विमुच्य। कृष्णां द्रौपदीम्। आततान आनशे, आ-च्छादयति स्मेत्यर्थः। प्रचिततेजसस्तमोविरोधिविवेकविज्ञानादिसात्त्विकगुण-समग्रानित्यर्थः। चतुरोऽपीति। धैर्यतेजोनिधी युधिष्ठिरवृकोदरौ सहजस्नेहवि-वशावत्यार्द्रमती माद्रीसुतौ चेत्यर्थः। तेषां नैसर्गिकं तमोविरोधित्वं दर्शयितुं दृष्टान्तमाह — वासरस्य यामानिवेति। अर्धाधिकाभिः सप्तभिर्नाडिकाभिर्वि-भागे वासरश्चतुर्यामः। ताभिर्दशभिर्विभागे रात्रिस्त्रियामेति कालविद आहुः।

१. 'रासिंहः। अ' क. घ. पाठः

वासरावयवानां यामानामुपमानतोक्तिरुपमेयानां युधिष्ठिरादीनामवयवत्वं द्योतयति । तद्विशेषस्तु भारतेनावसेयः । तथाच भारते धर्माद्यभिमानदोषैर्विभक्ताः सुरेन्द्रावयवा युधिष्ठिरादय इति पञ्चेन्द्रोपाख्याने प्रपञ्चितम् । तेन सुरेन्द्रावयवानां युधिष्ठिरादीनां वासरावयवा यामा उपमानम् । अवयविनः सुरेन्द्रस्य त्ववयवी वासर इति वाक्योपमायाः परिपूर्णता सिध्यति । अर्जुने तु विष्णोरिन्द्रस्य च महिमा समवेतः । तत्र सुरेन्द्रावयवानां सर्वेषां पाण्डवानां शक्तिमाप्याययतः फल्गुनसमवेतस्य वैष्णवस्य महिम्नः सावयवस्य वासरस्य प्राणप्रदो विवस्वानुपमानमिति वाक्यार्थशक्त्या सहृदयानां व्यज्यते । सुमेरुकुञ्जानिवेत्यत्राप्ययं न्यायोऽनुसन्धेयः । एकौघभूतमिति । एक ओघः प्रवाहो यस्य तदेकौघं, तद्भूतं तत्संवृत्तमेकौघभूतम् । अथवा एक एव ओघः एकौघः, तद्भूतमेकौघभूतं बहुभिरोघैः संहतैरेकौघरूपेण परिणतमिति, निबिडमित्यर्थः । तस्याशर्मणस्तस्यां चिरस्थितिं द्योतयितुं दृष्टान्तमाह — विभावरीं ध्वान्तमिवेति । रात्रिं तम इवेत्यर्थः । मोहविधायितया प्रकाशविरोधित्वादशर्मणो ध्वान्तसादृश्यम् । कृष्णाशब्दः संज्ञात्वेन स्वाभिधेयमभिधाय विश्रान्तः पुनरनुस्वानशक्त्या वर्णविशेषं व्यञ्जयन् विभावर्याः कृष्णपक्षयोगं द्योतयति । तेन कलापरिपूर्णचन्द्रदर्शनावधि विभावर्यास्तम इव शक्तिपरिपूर्णपार्थदर्शनावधि कृष्णायास्तदशर्मेति द्योत्यते ॥ ३५ ॥

**तुषारलेशाकुलितोत्पलाभे पर्यश्रुणी मङ्गलभङ्गभीरुः ।**
**अगूढभावापि विलोकने सा न लोचने मीलयितुं विषेहे ॥३६॥**

तुषारलेशेत्यादि । विलोकने अगूढभावापि सा लोचने मीलयितुं न विषेहे । सामान्येनोक्तं विलोकनं प्रकरणवशादर्जुनविषयमिति लभ्यते । प्रवत्स्यतस्तस्यार्जुनस्य सविशेषदर्शनप्रकटिताभिलाषा नैसर्गिकतद्गुणातिशयजनितेन च प्रेम्णा विवशीकृता द्रौपदी विलोकननिमित्तं निमीलनं विधातुं न शशाकेति तात्पर्यार्थः । विलोकनप्रतिकूलस्य लोचननिमीलनस्य विलोकनानुकूल्यमुपपादयितुं विलोचने विशिनष्टि — पर्यश्रुणी इति । परिगताश्रुणी, अर्जुनप्रवासजनितगुरुतरदुःखोद्भूतेन बाष्पाम्बुना परिपूर्णे इत्यर्थः । दुःखाश्रुणो लोचनम्लानिहेतुतां द्योतयद् विशेषणान्तरमाह—तुषारलेशाकुलितोत्पलाभे इति । तुषारलेशै[3]र्हिमकणै[4]राकुलितस्य उत्पलस्य आभा शोभा ययोः ते तथोक्ते । पूर्वावस्था-

१. 'दर्शय' २. 'त्तयति ॥', ३. 'शेन हि', ४. 'णेन आ' घ. पाठः.

याश्चलितमाकुलम् । आकुलीकृतमाकुलितम् । तुषारलेशकर्तृकमुत्पलस्याकुलितत्वं वैवर्ण्यम् । तुषारलेशानामुपमानस्य उत्पलस्य कालुष्यहेतुत्वमुक्तं, न तु वहतस्तुषारवारिणः । तेन धैर्यनिरुध्यमानं कण्ठादुद्गतं परितः प्रसर्तुमारब्धं सूक्ष्ममश्रुजलमुपमेययोर्लोचनयोः कालुष्यहेतुरिति प्रतीयते । सबाष्पयोर्दृशोर्मीलनं बाष्पविमोक्षहेतुतया विलोकनानुकूलमेवेति भावः । मीलनमकृत्वा पर्यश्रुभ्यां दृग्भ्यामर्जुनं द्रष्टुमशक्नुवती सा कथं मीलनं कर्तुं न शशाकेति, तत्राह— मङ्गलभङ्गभीरुरिति । मङ्गलस्य भङ्गाद् भीरुः मङ्गलभङ्गभीरुः । विजयमङ्गलार्थं गमिष्यतो विजयस्य गमनारम्भे दुःखाश्रुपातादभीप्सितस्य मङ्गलस्य भङ्गः स्यादिति भृशं बिभ्यतीत्यर्थः । तस्यामङ्गलभङ्गभीरुतया बाष्पस्यान्तस्तम्भनारम्भोद्यमो द्योत्यते । विवेककृतेन मङ्गलभङ्गभयेन नैसर्गिकी नयननिमेषशक्तिर्निरुद्धेति तस्या वीरपत्नीत्वं द्योत्यते । अर्जुनालम्बनविभावभावितो वियोगोद्दीपनविभावोद्दीपितोऽश्रुप्रभृतिभिः सात्त्विकैरनुभावैर्व्यञ्जितो मत्यौत्सुक्यविषादादिभिर्व्यभिचारिभावैरुपचितः प्रवासविप्रलम्भरूपः शृङ्गारोऽत्र प्राधान्येन प्रतीयते । उपमाहेतुपर्यायोक्तविरोधालङ्कारास्तदङ्गत्वेन निबद्धाः । पर्यश्रुणी इति मङ्गलभङ्गभीरुरिति च हेतुः । बाष्पविमोक्षणाशक्तेर्मीलनाशक्त्यभिधानेन पर्यायेणोक्तत्वात् पर्यायोक्तम् । विरोधोऽपि स्फुट एव । वाक्यार्थगतो विरोधालङ्कारः, पदार्थगतास्त्वन्ये । परिकरालङ्कारोऽस्मिन् महाकाव्ये सर्वत्र साम्राज्यमनुभवति ॥ ३६ ॥

**अकृत्रिमप्रेमरसाभिरामं रामार्पितं दृष्टिविलोभि दृष्टम् ।**
**मनःप्रसादाञ्जलिना निकामं जग्राह पाथेयमिवेन्द्रसूनुः ॥ ३७ ॥**

**अकृत्रिमेत्यादि** । इन्द्रसूनुः रामार्पितं दृष्टं निकामं जग्राह । रामया स्त्रिया अर्पितं न्यस्तं रामार्पितम् । मङ्गलभङ्गभयेन बाष्पनिरोधं कृतवत्याः फल्गुनविलोकनोत्सुकायास्तस्याः पुनर्धैर्यविरोधि स्त्रीत्वसुलभं चापलमभिव्यक्तमिति द्योतयितुं रामार्पितमित्युक्तं न तदर्पितमिति । दर्शनस्य तात्पर्यप्रयत्नपूर्वकत्वं स्पृहणीयमूर्तमाल्यादिवद् ग्रहणीयत्वं स्वविषयादनपगमनं चार्पितशब्देन द्योत्यते । दृष्टिविलोभि दृष्टेश्चक्षुषो विलोभि विलोभनशीलम् । तेन स्निग्धतामाधुर्यादयो विलोकनगुणा व्यज्यन्ते । अकृत्रिमप्रेमरसाभिराममिति । नैस-

र्गिकेण प्रणयप्रकर्षेण रमणीयं, मनोभिराममित्यर्थः । कृत्रिमात् क्रियानिर्वर्तितात् क्षणमात्ररम्याद् राजसात् प्रेमरसाद् अकृत्रिमस्य नैसर्गिकस्य नित्यरम्यस्य सात्त्विकस्य प्रेमरसस्य प्रकर्षं प्रकटयितुमकृत्रिमेत्युक्तं न नैसर्गिकेति । दृष्टं दर्शनम् । भावे क्तप्रत्ययः । निकामं जग्राह पर्याप्तं गृहीतवान् । मनःप्रसादाञ्जलिनेति । मनःप्रसाद एवाञ्जलिः मनःप्रसादाञ्जलिः, तेन । सकृदाधिकग्रहणं द्योतयितुं मनःप्रसादस्याञ्जलित्वं रूपितं न तु करत्वम् । दृष्टिद्वारेण मनस्यर्पितेन तस्या दर्शनेन तन्मनसः प्रथमं प्रसादो जातः । स मनसः प्रसादस्तु पश्चाद् रम्यतानुसन्धानरूपे तस्य ग्रहणे करणं बभूवेति मनोवृत्तिक्रममनुसृत्य मनःप्रसादस्याञ्जलित्वं रूपितं न मनः प्रति । विजयाशंसिन्यास्तस्याः पतिदेवताया मनोह्लादिना मङ्गलेन समीहितसिद्धिशंसिना विलोकनेन विजयार्थं गमिष्यतस्तस्य विजयस्य मनसो व्यवसायविवेकानुकूलः प्रसादो बभूव, न तु शोकादिवद् व्यवसायादिप्रतिकूलः प्रहर्ष इति द्योतयितुं मनःप्रसादाञ्जलिनेत्युक्तं न मनःप्रहर्षाञ्जलिनेति । तदानीं तथानुभूतः प्रियतमादृष्टिपातः पश्चाद् वियोगसमये स्मर्यमाण उत्कण्ठादिहेतुतया तस्य मनःप्रतिकूलहेतुः स्यादिति शङ्कायामाह — पाथेयमिवेति । दीर्घप्रवासिनः पथिकस्य गमननिर्वाहसाधनमुपकरणं पाथेयम् । यशस्विन्या मनस्विन्या याज्ञसेन्या मङ्गलविरोधिबाष्पस्तम्भनपूर्वकमात्मनि समर्पितं विलोकनं तस्य धीरोदात्तस्य विजयस्य विजयव्यवसायमनोबलोपबृंहकतया पाथेयवद् गमनानुकूलमेव, न तु मुग्धाङ्गनया प्रेममात्रप्रयुक्तं विलोकनमिव धीरललितस्य धैर्यादिविरोधीति तात्पर्यार्थः । दिव्यत्वातिशयं द्योतयन्निन्द्रसूनुशब्दः धनञ्जयस्य धीरोदात्ततां ध्वनयति ॥ ३७ ॥

**धैर्यावसादेन हृतप्रसादा वन्यद्विपेनेव निदाघसिन्धुः ।**
**निरुद्धबाष्पोदयसन्नकण्ठमुवाच कृच्छ्रादिति राजपुत्री ॥ ३८ ॥**

धैर्येत्यादि । राजपुत्री इत्युवाच । राजपुत्रीशब्दस्त्वस्यास्तेजस्विताया नैसर्गिकत्वं द्योतयति । इतीत्थम् । अनेन वक्ष्यमाणेन प्रकारेणेत्यर्थः । वक्ष्यमाणं भर्तृविषयमनुशासनमनुचितमिति शङ्का कृच्छ्रादित्यनेन निरस्यते । कृच्छ्रात्

१. 'निरत्यं', २. 'लः स्या' ख. पाठः.

तीव्राद् व्यसनादित्यर्थः । हेतौ पञ्चमी । अथवा कृच्छ्रशब्दः क्लेशार्थः । तदा ल्यब्लोपे पञ्चमी । कृच्छ्रं प्राप्येत्यर्थः । अर्जुनवियोगे दुःखकृत उच्चारणक्लेश इह कृच्छ्रशब्देन विवक्ष्यते । कृच्छ्रकृतां वचनाशक्तिं क्रियाविशेषणेन व्यञ्जयति — निरुद्धबाष्पोदयसन्नकण्ठमिति । बाष्पस्योद्गमो बाष्पोदयः, निरुद्धेन बाष्पोदयेन सन्नः कण्ठो यस्मिंस्तत् तथोक्तम् । वचनक्रियाविशेषणमेतत् । बाष्पोदयनिरोधहेतुर्धैर्यमित्यर्थात् सिध्यति । उच्चार्यमाणानां शब्दानां स्खलनमस्फुटता च कण्ठसादेन द्योत्यते । धैर्येण बाष्पस्य जन्मैव किं न निरुद्धमिति तत्राह — धैर्यावसादेन हृतप्रसादेति । अर्जुनप्रवासो धैर्यावसादहेतुः, विजयोपायोपदेष्टुर्द्वैपायनस्यागमनं प्रसादहेतुरिति हेतुद्वयं प्रकरणशक्त्या प्रतीयत इति न साक्षादुक्तम् । धैर्यावसादस्य क्षोभकत्वातिशयं कृष्णायाः स्वावस्थितं क्षोभ्यत्वातिशयं च द्योतयितुं दृष्टान्तमाह — वन्यद्विपेन निदाघसिन्धुरिवेति । हृतप्रसादेत्यत्राप्यनुषज्यते । हृतप्रसादेत्यनेन जनितकालुष्येति च सिध्यति । वन्यद्विपेनोपमानेन धैर्यावसादस्योपमेयस्य बलीयस्त्वमनुबध्य क्षोभकत्वं च व्यज्यते । निदाघो ग्रीष्मः । शोषहेतुना निदाघेन सिन्धोर्विशेषणेन कृष्णायाः शोषहेतुः शोकवेगो व्यज्यते ॥ ३८ ॥

सपत्नकृतं परिभवमसहमाना तेजस्विनी याज्ञसेनी निकृतिनिरतानां तेषां द्विषतां प्रमथनाय विजयं प्रोत्साहयन्ती प्रथमं प्रवत्स्यतस्तस्य विजयार्थतपस्यादिप्रवृत्तिप्रत्यूहं स्वजनौत्सुक्यं हितैषिणी निषेधति —

**मग्नां द्विषच्छद्मनि पङ्कभूते संभावनां भूतिमिवोद्धरिष्यन् ।**
**आधिद्विषाम् आ तपसां प्रसिद्धेरस्मद्विना मा भृशमुन्मनी भूः ॥**

मग्नामित्यादि । अस्मद् विना मा उन्मनी भूः । अस्मादिति पञ्चमीबहुवचनम् । 'पृथग्विनानानाभिस्तृतीयान्यतरस्याम्' (२. ३. ३२) इति पञ्चमी । तदानीं वियुज्यमानाः सयाज्ञसेनिका युधिष्ठिरादयः पूर्वं वियुक्ताः पृथादयश्चास्मच्छब्देन विवक्ष्यन्ते । विनाशब्दो वियोगद्योतकः । अस्मद्वियोगेनेत्यर्थः । मा उन्मनी भूः इतः प्रभृत्युत्सुको मा भूः । उन्मनस्त्वनिषेधेन पार्थस्य

---

१. 'त्वं द्यो' ख. पाठः.

स्वजनहार्दं द्योत्यते, च्विप्रत्ययेन तु वशित्वम् । सोदरादिषु स्नेहस्तत्कृतमौत्सुक्यं च कथं त्याज्यमिति तत्राह — भृशमिति । अस्मद्दर्शनौत्सुक्येन स्वकृत्येषु स्खलितो मा भूरित्यर्थः । औत्सुक्यनिषेधहेतुमाह — द्विषच्छद्मनि मग्नां संभावनामुद्धरिष्यन्निति । द्विषत्कृतं छद्म छलं द्विषच्छद्म द्यूतादि, तत्र मग्नां निपत्यादर्शनगतामित्यर्थः । 'टुमस्जो शुद्धा'विति पठितोऽप्यदर्शनेहतौ जलादीनामधःपतने मज्जतिः प्रयुज्यते । संभावनां बहुमतिम् । उद्धरिष्यन् ऊर्ध्वं हरिष्यन्, अचिरेणोद्गमयितुमुद्यच्छमान इत्यर्थः । संभावनाया दुरुद्धरत्वहेतुमाह — पङ्कभूत इति । पङ्कात्मना परिणतं पङ्कभूतं, द्विषच्छद्मनः पङ्कभाव उक्तः न पङ्कसादृश्यमात्रम् । तेन तस्य सर्वात्मना अनर्थयोनित्वं तन्मग्नायाः संभावनाया दुरुद्धरतरत्वं च द्योत्यते । भूतिमिवेति । भूतिशब्देन साम्राज्यश्रीर्विवक्ष्यते । साम्राज्यश्रियः सपत्नैश्छद्मद्यूतेन हरणं सर्वलोकप्रत्यक्षमिति तस्या द्विषच्छद्मनि मग्नत्वं सुप्रसिद्धमित्युपमानत्वमुचितम् । संभावनायास्तु द्विषच्छद्मना निह्नुतत्वं जनैः शनैः प्रतीतमिति तस्या उपमेयत्वमेव युक्तमित्युपमा स्वीकृता, न समुच्चयो दीपकं वा । कियच्चिरमौत्सुक्यसंयमो विधेय इति तत्राह — आधिद्विषां तपसाम् आ प्रसिद्धेः । आधिर्व्यापत्तिः तद्विषां तत्प्रतिकूलानां, तन्निवर्तकानामित्यर्थः । तपसामिति बहुवचनेन फलोदयावधि सर्वेषां तपसां कर्तव्यता द्योत्यते । प्रसिद्धेः प्रकृष्टायाः सिद्धेः, फलनिष्पत्तेरित्यर्थः । आङत्र मर्यादायां वर्तते, कर्मप्रवचनीयः । 'पञ्चम्यपाङ्परिभिः' (२. ३. १०) इति पञ्चमी । औत्सुक्यनिरोधस्य मर्यादाविधानेन मुक्त्यर्थां तपश्चर्यां निषिध्यते ॥ ३९ ॥

विजयादिफलेच्छया तपस्यतो मुमुक्षोरिव किमौत्सुक्यं निषिध्यत इति तत्राह —

**यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसंख्यामतिवर्तितुं वा**
**निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः ॥**

निरुत्सुकानामभियोगभाजामङ्कं सिद्धिः समुत्सुकेव उपैति । उत्सुकशब्देनौत्सुक्यमिहोच्यते, धर्मधर्मिणोरभेदात् । निरस्तौत्सुक्यानामित्यर्थः । यस्य फल-

---

१. 'न्.एष्यन् अ'. २. 'सर्वेषां प्र'. ३. 'विरोधेन' घ. पाठः.

स्येच्छया यस्मिन् कर्मण्यभियोगः, तदन्यविषयमौत्सुक्यमिह निषिध्यते नौत्सुक्यमात्रम्। क्रियायाः पौनःपुन्यमभियोगः, तद्भाजां,तत्सेविनामित्यर्थः। अभियोगे तात्पर्यादरौ भजिर्द्योतयति। अङ्कमुत्सङ्गम्। सिद्धिः समग्रफलनिष्पत्तिः। समुत्सुकेव सङ्गमोत्सुकेव। उपैति उपगच्छति। किन्निमित्तमभियोगभाजामित्यत्राह— यशोऽधिगन्तुमित्यादि। अत्र वाशब्दोऽध्याहार्यः। यशोऽधिगन्तुं वा सुखलिप्सया वा मनुष्यसंख्यामतिवर्तितुं वा अभियोगभाजामित्यन्वयः। वाशब्दाध्याहारे एवाभियोगस्य निमित्तत्रयं विकल्पेन प्रतीयते। केचिद् यशोऽर्थिनः, केचित् सुखार्थिनः, केचिद् दिव्यत्वार्थिन इति रुचीनां वैचित्र्यान्निमित्तत्रयं विकल्पितं न समुचितम्। यशोऽधिगन्तुं यशो लब्धुम्। सुखलिप्सया सुखं लब्धुमिच्छया। मनुष्येष्वात्मनः संख्यां गणनमतिवर्तितुम्, अतिक्रमितुमित्यर्थः। यशोदिव्यत्वयोः प्रकर्षहेतुत्वमुपायं च प्रमाणैरवगतवतां पश्चात् तयोरिच्छा भवति। सुखे तु सर्वेषां प्रथममिच्छा तदनन्तरं तदुपायादिविमर्श इति सुखार्थप्रवृत्तौ सुखेच्छायाः प्रयोजकत्वमपेक्ष्य रीतिभङ्गे सत्यपि सुखलिप्सयेत्युक्तं, न सुखमार्जितुमित्यादि। मनुष्यस्य दुःखात्मकत्वान्मनुष्यगणनातिक्रममात्रमविवेकिभिः पुरुषैरिष्यते न तदूर्ध्वभवं दिव्यत्वमेवेति द्योतयितुं मनुष्यसंख्यामतिवर्तितुमित्युक्तं न प्राप्तुं परं वा दिवि देवभावमिति। अथवा यशोऽधिगन्तुमभियोगभाजामित्यन्वयेऽवसिते पश्चाद्धेतुद्वयस्य विकल्पः। तत्र चाभियोगभाजामित्यनुषज्यते। अथवा सुखलिप्सया यशोऽधिगन्तुं वा मनुष्यसंख्यामतिवर्तितुं वा इति विकल्पः। यशोधिगमनार्थं मनुष्यसंख्यातिवर्तनार्थं चाभियोगं सुखलिप्सैव प्रयोजयतीति द्वितीयपादेऽपि सुखलिप्सयेत्यनुषज्यते। सिद्धेरङ्कोपगमनारोपः समुत्सुकत्वोत्प्रेक्षा च प्रेयसीसाम्यं गमयति। सर्वासु क्रियासु तदेकाग्रतां विना न फलसामग्रीति तात्पर्यार्थः॥ ४०॥

एवं विजयार्थायां तपश्चर्यायामेकाग्रताया आवश्यकत्वमभिव्यज्य परप्रयुक्तनिकारस्मरणेन कोपमुद्दीपयन्ती द्विषदुन्मूलनार्थे तपसि तस्य मतिस्थैर्यमापादयति — लोकमित्यादिभिश्चतुर्भिः श्लोकैः।

---

१. 'ति तत्रा', २. 'नुयशो' घ. पाठः.

लोकं विधात्रा विहितस्य गोप्तुं क्षत्रस्य मुष्णन् वसु जैत्रमोजः।
तेजस्वितायां विजयैकवृत्तेर्निघ्नन् प्रियं प्राणमिवाभिमानम् ॥

लोकमित्यादि । परैर्योऽस्मासु प्रसह्य प्रयुक्तः स निकारः त्वद् विना मे हृदयं नवीकरिष्यति । कीदृशो निकार इति जिज्ञासायामर्जुनस्य कोपोद्दीपनैर्विशेषणैर्निकारं विशिनष्टि — क्षत्रस्य ओजः मुष्णन् । क्षत्रस्येति जातावेकवचनम् । सहसोपजातः स्वबलस्यापगमः क्षत्रैर्न ज्ञात इति द्योतयितुं मुष्णन्नित्युक्तं न हरन्निति । कीदृशमोजः वसु धनम् । ओजसैव क्षत्रियेण धनमार्ज्यत इति तदोजसो वसुत्वमुपचरितम् । जैत्रं जयसाधनम् । अथवा वसुजैत्रमित्येकं पदं, वसुजयसाधनमित्यर्थः । क्षत्रं विशिनष्टि — विधात्रा लोकं गोप्तुं विहितस्येति । लोकशब्देन रक्ष्यसङ्कोचो व्युदस्यते । विधातृशब्देन क्षत्रस्रष्टुः सत्यसङ्कल्पता प्रतीयते । गोप्तुं विहितस्येत्यनेन क्षतात् त्रायत इति क्षत्रमिति क्षत्रशब्दस्य निरुक्तिर्द्योत्यते । परमेष्ठिप्रभवायाः क्षत्रशक्तेरसंभाव्यमपगमं सहसा कुर्वन्नसौ निकारो लोकक्षयपिशुन इति चानेन विशेषणेन व्यज्यते । अभिमानं निघ्नन् । क्षत्रस्येत्यनुषज्यते । कीदृशमभिमानम् । विजयैकवृत्तेस्तेजस्वितायाः प्राणमिव प्रियम् । परपरिभवशक्तिः परपरिभवासहिष्णुत्वं च तेजः, तद्युक्तस्तेजस्वी, तद्भावस्तेजस्विता, तस्याः । विजय एकस्मिन् वृत्तिरवस्थितिर्यस्याः सा विजयैकवृत्तिः, तस्याः । क्षत्रियस्य तेजसा सम्बन्धो नित्य इति द्योतयितुं तेजस्वितायां इत्युक्तं न तेजस इति । अभिमानाभावे तेजस्वितायां असत्कल्पता प्राणौपम्येन प्रतीयते । विशिष्टजयवाची विजयशब्दः पुनरनुस्वानशक्त्या फल्गुनं व्यञ्जयन् तेजस्वितायास्तदविनाभावं द्योतयति । मुषितं वस्तु पुनः कदाचिद् दृश्यते लभ्यते च, निहतं तु न तथेति मुष्यमाणात् क्षत्रौजसो निहन्यमानस्य क्षत्रियाभिमानस्य पुनर्दुष्प्रापतरत्वं द्योतयितुं निघ्नन्निति क्रियान्तरमुपात्तं, न मुष्णन्नित्यस्यानुषङ्गः कृतः । अनेन निकारेण क्षत्रजातेरेव बलाभिमानयोर्भ्रंशो जातः न पौरवाणां कौरवाणां पाण्डवानां वेति क्षत्रशब्देन द्योत्यते ॥ ४१ ॥

तादृशस्य निकारस्यासंभाव्यत्वेनाश्रद्धेयतामभिव्यज्य पुनस्तच्छ्रद्धेयत्वनिश्चये यशोभ्रंशहेतुमाह —

१. 'मा[illegible] क्षत्रौज[illegible] इति क्षत्रियाभिमानपुन' क. पाठः

व्रीलानतैराप्तजनोपनीतः संशय्य कृच्छ्रेण नृपैः प्रपन्नः ।
वितानभूतं विततं पृथिव्यां यशः समूहन्निव दिग्विकीर्णम् ॥

व्रीलानतैरित्यादि । नृपैः संशय्य कृच्छ्रेण प्रपन्नः, कथंचिन्निश्चित इत्यर्थः । आप्तजनोपनीत इति आप्तैर्विश्वस्तैर्जनैर्बहुभिः पुरुषसमूहैः उपनीतः समीपं प्रापितः, श्रवणद्वारेण मनस्यवस्थापित इत्यर्थः । पूर्वमपरिचितेषु तादृशं निकारं वदत्सु तेषामनृतभाषित्वं नृपैर्निश्चितं, पुनराप्तस्याप्तयोर्वा वचने संशयितं, पुनस्तु बहूनां तादृशानामाप्तानां वचने तादृशे निकारे तेषां निश्चयोऽपि जात इति पदान्तरसहितेन कृच्छ्रशब्देन द्योत्यते । व्रीलानतैरिति । एतन्नृपाणां तात्कालिकं विशेषणं, नरपतिपत्न्यास्तादृशे निकारे निश्चिते नरादिरक्षाधिकृतानां राज्ञां तच्छ्रवणेनैव शिरांसि व्रीलयावनतानीति तात्पर्यार्थः । यशः समूहन्निवेति । यशसः फल्गुनादिसम्बन्धः प्रकरणशक्त्या प्रतीयते । समूहन् सङ्कोचयन् बहुप्रदेशव्याप्तं स्वल्पदेशेनावच्छिन्दन्नित्यर्थः । निकारेण यशसो व्याप्तिः प्रतिबद्धेव न प्रतिहता । तेन पुनः प्रतिबन्धनिवर्तनेन तद्व्याप्तिः प्रत्यानेतुं शक्येति द्योतयितुं समूहन्निवेत्युक्तं न समूहन्नित्येव । वितानभूते वितानवद् भूतं मुक्ताक्षौमादिमयं विशिष्टस्य भवनस्य विस्तीर्णमुपरिच्छदनं वितानम् । यशसो वितानवद्भावोक्त्या यशोधिकरणत्वेन प्रतीयमानस्य भुवनस्य भवनसाम्यं गम्यते । अनेन विशेषणेन नभोनाकादिषूर्ध्वलोकेषु यशसो व्याप्तिर्द्योत्यते । तादृशी यशसो व्याप्तिरत्याखण्डलं खाण्डवदाहादिविक्रमं व्यञ्जयति । वितानेन भूतं वा वितानभूतम् । वितानशब्दो यज्ञेऽपि वर्तते । शतमखसुखविबुधविस्मयहेतोरन्यदुष्करस्य राजसूयस्य महाक्रतोः करणेन जातमित्यर्थः । पृथिव्यां विततं विशेषेण ततम्, अन्येषां यशांस्यधःकृत्य व्याप्तमित्यर्थः । विशिष्टायां पृथिव्यां यशसो व्याप्त्या विशिष्टं युधिष्ठिरस्य पृथिवीरक्षणसौष्ठवं सूच्यते । दिग्विकीर्णं प्राच्यादिषु दिक्षु विकीर्णं विविधं कीर्णम्[3] । विक्षेपार्थः किरतिरत्र विक्षेपफले विस्तारे वर्तते । यशसो दिग्विकीर्णत्वेन दिग्विजयविक्रमो व्यज्यते । प्रथमेन विशेषणेनार्जुनस्य वीर्यातिशयो व्यज्यते, द्वितीयेन सम्राजो युधिष्ठिरस्य, तृतीयेन भीमादीनां चतुर्णामिति विभागो भारतज्ञैः सहृदयैरवगन्तव्यः ॥ ४२ ॥

१. 'हृदे', २. 'वदत्सु', ३. 'वितीर्णं' ख. पाठः.

निर्निमित्ता लघुनिमित्ता वा ख्यातिर्निकारेण निह्नूयेत, महत्तरेण वीर्येण तादृशैरद्भुतकर्मभिश्च जाता तु सा कथं परिभवमात्रेण तिरस्क्रियेतेत्याशङ्क्याह —

**वीर्यापदानेषु कृताभिमर्शस्तन्वन्नभूतामिव सम्प्रतीतिम् ।**
**तन्वन् प्रयामक्षयमायतीनामर्कत्विषामह्न इवावशेषः ॥ ४३॥**

वीर्यापदानेष्विति । वीर्यापदानेषु कृताभिमर्श इति । अद्भुतं विक्रमादि कर्म अपदानं वीर्यमपदानानि च वीर्यापदानानि तेषु । कृताभिमर्शः कृततिरस्कारः । अनुचिततमत्वादनुपेक्षणीयेन समुपेक्षितेन प्रत्यक्षेण निकारेण तादृशे वीर्ये तादृशेष्वपदानेषु च जनानां स्मृतिरेव निरस्तेति भावः । प्रशस्यक्रियागुणकृतायां कीर्तौ समन्ततः प्रसरन्त्यां तेषु क्रियादिषु स्मृतिः कथं निरुध्येतेति तत्राह — संप्रतीतिमभूतामिव तन्वन्निति । सम्यक् प्रतीतिं कीर्त्तिम्[2] अभूतामिव पूर्वमजातामिव । तन्वन् कुर्वन् । पूर्वापरानुसन्धानालसो बौद्धादिवत् क्षणिकप्रत्ययस्तादृशं परिभवं प्रत्यक्षेणानुभवन् प्राकृतो लोकः कर्णपरम्परोपनीतानि भवतां वीर्यापदानानि प्रत्येतुं कथं शक्नुयादिति तात्पर्यार्थः । अभूतां संप्रतीतिं तन्वन्निवेति वान्वयः । समन्ततः प्रतीतिः बहुमतिरूपा प्रतीतिः पूर्वं भूता । तद्विपरीतां निन्दारूपां सर्वेषां युष्मासु प्रतीतिं जनयन्नित्यर्थः । कीर्त्तेर्न्यग्भावनेनाकीर्त्तेरुद्भावनेन च निकारस्य फलितमाह — आयतीनां प्रयामक्षयं कुर्वन्निति । आगामिन्यः फलसमृद्धय आयतयः, प्रयामो दैर्घ्यम् । आयतीनां जगत्स्थितिहेतुत्वं तदायामक्षयस्य जगदनिष्टतां च द्योतयितुं दृष्टान्तमाह — अर्कत्विषामह्नोऽवशेष इवेति । प्रयामक्षयं कुर्वन्नित्यनुषज्यते । अह्न इति षष्ठ्या अवयवावयविभावः सम्बन्धो द्योत्यते । अनुपयुक्तोंऽशः शेषः । स त्ववच्छिन्नः स्वल्पो[3]ऽवशेषः । अह्नः प्रकाशरूपत्वेऽपि तदवयवस्यापराह्णस्य तमःपर्यवसायित्वात् तमोरूपत्वं प्रतीयत इति तमोमयस्य निकारस्य तादृशोऽपराह्ण उपमानं भवितुमर्हत्येव । दिवसस्येव क्रमाभिव्यक्ततीव्रभावस्य निकारप्रवाहस्यावशिष्टोंऽशः छद्मद्यूतमयो निकार इत्यहरवशेषदृष्टान्तेन द्योत्यते । अर्कसम्बन्धिनीनां त्विषामुपमानत्वमुपमेयानामायतीनां युधिष्ठिरसम्बन्धितां द्योतयति ।

---

१. 'ति शङ्कायामाह', २. 'त्त्म', ३. 'ल्पाव' घ. पाठः.

यथा सायाह्नकृतो रवित्विषामायामापचयः कालान्तरे पुनरुदयेन निवर्तनीयः, तथा निकारकृतो युधिष्ठिरसम्बन्धिनीनामायतीनामायामापचयोऽपीति रविकिरणापराह्णदृष्टान्तेन द्योत्यते ॥ ४३ ॥

इत्थमर्थानुबन्धितयोपक्षिप्तस्य निकारस्य स्वरूपं स्मारयति —

**प्रसह्य योऽस्मासु परैः प्रयुक्तः स्मर्तुं न शक्यः किमुताधिकर्तुम् ।**
**नवीकरिष्यत्युपशुष्यदार्द्रः स त्वद् विना मे हृदयं निकारः ॥**

**प्रसह्येत्यादि** । यः परैरस्मासु प्रसह्य प्रयुक्तः । परैः सपत्नैः । सपत्नीकाः पाण्डुसुतास्तत्सुहृदो यदुपाञ्चलादयश्चास्मच्छब्देनेह विवक्ष्यन्ते । प्रसह्य बलादित्यर्थः । सर्वस्वहरणं धर्मपत्नीक्लेशनं च युधिष्ठिरादीनां युष्माकं समक्षमेव सपत्नैः कृतमिति तन्मर्षणं दौर्बल्यावहमिति प्रसह्येत्यनेन द्योत्यते । स्मर्तुं न शक्य इति । यच्छब्दबलेन स इत्याक्षिप्यते । अधिकर्तुं किमुत, शक्य इत्यनुषज्यते । वाचिकेन कायिकेन वा व्यापारेण प्रारब्धुमित्यर्थः । किमुतेत्येकं पदमव्ययं किंशब्दार्थे वर्तते । निकारस्य स्मरणीयतानिषेधेनाधिकर्तव्यताक्षेपेण च निर्वाह्यताशङ्का दूरादेव निरस्ता । स निकारः मे हृदयं नवीकरिष्यति । निकारः परिभवः । पौरुषविशेषसुलभधैर्यादिगुणान्वितानामेषां त्वत्सोदराणां त्वद्वियोगेन निकारेण च तथा दुःखं न भविष्यति स्त्रीस्वभावसुलभचापलाया यथा ममेति द्योतयितुं मे इत्युक्तं न तु न इति । हृदयस्य तादृशं नवत्वं न भूतपूर्वं यादृशं निकारेण करिष्यत इति च्विप्रत्ययेन द्योत्यते । कीदृशं हृदयम् । उपशुष्यद् भृशं शुष्यद्, आर्द्रतां त्यजादित्यर्थः । हृदयास्थितस्य दुःखस्योपशोषो हृदय आरोप्यते । यथा व्रणस्योपशोषो व्रणस्थाने । कीदृशो निकारः, त्वद्विना आर्द्रः त्वद्वियोगेन प्रत्यग्रः । उपशुष्यतो हृदयस्य नवत्वमार्द्रत्वम् । सज्जनसंवासाद्यौषधैरुपशुष्ककल्पदुःखव्रणं मम हृदयं त्वद्विरहेण प्रत्यग्रतां नीतः स निकारः शीघ्रमार्द्रदुःखव्रणं करिष्यतीति तात्पर्यार्थः । आर्द्रतात्यागोऽवयवह्रासश्च शुष्यतेरर्थः । आद्यमर्थमाश्रित्य योजना कृता । द्वितीयार्थाश्रयेण केचिद् योजयन्ति । उपशुष्यद् उपक्षीयमाणम् । सततमनुस्मर्यमाणत्वादार्द्रो निकारः साम्राज्यभ्रंशादिजन्मभिराधिभिरुपक्षीयमाणधैर्यादिगुणं मम हृदयं त्व-

द्वियोगेन नवीकरिष्यति नवदुःखानुबन्धं करिष्यतीत्यर्थः । उपशुष्यदार्द्र इत्येकं वा पदं निकारविशेषणम् । उपशुष्यंश्च आर्द्रश्चेति विग्रहः । सह्यमानत्वादुपशुष्यन् स्मर्यमाणत्वादार्द्रः । चतुर्भिः श्लोकैर्वाक्यसमाप्त्या कलापकसंज्ञोऽयं श्लोकसमूहः । तथाचोक्तं —

"द्वाभ्यां सन्दानितकं विशेषकः स्यात् त्रिभिः श्लोकैः ।
चक्रं कलापको वा चतुर्भिरथ कुलकमत ऊर्ध्वम् ॥"

इति ॥ ४४ ॥

त्वद्वियोगे सति निकारो मम दुःसहतर इत्युक्ते मम गमनं तव किमनभिमतमित्यर्जुनस्य शङ्कायां परिभवपरिहारफलस्तव वियोगो दुःखकृदपि मया कटुकौषधवत् सह्यते, न तु परिभूतस्य तव दर्शनमित्याह — प्राप्त इत्यादिना श्लोकद्वयेन ।

**प्राप्तोऽभिमानव्यसनादसह्यं दन्तीव दन्तव्यसनाद् विकारम् ।**
**द्विषत्प्रवाहान्तरितोरुतेजाः शरद्घनाकीर्ण इवादिरह्नः ॥ ४५ ॥**

प्राप्तोऽभिमानेत्यादि । त्वमन्यमाकारमभिपन्न इव । अभिपन्नः अभिगत इत्यर्थः । प्रत्यभिज्ञातुं न शक्योऽसीत्यभिप्रायः । आकारान्यत्वमेव विवृणोति — अभिमानव्यसनादसह्यं विकारं प्राप्त इति । परान् प्रत्यनम्रत्वमात्मवर्गोन्नतिकारित्वं चेति द्विविधस्याभिमानस्य कुरुसभायां छद्मद्यूतेन जाता विपत्तिरिहाभिमानव्यसनशब्देन विवक्ष्यते । हेतौ पञ्चमी, अभिमानव्यसनहेतुकम्[1] । असह्यं दुःखहेतुतया सुदुःसहम् । विकारमन्यथात्वम् । प्राप्तः प्रकर्षेण गतः । विकारस्य व्यक्ततामभिमानस्यावयवसदृशतां च द्योतयितुं दृष्टान्तमाह — दन्तव्यसनाद् दन्तीवेति । साधारणं विशेषणमनुषज्यते । परपरिभवशक्तिरूपे तेजसि सत्यभिमानभङ्गो न व्यज्यत इति तत्राह — द्विषत्प्रवाहान्तरितोरुतेजा इति । द्विषतां प्रवाहेनाविच्छिन्नेन समूहेनान्तरितं तिरस्कृतमुरु महत् तेजो यस्य स तथोक्तः । अभिमानभङ्गे दृष्टे तेजसि च[2] न दृष्टे भूयोभिः शताधिकैस्तैः सपत्नैस्तवैकस्य चतुर्णां सोदराणां च तेजस्तिरस्कृतमेव प्राकृताः प्रतियन्तीत्यभिप्रायः[3] । द्विषत्प्रभावेति पाठे तवाभिमान-

१. 'नहेतुतया दुः', २. 'च दृ', ३. 'ती' ख. पाठः.

'भङ्गदर्शने त्वत्तेजोनिरोधी द्विषतां प्रभावोऽपि सम्प्रति जनैः प्रतिपन्न इत्यभिप्रायः। सपत्नैः कृतस्तव तेजास्तिरस्कारः न दीर्घकालानुबन्धी त्वयैव निरसनीयश्चेत्यत्र दृष्टान्तमाह—शरद्धनाकीर्णः अह्नः आदिरिवेति। शरद्घनैः शरन्मेघैराकीर्णः समन्ततो विक्षिप्तः, तनूकृतप्रकाश इत्यर्थः। अह्नः आदिः प्रभातसमयः। अथवा आदिशब्देन कारणमुच्यते। अह्नः कारणं दिवाकर इत्यर्थः। शरत्सम्बन्धेन द्योतितं घनानां दौर्बल्यं द्विषतां दौर्बल्यं द्योतयति ॥ ४९ ॥

सपत्नलोकप्रलयाग्निषु महास्त्रेषु सत्सु कथमर्जुनस्य तेजः सपत्नैस्तिरस्क्रियत इति तत्राह—

**सव्रीलमन्दैरिव निष्क्रियत्वान्नात्यर्थमस्त्रैरवभास्यमानः।**
**यशःक्षयात् क्षीणजलार्णवाभस्त्वमन्यमाकारमिवाभिपन्नः ॥**

**सव्रीले**त्यादि। अस्त्रैर्नात्यर्थमवभास्यमानः। अवेत्युपसर्गो विशुद्धौ वर्तते। अवदातमकलुषं भास्यमानः अवभास्यमानः। न सातिशयं दीप्यमान इत्यर्थः। कीदृशैरस्त्रैः, निष्क्रियत्वात् सव्रीलमन्दैरिव। निरस्तरिपुहननादिव्यापारत्वात् सव्रीलैः, अत एव मन्दैरिव। 'विशेषणं विशेष्येण बहुलम्' (२. १. ५७) इति समानाधिकरणसमासः। सलज्जतया अपटुभिरित्यर्थः। निष्क्रियत्वं सव्रीलत्वे हेतुः। सव्रीलत्वं मन्दत्वे हेतुः। निष्क्रियत्वहेतुकं सव्रीलत्वं मन्दत्वं चास्त्राणामचेतनत्वादुत्प्रेक्षितम्। अस्त्राणां सव्रीलत्वाद्युत्प्रेक्षणेन परिभवकारिणां वैरिणां वधस्य विधेयस्याकरणं महान् दोष इति द्योत्यते। दिव्यास्त्रैरर्जुनः शत्रुभिरजय्यः शत्रून् जेष्यतीति जनैः प्रतीयमानत्वं तस्यास्त्रैरवभास्यमानत्वं, तस्य कार्त्स्न्यं नञा निषिध्यते, स्वकाले अस्त्राणामनाविष्करणात्। न तु स्वरूपमेव, प्रयुक्तानामस्त्राणां प्रतिघातादर्शनात्। ननु विबुधविजयिनो विजयस्य खाण्डवदाहे सुव्यक्तमस्त्रसामर्थ्यमिति तत्कृते तस्य यशसि प्रसरति कथमस्त्रकृतो दीप्त्यतिशयो निषिध्यत इति तत्राह—यशःक्षयात् क्षीणजलार्णवाभ इति। खाण्डवदाहविक्रमस्य पृथग्जनैरदृष्टत्वात् तेषां तत्प्रतीतिः किंवदन्तीकृता न प्रत्यक्षकृतेति तादृशे परिभवे प्रकटे तस्य तद्यशो मनुष्यलोके क्षीयत इति लोकप्रतीतिमनुसृत्य यशःक्षयादित्युक्तं न वस्तुवृत्तमनुसृत्येत्यवगन्तव्यम्। जलनिधेरर्णवस्य जलक्षये यादृशमन्यथात्वं यशोनिधेस्तव यशःक्षये तादृशमित्यभिप्रायः। सन्दानितकमिदम् ॥ ४६ ॥

१. 'न्नः कृशप्र' ख. पाठः. २. 'थं मम ते' घ. पाठः.

परैः परिभूतस्त्वमन्यमाकारं प्राप्त इवेत्युक्तम् । पुनः परिहारे कृतेऽप्यपरिहार्यपरिवादास्पदस्य परिभवस्योपेक्षया तस्य वीर्यस्य विपर्यासं मन्यमाना याज्ञसेनी तदुत्तेजनाय न केवलमाकारान्यत्वं स्वरूपान्यत्वमपि त्वं प्राप्त इत्याह —

दुःशासनामर्शरजोविकीर्णैरेभिर्विनाथैरिव भाग्यनाथैः ।
केशैः कदर्थीकृतवीर्यसारः कच्चित् स एवासि धनञ्जयस्त्वम् ॥

दुःशासनेत्यादि । त्वं स धनञ्जय एवासि कच्चित् । स इत्यसाधारणैरात्मैकसमवायिभिः प्रशस्यतमैः क्रियागुणैर्विशिष्ट इत्यर्थः । धनञ्जय इति दिग्विजये दिव्यादिव्यं विशिष्टं धनं जितवान् सपत्नैर्जीयमानं स्वजनमिव स्वधनमुपेक्षितुमनर्ह इत्यर्थः । परिभवोपेक्षाकृतस्तस्य स्वरूपान्यत्वे संशय एवकारेण व्यज्यते । असि भवसीत्यर्थः । इदानीन्तनी तव पौरुषस्य सत्ता पश्चात्परिभवपरिहाराय पर्याप्नुयात् , न प्राक्तनी परिभवतिरोहितेति तात्पर्यार्थः । तस्य धनञ्जयभावस्तयेप्सितः पृच्छयते न क्षिप्यत एवेति कच्चिदित्यनेन द्योत्यते । 'कच्चिदिष्टपरिप्रश्न' इत्यमरः । तस्य धनञ्जयत्वसंशये हेतुमाह— केशैः कदर्थीकृतवीर्यसार इति । कुत्सितं वस्तु कदर्थः । 'कोः कत्तत्पुरुषेऽचि' (६. ३. १०१) इति कुशब्दस्य कदादेशः । वीर्यं पौरुषं, सारो बलं स्थैर्यं च । कदर्थीकृतं कुत्सितार्थीकृतं न्यक्कृतं वीर्यं सारश्च यस्य स कदर्थीकृतवीर्यसारः । प्रकृष्टचेतनैः सुरैरवार्ययोस्तव वीर्यसारयोरचेतनैः केशैः कदर्थीकरणमत्यन्तं शोच्यतामप्रत्यभिज्ञेयतां च करोतीति तात्पर्यार्थः । कथं केशैर्वीर्यसारौ कदर्थीकृताविति तत्राह — दुःशासनामर्शरजोविकीर्णैरिति । परिभवरूपः स्पर्श आमर्शः । दुःशासनस्यामर्श एव रजः दुःशासनामर्शरजः । केशानां विच्छायीकरणाद् दुःशासनामर्शो रजस्त्वेन रूपितः । तेन विकीर्णैः शिथिलैः । तदानीं तमनुचितकारिणं शासितुं तेषु कुरुषु युष्मासु वा कश्चिन्न शशाकेति दुःशासनशब्देन द्योत्यते । दुःशासनामर्शम्लानानां केशानां तदानीं केनचिदपि न रक्षा कृतेत्याह—भाग्यनाथैरिति । भाग्यमेव नाथो रक्षिता येषां ते भाग्यनाथाः, तैः । भाग्यबलेनैव मम केशास्तदानीं समूलं नोन्मूलिताः न युष्माकं बलेनेत्याभिप्रायः । मम केशानां भाग्यमेव शरणं नान्यः कश्चिदित्यत्र दृष्टान्तमाह — विनाथैरिवेति । विनाथा-



१. 'त्मीयस', २. 'प्रि', ३. 'ध', ४. 'ज' ख. ग. ङ.

नां जनानां यथा भाग्यमेव नाथः, सनाथत्वेन प्रथितानां मम केशानामपि त-थेत्यभिप्रायः। दुःशासनामर्शोपज्ञकमेकवेणीकृतानां केशानां क्लेशमभिनयेन दर्शयति— एभिरिति ॥ ४७ ॥

पूरुवंश(ज)स्य तव विशिष्टगुणास्पदं धनञ्जयत्वमेव न स्वक्रियान्वितं सर्वसाधारणं क्षत्रियत्वं तदुपलक्षणं कार्मुकाद्यायुधं च न स्वक्रियान्वितमि-त्याह —

**स क्षत्रियस्त्राणसहः सतां यस्तत् कार्मुकं कर्मसु यस्य शक्तिः।**
**वहन् द्वयीं यद्यफलेऽर्थजाते करोत्यसत्कारहतामिवोक्तिम् ॥**

स इत्यादि। यः सतां त्राणसहः स क्षत्रियः। यस्य कर्मसु शक्तिः तत् कार्मुकम्। सतां साधूनां त्राणे रक्षणे सहः शक्त इत्यर्थः। सदनुग्रहशक्तिः क्षत्रियलक्षणत्वेनोक्ता स्वाविनाभूताया असन्निग्रहशक्तेरपि क्षत्रियलक्षणतां ग-मयति। सत्राणशक्तिः क्षताजीवत्वादेः क्षत्रियशब्दशक्तिव्युत्पत्तिनिमित्तस्यार्थ-जातस्योपलक्षणम्। "क्षतत्राता क्षताजीवः क्षान्तः स्त्रीषु च साधुषु। क्षत्रिय" इति क्षत्रियशब्दो व्युत्पाद्यते। शक्तिरिति जातावेकवचनम्। कर्मसु इति शक्तिविषयाणां कर्मणां बहुत्वोक्त्या शक्तीनां बहुत्वं गम्यते। सत्राणादिषु कर्मसु कर्तृत्वशक्तयः क्षत्रियशब्दस्य व्युत्पत्तिनिमित्तं, तेष्वेव करणत्वशक्तयः कार्मुकशब्दस्येति क्षत्रियकर्तृकेषु कर्मसु कार्मुकस्य करणत्वानुगमोऽवगन्तव्यः। 'तस्मै प्रभवति—' (५. १. १०१) इत्याधिकृत्य 'कर्मण उकञ्' (५. १. १०३) इत्युकञ्प्रत्यये सति कार्मुकमिति रूपम्। ननु क्षत्रियजातिः कार्मुकजा-तिरित्यर्थद्वयं क्षत्रियकार्मुकशब्दयोर्वाच्यतया प्रवृत्तिनिमित्तमभ्यन्तरं क्षत-त्राणशक्त्यादयोऽर्थास्तु व्युत्पत्तिहेतवो बाह्या इति तत्राह — अर्थजाते अ-फलेऽपि द्वयीमुक्तिं वहन् असत्कारहतामिव करोतीति। क्षत्रियकार्मुकश-ब्दयोर्व्युत्पत्तिहेतुर्व्यङ्ग्योऽर्थसमूह इहार्थजातशब्देन विवक्ष्यते, न प्रवृत्ति-हेतुर्वाच्योऽर्थः। तद्विवक्षायां तु तस्यैकत्वादर्थ इति ब्रूयाद् नार्थजात इति। व्युत्पत्तिहेतोर्व्यङ्ग्यस्यार्थस्य नैकत्वनियमः सत्राणशक्त्यादौ शब्दव्युत्पत्ति-हेतावर्थजाते अर्थानां शब्दविषयाणां समूहे। अफलेऽपि सत्राणादिफलरहिते-

१. 'क्षत्रियवि' घ. पाठः. २. 'मनाव' ख पाठः. ३. 'मु। निकारेण त्वदीयानां गुणानामस्माकमेव शोच्यता संवृत्ता। ततस्त्वमेषामुभयेषामुज्जीवनं कुर्यादित्यभिप्रायः' ख. पाठः.।

ऽपि । द्वयीमुक्तिं, क्षत्रियः कार्मुकमिति द्वाभ्यामवयवाभ्यां युक्तां भणितिमन्वर्थं क्षत्रियशब्दं कार्मुकशब्दं च । वहन् नयन्, वक्तृपरम्पराभिः प्रथयन् । पुरुष इत्यर्थात् सिध्यति । असत्कारहतामिव असत्कारेणानादरेण हतामिव अर्थ-शून्यामिव करोतीत्यर्थः । उक्तेर्हतिरर्थशून्यत्वमेव । प्रवृत्तिनिमित्तयोः क्षत्रिय-त्वकार्मुकत्वयोरर्थयोर्विद्यमानत्वादसत्कारहतामिवेत्युक्तं न त्वसत्कारहतामि-त्येव । क्षत्रियस्यासाधारणं चिह्नं कार्मुकं, कार्मुकस्यासाधारणमधिकरणं क्षत्रिय इति द्वयोरर्थयोरन्योन्यापेक्षत्वात् तद्वाचकयोः शब्दयोरन्योन्यापेक्षत्वम-स्तीति द्योतयितुं द्वयीमुक्तिं वहन्नित्युक्तं न तु उभे उक्ती वहन्निति । द्वयीमुक्तिं वदन्निति केचित् पठन्ति । तदानीमपि पूर्वोक्त एवार्थः । स्वोचितक्रियागुणर-हिते क्षत्रियमात्रे कार्मुकमात्रे वा तत्प्रियचिकीर्षया यदि कश्चित् क्षत्रियशब्दं कार्मुकशब्दं वा प्रयुञ्जीत, तस्य तादृशीं द्वयीमुक्तिं धिग्वादेन जना निह्नुवीर-न्निति तात्पर्यार्थः ॥ ४८ ॥

तेषु वीर्यशौर्यादिषु गुणेषु सत्सु मयि क्षत्रियोक्तिर्धनञ्जयोक्तिश्च कथ-मसत्कारेण हन्येते इति शङ्कायामाह —

वीतौजसः सन्निधिमात्रशेषा भवत्कृतां भूतिमवेक्षमाणाः ।
सामान्यदुःखा इव नस्त्वदीयाः सरूपतां पार्थ! गुणा भजन्ते ॥

वीतौजस इत्यादि । त्वदीया गुणाः नः सरूपतां भजन्ते । नः अस्मा-कं त्वत्सुहृदाम् । सरूपतां समानरूपतां, साम्यमित्यर्थः । तवोद्यमे सति गु-णानां समुच्छ्रयः, अनुद्यमे तु न्यग्भाव इति भाविनः फलस्य कर्तृगामित्वं भजन्त इत्यात्मनेपदेन द्योत्यते । विशेषणैः सरूपतामुपपादयति । वीतं विगतं संवृतं वा ओजो येषां ते वीतौजसः । सन्निधिः समीपस्थितिः । सन्निधिमा-त्रेण शेषाः उपकारकाः, स्वयं संहर्तुमशक्ता इत्यर्थः । भवत्कृतां भवता कृतां निर्वर्तितां, खाण्डवदाहादिषु गुणानाविष्कुर्वतेत्यर्थात् सिध्यति । भूतिं संप-दम् । स्वीयामिति सामर्थ्येन लभ्यते । अवेक्षमाणाः अवधानेन पश्यन्तः, पूर्वमस्माकं सम्पदं कृतवानर्जुनः पश्चादपि करिष्यतीति प्रतियन्त इत्यर्थः । सामान्यं साधारणं दुःखं येषां ते सामान्यदुःखाः, त्वयि सुखिनि सुखिनो

दुःखिनि दुःखिनः, त्वयि मित्रत्वं गता इवेत्यर्थः । तपश्चर्याविशेषेण प्रसन्नान्महेन्द्रात् पृथया फल्गुनो जनित इति तस्य महिमोत्कर्षः पार्थेत्यामन्त्रणेन द्योत्यते । उपमानत्वेन विवक्षितेषु न इत्यस्मच्छब्दविषयेषु कृष्णायुधिष्ठिरादिषु च विशेषणानि विभक्तिविपरिणामेन योजनीयानि । रिपुनिकारेण त्वदीयानां गुणानामस्माकमिव शोच्यता संवृत्ता । ततस्त्वमेषामुभयेषामुज्जीवनं कुर्या इति तात्पर्यार्थः ॥ ४९ ॥

ननु सर्वेषामस्माकं साधारणोऽयं परिभवः, विशेषविमर्शने तु ज्यायसो महाराजस्य । तत् किं मयि विशेषेणारोप्यत इति शङ्कायामाह—

**आक्षिप्यमाणं रिपुभिः प्रमादान्नागैरिवालूनसटं मृगेन्द्रम् ।**
**त्वां धूरियं योग्यतयाधिरूढा दीप्ता दिनश्रीरिव घर्मरश्मिम् ॥**

आक्षिप्यमाणमित्यादि । इयं धूः त्वामधिरूढा । बहुव्यापारानुबद्धो गुरुतरत्वादनेकधार्यः कार्यभारो धूःशब्देन विवक्ष्यते । इयमिति ईदृशव्यसननिरसनायास्माभिरिदानीमारभ्यमाणेत्यर्थः । अयमेव मां वोढुं शक्नुयादिति निश्चित्य स्वयमेवारूढा, न केनचिदारोपितेत्यर्थः । तत्र हेतुमाह— योग्यतयेति । ईदृशीं धुरं वोढुं त्वमेव योग्यः, तस्मादित्यर्थः । दीप्तेति । तेजःप्रधानमार्दवान्वितेत्यर्थः । रिपुभिः परिभूयमानोऽहं कथं रिपुपरिभवफलां धुरं वोढुं शक्नुयामिति तत्राह— प्रमादाद् रिपुभिराक्षिप्यमाणमिति । प्रमादाद् द्विषच्छद्मविवेकानवधानादित्यर्थः । आक्षिप्यमाणमभिमुखं निरस्यमानं, परिभूयमानमित्यर्थः । अप्रमादिनस्तव सपत्नैः स्वबलेन कृतः परिभवो दौर्बल्यमावहति नतुच्छलेन प्रमादिन इत्यभिप्रायः । रिपुकृतस्तव परिभवो न संभवतीति द्योतयितुं दृष्टान्तमाह— नागैरालूनसटं मृगेन्द्रमिव । नागैः गजैः, आलूनसटम् अभिमुखच्छिन्नकेसरं मृगेन्द्रं सिंहम् । सिंहाधिष्ठिते वने सिंहभयेनैव मृगानपि बाधितुं नागा न शक्नुयुः । किं पुनः सिंहमिति मृगेन्द्रशब्देन द्योत्यते । साहसिकत्वादज्ञातभयाः शलभवृत्तिमाश्रिताः केचिद् गजा यदि कदाचित् प्रसुप्तस्य प्रमत्तस्य वा मृगेन्द्रस्य सटाच्छेदनं कुर्युः, तत् पुनः प्रबुद्धे केसरिणि करिणां निःशेषनाशाय यथा भवेत्, तथैव तादृशैः सपत्नैः कृतस्तव

१. 'तव मि' ध. पाठः

परिभवः तेषां निःशेषनाशाय भवेदिति द्योतयितुमसंभावितोपमोपन्यासः । अस्यां धुरि त्वमेव योग्यो नान्य इत्यत्र दृष्टान्तमाह — दिनश्रीर्घर्मरश्मिमिवेति । दीप्तेत्यनुषज्यते । दीप्त्येति केचित् पठन्ति । तत्पक्षे दिनश्रियो घर्मरश्म्यधिरोहणे दीप्तिर्हेतुरित्यर्थः । दिनश्रीशब्देन दिनप्रभासमष्टिर्विवक्ष्यते । यथा लोकयात्राहेतुं विततप्रकाशरूपां दिनश्रियं वोढुं समयाभिव्यक्तमार्दवतीव्रभानुः प्रतापनिधिर्भास्वानेव शक्तः, न मार्दवैकप्रकृतिश्चन्द्रः नापि तीव्रैकप्रकृतिर्दहनः । तथैव तादृशीमिमां धुरं वोढुं तादृशस्त्वमेव शक्तः नायमजातशत्रुः नायं वृकोदर इति च दृष्टान्तबलेन द्योत्यते ॥ ५० ॥

पूर्वमेव मया दिग्विजयादिभिरनन्यसामान्यसंभावना लब्धा, तस्मादियं धूर्मय्येव किमारोप्यत इति शङ्कायामाह —

**करोति यः शेषजनातिरिक्तां संभावनामर्थवतीं क्रियाभिः ।**
**संसत्सु जाते पुरुषाधिकारे न पूरणी तं समुपैति संख्या ॥**

करोतीत्यादि । तं पूरणी संख्या न समुपैति । तीयादिपूरणीप्रत्ययान्तो द्व्यादिः संख्याशब्दः पूरणी, संख्या, पूर्यतेऽनया संख्यासमुदाय इति करणे ल्युट्प्रत्ययः । तं न समुपैति न प्राप्नोति, नाभिदधातीत्यर्थः । शब्दस्यार्थप्राप्तिरर्थाभिधानमेव । स पुरुषः प्रथम एवोच्यते न द्वितीयस्तृतीयो वेति तात्पर्यार्थः । संसत्सु सभासु । पुरुषाधिकारे जाते वीर्यशौर्यादिगुणान्वितानां पुरुषाणां प्रस्तावे सतीत्यर्थः । तमिति तच्छब्देन परामृष्टस्य पुरुषस्याकाङ्क्षितं विशेषमाविष्करोति — यः शेषजनातिरिक्तां सम्भावनां क्रियाभिरर्थवतीं करोतीति । उपयुक्तादन्यः शेषः, शेषो जनः शेषजनः, प्रशस्यैः क्रियागुणैरुपयुक्तादात्मनोऽन्यस्माज्जनादतिरिक्तामधिकां स्वान्यजनसम्भावनातिशायिनीमनन्यसामान्यां सम्भावनां संमतिम्, आत्मन इत्यर्थात् सिध्यति । क्रियाभिः कर्मभिः अर्थवतीं प्रशस्तफलामित्यर्थः । महीयसः पुरुषस्य यशस्यैः कर्मभिरलंप्रत्ययो न युक्त इति करोतीति लट्प्रत्ययेन द्योत्यते । असाधारणैः क्रियागुणैः कृतामन्यदुर्लभां स्वकीर्त्तिमभिरक्षितुं सततमुद्यतो भवेति तात्पर्यार्थः ॥ ५१ ॥

---

१. 'व्रप्रभावः प्रभावनि' घ. पाठः. २. 'न तीं' ख. पाठः. ३ 'क्रि' ख. पाठः. ४. 'णीयत्र', ५. 'ट्दप', ६. 'स्व का', ७. 'तवि', ८. 'गुणैः पुरुषयु' घ. पाठः.

इत्थमर्जुनस्योत्साहस्थैर्यमुद्भाव्य स्वजनवियुक्तस्य तपोर्थं गतस्य तस्य स्वजनसम्भाव्यमानानि दुःखान्याशिषा निवर्तयति —

**प्रियेषु यैः पार्थ! विनोपपत्तेर्विचिन्त्यमानैः क्लममेति चेतः।**
**तव प्रयातस्य जयाय तेषां क्रियादघानां मघवान् विघातम् ॥**

प्रियेष्वित्यादि। हे पार्थ! मघवांस्तेषां तवाघानां विघातं क्रियात्। पार्थेत्यामन्त्रणेन फल्गुनस्य भाग्यातिशयो धैर्यविशेषश्च व्यज्यते। पुण्यक्रियाधिष्ठातृत्वं द्योतयता मघवच्छब्देन महेन्द्रस्य पुण्यकृदनुग्रहशीलता प्रकाश्यते। अघानां दुःखानां तन्मूलानां व्यसनानां वा विघातं विशिष्टं हननं क्रियात् कुरुतात्। यथा पुनरघानि नोद्भवेयुः, तथा तानि वध्यादित्यर्थः। जयाय प्रयातस्येति तादर्थ्ये चतुर्थी। जयमुद्दिश्य सुरपतिं प्रसादयितुं तदभिमतदेशे तपश्चरितुं प्रस्थितस्य तवेप्सितं जयं स तु सुरपतिः स्वयमेव दास्यतीति तव जयो नाशास्य इत्यभिप्रायः। कीदृशानामघानामिति तत्राह — उपपत्तेर्विना प्रियेषु विचिन्त्यमानैर्यैश्चेतः क्लममेतीति। प्रियेष्विति विषयसप्तमी। प्रियविषयतया विविधं चिन्त्यमानैरित्यर्थः। सुहृदामित्यर्थात् सिध्यति। उपपत्तेर्विनेति। अस्यां दशायामनेन निमित्तेनास्येदृशान्यघानि न सम्भवन्तीत्येवमादिकां युक्तिमन्तरेणेत्यर्थः। असम्भावितान्यघानि कथं शङ्केरन्निति शङ्का प्रियेष्वित्यनेन निरस्यते। असम्भावितमप्यनिष्टं प्रियेषु शङ्क्यते यत्, स तु स्नेहस्वभावो न पर्यनुयोज्य इति तात्पर्यार्थः। एतदुक्तं भवति — दूरं गते त्वयि यान्यस्माभिराशङ्क्येरन्, त्वया चास्मासु, यानि च विचिन्त्यमानान्यस्माकं तव च मनोऽवसादयेयुस्तानि दुःखानि व्यसनानि च विश्वसाक्षी सहस्राक्षः समुन्मूलयत्विति ॥ ५२ ॥

महानुभावा याज्ञसेनी दैवैकनिवर्त्यानां व्यसनानां निवर्तनायैवमाशिषं प्रयुज्य पुनर्महामतिः पौरुषनिवर्त्यानां तेषां निवर्तनाय प्रमादस्य परिहर्तव्यतामाह —

१ 'व दिक्षु यु', २. 'स्थानि' घ. पाठः. ३. 'क्ष्येते च', ४. 'निचि' ख. पाठः.

मा गाश्चिरायैकचरः प्रमादं वसन्नसम्बाधशिवेऽपि देशे ।
मात्सर्यरागोपहतात्मनां हि स्खलन्ति साधुष्वपि मानसानि ॥

मागा इत्यादि । चिराय प्रमादं मा गाः । दीर्घकालं सततं प्रमादं परिहरेः । न कतिपयदिनमात्रमित्यर्थः । एकचर इति[2] । 'पूर्वकाल—' (२.१.४९) इत्यादिना समानाधिकरणसमासः[3] । असहाय एकः । चरणशीलश्चरः । 'चरेष्टः' (३. २. १६) इति टप्रत्ययः । असहायस्य स्वबुद्ध्यैव प्रमादस्य परिहार्यत्वादधिकमवधानापेक्षास्तीत्येकशब्देन द्योत्यते । अपरिचिते मार्गे चरता तत्र तत्र[4] शत्रुमित्राद्यवगमाक्षमेण विशेषेण दुष्परिहरः प्रमाद इति चरशब्देन[5] सूच्यते । छिद्रैषिणां द्विषतामविगणनमिह प्रमादशब्देन विवक्ष्यते । असज्जनाकीर्णदेशे वसतः प्रमाद्यतोऽनर्थो भवति, शान्तजनजुष्टे देशे वसतस्तु किं प्रमादेन दौस्थ्यमिति तत्राह — असंबाधशिवे देशे वसन्नपीति । दुर्जनसंमर्दः सङ्घर्षहेतुको बाधो[6] वा सम्बाधः । तदभावोऽसम्बाधः । तेन शिवे शान्तविकार इत्यर्थः । गृहस्य वनस्य वा देशैकदेशस्य[7] न शिवत्वं किन्तु समस्तस्यैव देशस्येति देशशब्देन द्योत्यते । निवासस्य क्षेमङ्करत्वमवगम्यैव सर्वो जनस्तत्र वसति । तस्माद् गच्छत इव वसतो न प्रमादप्राप्तिरिति[8] वसन्नित्यनेन द्योत्यते । प्रमादस्य[9] प्रमादभवस्य व्यसनस्य चासंभावनामपिशब्दो द्योतयति[10] । शान्तजनाश्रयोऽयं देशः । तस्मादत्र हिंस्राणां न प्राप्तिरिति त्वया प्रमादिना न भवितव्यमित्यभिप्रायः । हिंस्राणां प्राप्तौ सत्यामप्यनपकारिणस्तपस्यतो मे कुतो भयं, येन प्रमादपरिहारो[11] विधीयत इत्याशङ्क्याह — मात्सर्यरागोपहतात्मनां मनांसि साधुष्वपि स्खलन्ति हीति[12] । मत्सर एव मात्सर्यं, चातुर्वर्ण्यादिवत् स्वार्थिकः ष्यञ्प्रत्ययः । परोन्नत्यसहनं मात्सर्यं, स्वोन्नतिगृध्नुता[13] राग इह[14] विवक्षितः । मात्सर्यरागाभ्यामुपहतः दूषितः आत्मा अन्तःकरणमर्थिर्येषां ते तथोक्ताः, तेषाम् । अथवा मात्सर्येण रूषणं मात्स-

---

१. 'नादिमा' ख. पाठः. २. 'ति । एक एव चर इति स', ३. 'सः पूर्वकालेत्यादिना । अ' घ. पाठः. ४. 'तंत्र' ख. पाठः. ५. 'देन' क. ख. पाठः. ६. 'वधो वा', ७. 'स्य शि', ८. 'दप्रभ' ख. पाठः. ९. 'वा' घ. पाठः. १०. ति । सुशा' घ. पाठः. ११. 'दे प' ख. पाठः. १२. 'हि । म' घ. पाठः. १३. 'तानुरा', १४. 'इ तु वि' ख. पाठः.

र्यरागः । साधुषु अदुष्टेषु, सदाचारपरेष्वित्यर्थः । स्खलन्तीति समुचित-वृत्तिव्यासङ्गे[1] सति विपर्ययेण वर्तन्ते, द्रुह्यन्तीत्यर्थः । मनांसि[3] मानसानि । मानसस्खलनेन[2] तत्कृते वाक्कायस्खलने सूचिते । एवं वाक्यशक्त्या द्रुह्यतो मूकासुरस्य भावी फल्गुनं प्रत्यभियोगो विभाव्यते ॥ ५२ ॥

एवमर्जुनस्योत्साहममर्षं चोद्दीप्य विजयप्रयोजनपर्यवसायि वाक्यमुप-संहरति—

**तदाशु कुर्वन् वचनं महर्षेर्मनोरथान् नः सफलीकुरुष्व ।**
**प्रत्यागतं त्वास्मि कृतार्थमेव स्तनोपपीडं परिरब्धुकामा ॥**

तदेत्यादि । तदाशु नः मनोरथान् सफलीकुरुष्व । तदिति । ईदृशं व्यसनं निरसितुं त्वमेव समर्थो यत् तत इत्यर्थः । आश्वित्यनेनात्मनः परि-भवदुःखासहिष्णुता द्योत्यते । नः अस्माकं, मम युधिष्ठिरादीनां पाण्डवानां यदुपाञ्चालादीनां सुहृदां चेत्यर्थः । मनोरथान् मनःसञ्चारहेतुकामानित्यर्थः । सफलीकुरुष्व इदम्प्रथमं सफलान् कुरुष्वेत्यर्थः । आत्मनः कीर्त्तिपौरुष-प्रथनायेत्यात्मनेपदेन द्योत्यते । मनोरथसफलीकरणे हेतुमाह — महर्षेर्वचनं कुर्वन्निति । तदुक्तक्रियानुष्ठानं महर्षिवचनकरणं, महर्षिणा विहितां महे-न्द्राराधनफलां तपस्यामनुतिष्ठन्नित्यर्थः । आत्मनस्तावदेकं मनोरथमाह — कृतार्थमेव प्रत्यागतं त्वा स्तनोपपीडं परिरब्धुकामास्मीति । कृतार्थं कृत-कृत्यं, समवाप्तदिव्यास्त्रग्राममित्यर्थः । एवकारेण कृतार्थताहेतोर्दिव्यास्त्रसङ्ग-हस्यावश्यकत्वं द्योत्यते । प्रत्यागतं प्रतीतमागतम् । स्तनोपपीडं स्तनाभ्यां भृशं पीडयित्वेत्यर्थः । 'सप्तम्यां चोपपीडरुधकर्षः' (३. ४. ४९) इति तृतीयान्त उपपदे क्त्वार्थे णमुल्प्रत्ययः । परिरब्धुमालिङ्गितुं काम इच्छा यस्याः सा परिरब्धुकामा । 'तुंकाममनसोरि'ति तुमुनो मकारलोपः । अस्मी-त्यव्ययमहमित्यस्यार्थे वर्तते । कृतार्थमेवमिति केचित् पठन्ति । तदानीमेवं परिरब्धुकामास्मीत्यन्वयः । प्रवासकालोचितं तत्परिरम्भं कृतवत्या एतद् वचनम् । तेन प्रवासपरिरम्भेणागमनपरिरम्भस्य साम्यं गम्यते । प्रवासागमना-लिङ्गनयोर्गाढानुरागगमकत्वादन्योन्यसाम्यमुचितम् । एवमुचितज्ञेन महाक-

१. 'खि मानधस्ख', ३. 'ने प्र' [illegible] घ. पाठः.

विना वीरपत्न्यां याज्ञसेन्यामनुस्यूतो वीररसः प्रेयसस्तस्यार्जुनस्य वियोग-समये शृङ्गाररूपेण परिणतिं नीतः ॥ ५४ ॥

**उदीरितां तामिति याज्ञसेन्या नवीकृतोद्ग्राहितविप्रकाराम् ।**
**आसाद्य वाचं स भृशं दिदीपे काष्ठामुदीचीमिव तिग्मरश्मिः ॥**

उदीरितामित्यादि । इति याज्ञसेन्या उदीरितां वाचमासाद्य सः भृशं दिदीपे । याज्ञसेनीशब्देन तेजस्विता द्योत्यते । इति उदीरिताम् अनेन प्रकारेणोक्ताम् । उक्तस्य प्रकारस्य इतिशब्देनाभिनयः तेजोदीपनानां 'केशैः कदर्थीकृतवीर्यसार' इत्यादीनां सर्वेषां वाक्यानामनुसन्धानं ध्वनयति । तामिति । या पूर्वं युधिष्ठिरस्य मन्युव्यवसायावदीपयत्, तां, तदानीं तथैव स्वमन्युदीपनीमित्यर्थः । अथवा उदीरितान्तामित्येकं पदम् । उदीरितः अन्तः पर्यवसानं तात्पर्यार्थः यया सा उदीरितान्ता, ताम् । नवीकृतोद्ग्राहितविप्रकारामिति । उदित्युपसर्गः साहसे वर्तते । नवीकृतस्तदानीमनुभूयमान इव कृतः सपत्नैः साहसेन उद्ग्राहितः विप्रकारः परिभवः केशग्रहणादिर्यया सा नवीकृतोद्ग्राहितविप्रकारा, ताम् । आसाद्य अभिमुखं प्राप्य, स्वविषयत्वेन गृहीत्वेत्यर्थः । सः अर्जुनः । भृशं दिदीपे अतिस्फुटतेजा बभूवेत्यर्थः । उक्तमर्थं दृष्टान्तेनोज्ज्वलयति — उदीचीं काष्ठां तिग्मरश्मिरिवेति । आसाद्येत्यनुषज्यते । उदीचीं काष्ठामुत्तरां दिशमित्यर्थः । घनतुहिननिरुद्धरश्मितया मृदूभवन्नुष्णरश्मिरुत्तरां दिशमेत्य स्फुटप्रतापप्रकाशशक्तिरिति यथा भृशं दीप्यते, तथैवार्जुनः पूर्वं ज्ञातिहार्देन मुनिजनसंवासेन च समन्वितसौम्यभावस्तदानीमनुस्मारितपरिभवां मन्युव्यवसायदीपनीं द्रौपदीगिरमाकर्ण्य समुन्मिषदमर्षरोषरूषितो विश्वाभ्युदयाय भृशं दिदीपे इति तात्पर्यार्थः ॥ ५५ ॥

**अथाभिपश्यन्निव विद्विषः पुरः पुरोधसारोपितहेतिसंहतिः ।**
**बभार रम्योऽपि वपुः स भीषणं गतः क्रियां मन्त्र इवाभि-**
**[चारिकीम् ॥ ५६ ॥**

अथेत्यादि । अथ स भीषणं वपुर्बभार । अथेति रोषकृताया मनोदीप्तेरनन्तरमित्यर्थः । भीषणमिति भयहेतुकैः क्रियागुणैर्भयजनकेनाकारमात्रेणे-

१. 'मवद्ध', २. 'नव्यरणकर्मा' प पाठः।

त्यर्थः । 'भियो हेतुभये षुक्' (७. ३. ४०) इति षुगागमः । रोषभीषणत्व-योगकृतं वपुषो गौरवविशेषं व्यञ्जयितुं भीषणं वपुर्बभारेत्युक्तं न भीषणाकृति-र्बभूवेति । विद्विषः पुरोऽभिपश्यन्निवेति । शत्रून् पुरस्तादव्यवधानेन ईक्षमाण इवेत्यर्थः । अनेन विशेषणेन रोषप्रकर्षः प्रकाश्यते । शत्रूणां प्रत्यक्षदर्शने हि तदपराधानुस्मरणेन तज्जिघांसासमुन्मेषेण[1] च रोषः परां काष्ठामधिरोहति । इवशब्देन तस्य वशित्वं व्यज्यते । पुरोधसारोपितहेतिसंहतिरिति । पुरोधसा पुरोहितेन धौम्येन आरोपिता उपरि निवेशिता हेतिसंहतिः आयुधसमूहः यस्य स तथोक्तः । अनेन जैत्रमन्त्रजपादिभिस्तस्यायुधशक्तिसमुत्तेजनं द्योत्यते । तस्य रम्यत्वं नैसर्गिकं, भीषणत्वं त्वौपाधिकमसंभाव्यं[2] चेत्याह — रम्योऽपीति । रम्यत्वभीषणत्वयोरेकत्र समावेशे दृष्टान्तमाह — आभिचारिकीं क्रियां गतो मन्त्र इवेति । आत्मस्वरूपमननसाधनं, मन्तृत्राणशक्तिरित्यादयोऽर्था मन्त्र-शब्दस्य व्युत्पत्तिहेतवः । प्रवृत्तिहेतुरर्थो वैदिकी तान्त्रिकी वा शब्दविशेषजातिः । विश्वाभ्युदयहेतोः फल्गुनस्योपमानप्रदानायोपन्यस्तोऽयं मन्त्रशब्दो महीयसि सावित्रादौ मन्त्रविशेषे विश्राम्यति । जपहोमादिसाधना रिपुहिंसार्था प्रवृत्ति-रभिचारः । आभिचारिकीम् अभिचारसम्बन्धिनीं क्रियां जपहोमादिकां गतः प्राप्तः । क्रियायां मन्त्रस्योच्चारणस्मरणानुगतिः क्रियाप्राप्तिः । उपमानेऽपि विशेषणद्वयं योजनीयम् । विद्विषां पुरोऽभिदर्शनं मन्त्रे समारोप्य उत्प्रेक्षितम् । तेनाभिचारविषयाणां विद्विषां विनाशस्यैकान्तिकत्वं द्योत्यते । अभिचारकर्मणि प्रयुक्ते मन्त्रे तत्क्रियाकर्त्रा पुरोहितेन शरादीन्यायुधानि यथास्थानं निवे-श्यन्त इति तद्विदो वदन्ति । तदेतदाह — पुरोधसारोपितहेतिसंहतिरिति । सावित्रादेर्मन्त्रस्य नैसर्गिकं रम्यत्वम् । भीषणत्वं त्वागन्तुकमेवेति प्रसिद्धमेव ॥

एवं काष्ठाधिरूढरोषोऽप्यर्जुनः तदानीमेव द्विषामभियोगाय नोद्यतः, किन्तु विजयफलां तपस्यां चरितुं तदुचितमिन्द्रकीलशैलं प्रति प्रतस्थे । स तु प्रतिष्ठमानः स्वगुणनिम्नीकृतानां तपोधनानां मनो जहारि[3]त्याह — श्लोकत्रयेण अविलङ्घ्येत्यादिना ।

**अविलङ्घ्यविकर्षणं परैः प्रथितज्यारवकर्म कार्मुकम् ।**
**अगतावरिदृष्टिगोचरं शितनिस्त्रिंशयुजौ महेषुधी ॥ ५७ ॥**

---

१. 'समर्पणेन च', २. 'त्वौपा' घ. पाठः ३. 'जह' ख. पाठः.

यशसेव तिरोदधन्मुहुर्महसा गोत्रभिदायुधक्षतीः ।
कवचं च सरत्नमुद्वहन् ज्वलितज्योतिरिवान्तरं दिवः ॥ ५८ ॥
अलकाधिपभृत्यदर्शितं शिवमुर्वीधरवर्त्म सम्प्रयान् ।
हृदयानि समाविवेश स क्षणमुद्बाष्पदृशां तपोभृताम् ॥ ५९ ॥

अविलङ्घ्येत्यादि । तृतीयश्लोके वाक्यं परिसमाप्यते । उर्वीधरवर्त्म संप्रयान् सः तपोभृतां हृदयानि समाविवेश । उर्वीधरस्य पर्वतस्य मुनीन्द्रेण तपःस्थानत्वेनाभिमतस्येन्द्रकीलस्येति भारतप्रसिद्ध्या प्रतीयते । वर्त्म मार्गम् । संप्रयान् सम्यग् गन्तुं प्रक्रममाणः । मुनीन्द्रगुरुसोदरादिषु गौरवस्नेहमयानि गमनसमयोचितानि कर्माणि कुर्वाण इत्यर्थः । कीदृशमुर्वीधरवर्त्म, शिवं मङ्गलम् । असुरराक्षसादिभिर्दुष्टैरस्पृष्टमित्यर्थः । अलकाधिपस्य वैश्रवणस्य भृत्येन तेन यक्षेण दर्शितम् । अयं मार्गः, इतो गम्यतामिति निर्दिष्टमित्यर्थः । अलकाधिपशब्देन फल्गुनगन्तव्यस्य तस्य शैलस्य कैलाससन्निकर्षो ध्वन्यते । तपोभृतामिति निर्ममाणामिति लभ्यते, तप एव ये तात्पर्येण बिभ्रति न शरीरादि ते तपोभृत इति । कीदृशानां तपोभृतां क्षणमुद्बाष्पदृशाम् क्षणमित्यव्ययं चिरंशब्दार्थविपरीतेऽर्थे वर्तते । अथवा 'कालाध्वनोरत्यन्तसंयोगे' (२. ३. ५) इति क्षणशब्दाद् द्वितीया । उद्गतबाष्पा दृशो येषां ते उद्बाष्पदृशः, तेषाम् । 'प्रादिभ्य' इत्यादिना बहुव्रीहिः । फल्गुनप्रवासदुःखकृतो बाष्पोद्गमः सद्य एव तैर्महर्षिभिर्धैर्येण फल्गुनदिदृक्षया च स्तम्भित इति क्षणशब्देन द्योत्यते । हृदयानि अन्तःकरणानि । समाविवेश सममभिमुखं विशति स्म । गुणप्रकर्षकृतस्तस्य तेषां हृदयेषु समावेशः न संस्तवादिसम्बन्धकृत इति द्योतयितुं तपोभृतामित्युक्तं न वनौकसामिति । कीदृशः सः, कार्मुकमुद्वहन् । परैरविलङ्घ्यविकर्षणं परैरन्यैः स्वव्यतिरिक्तैः अविलङ्घ्यविकर्षणम् अप्राप्यविकर्षणम् । 'अघि रघि लघि गत्यर्थाः' इति पठ्यते । विकष्टुमशक्यमित्यर्थः । तोलननमनगुणारोपणादीनामुपलक्षणं विकर्षणम् । अनेन विशेषणेन शार्ङ्गादीनां शार्ङ्गादिवदात्मनोऽसाधारणं धनुरिति ध्वन्यते । प्रथितः प्रसिद्धः आख्यातो

---

१. 'त्यर्थः । वि', २. 'क्षम' घ. पाठः.

ज्यारवो मौर्वीध्वनिः कर्म च यस्य तत् प्रथितज्यारवकर्म । खाण्डवदाहादिषु देवादीनां विजयः कार्मुकस्य कर्म । शरमोक्षणमन्तरेण मौर्वीध्वनिनैव प्रतिवीराणां मूर्छामरणादिजन्म व्यञ्जयितुं ज्यारवः पृथगुक्तः । महेषुधी इति । चेति चोद्वहन्निति चानुषज्यते । महान्तौ इषुधी महेषुधी । अक्षयेषुत्वमिह महत्त्वं विवक्षितम् । अरिदृष्टिगोचरमगतौ अरिदृष्टीनां गोचरं विषयम् अगतौ अप्राप्तौ । कदाचिदपि रिपुभिर्न दृष्टावित्यर्थः । पृष्ठगतयोर्निषङ्गयोररिदृष्टचगोचरत्वेन तस्य समरेष्वपराङ्मुखत्वमपराजयश्च सूच्यते । शितनिस्त्रिंशयुजाविति शितेन तीक्ष्णेन निस्त्रिंशेन खड्गेन युक्तावित्यर्थः । तस्य गाण्डीविनः शरप्रयोगस्य प्राधान्येन निस्त्रिंश उपसर्जनत्वेनोक्तः ॥

यशसेत्यादि । फल्गुनस्य सपत्नाभिभवसाधनसामग्री विशेषणद्वयेनोक्ता । शस्त्राभेद्यतया तस्य सपत्नैरनभिभाव्यतां विभावयितुं विशेषणान्तरमाह — कवचं चोद्वहन्निति । कीदृशं कवचं गोत्रभिदायुधक्षतीः महसा मुहुस्तिरोदधत् । गोत्रभिदिन्द्रः तस्यायुधं वज्रादि तत्सम्बन्धिनीः तत्कृताः क्षतीः क्षतिस्थानानि । महसा तेजसा । मुहुः अनेकवारं भृशं वा । तिरोदधत् तिरस्कुर्वन् । खाण्डवरक्षणसंरब्धः सहस्राक्षः खाण्डवं दाहयतोऽर्जुनस्य सर्वेष्वङ्गेषु सर्वाण्यायुधानि पुनः पुनः प्रयुक्तवानिति आयुधशब्देन क्षतीरिति बहुवचनेन च द्योत्यते । यशसेवेति । शैलादिभेदकानि शक्रस्यायुधानि फल्गुनस्य कवचे मोघीभूतानीति आश्चर्यमस्य स्थैर्यं सामर्थ्यं वेत्येवंरूपया कीर्त्येवेत्यर्थः । शक्रायुधक्षतीनां जनबुद्ध्यनारोहो यशसा तिरोधानम् । फल्गुनयशसो व्याप्ततया तेन शक्रायुधक्षतीनां तिरोधानं सर्वजनप्रसिद्धमेवेति यशस उपमानत्वमुक्तम् । कवचस्य महस्वितायां हेतुतया विशेषणान्तरमाह — सरत्नमिति । रत्नैः सहितं, नित्यसमवेतमित्यर्थः । दिव्यस्य कवचस्य तेजस्सम्बन्धिनित्यतां शस्त्राभेद्यतां च द्रढयितुं दृष्टान्तमाह — ज्वलितज्योतिर्दिवोऽन्तरमिवेति । दीप्तनक्षत्रमाकाशस्यावकाशमिवेत्यर्थः । प्रत्युप्तरत्नस्य कालायसमयस्य कवचस्य दीप्तनक्षत्रः कृष्णवर्णो गगनैकदेश उपमानत्वेनोक्तः । तेन समस्तभुवनव्याप्तवैभवो महाकाशः फल्गुनस्योपमानतया द्योतित इत्ययं तात्पर्यार्थः

१. 'कृ' ख. पाठः.

शब्दार्थगतिज्ञैरवगन्तव्यः । अन्वयक्रमेण प्रथमप्राप्त्या तृतीयश्लोकस्य व्याख्यानं प्रथमं कृतम् । त्रिभिः श्लोकैर्वाक्यसमाप्त्या विशेषकाख्योऽयं श्लोकसमूहः ॥ ५७, ५८, ५९ ॥

अनुजगुरथ दिव्यं दुन्दुभिह्रादमाशाः
सुरकुसुमनिपातैर्व्योम्नि लक्ष्मीर्वितेने ।
प्रियमिव कथयिष्यन्नालिलिङ्ग स्फुरन्तीं
भुवमनिभृतवेलावीचिबाहुः पयोधिः ॥ ६० ॥

अनुजगुरित्यादि । अथ आशाः दिव्यं दुन्दुभिह्रादमनुजगुः । तपस्यार्थे विजयस्य गमनप्रारम्भः उक्तः । तस्यानन्तर्यमथशब्दो द्योतयति । आशा दिशः । दिव्यं दिवि भवं दुन्दुभिह्रादं दुन्दुभीनां ध्वनिमनुजगुः अनुदध्वनुः, प्रतिशब्देनावर्धयन्नित्यर्थः । सुराणामसाधारणानि पारिजातादीनां कल्पकवृक्षाणां पुष्पाणि सुरकुसुमानि, तेषां निपातैर्निबिडैर्निरन्तरैः पतनैः । नभसि लक्ष्मीः शोभा । वितेने विशेषेण चक्रे । सुरकार्यार्थं प्रस्थितस्य सुरेन्द्रसुतस्य मङ्गलार्थं सुरेन्द्रचोदितैर्दिव्यजनैर्दुन्दुभिप्रमुखानि वाद्यानि तथा समाहतानि, यथा सर्वेषु दिगन्तेषु तेषां प्रतिध्वनिर्मुमूर्छे । तैरेव तथा कल्पवृक्षाणां पुष्पाणि ववृषिरे । यथा ग्रहनक्षत्रकीर्णे[1] विस्तीर्णे व्योम्नि तैस्तदानीं विशिष्टा शोभा कृतेति तात्पर्यार्थः । पूर्वार्धेन[2] तपस्यार्थं प्रस्थितस्य फल्गुनस्य मनोरथसिद्धिसूचकं मङ्गलमुक्तं, तन्मनोरथसिद्धिर्भूभारावतारहेतुरित्युत्तरार्धेन द्योतयति—पयोधिः भुवम् आलिलिङ्ग आश्लिष्यति स्म । कीदृशीं भुवम् । स्फुरन्तीं कम्पमानाम् । कीदृशः पयोधिः । अनिभृतवेलावीचिबाहुः । निभृताः स्तिमिताः तद्विपरीता अनिभृताः चपलाः । समुद्रजलवृद्धिर्वेला । (अत्र) तटस्थानं वेलाशब्देनोच्यते । वेलासम्बद्धा वीचयो वेलावीचयः । अनिभृता वेलावीचय एव बाहवो यस्य सः अनिभृतवेलावीचिबाहुः । प्रियं कथयिष्यन्निव । दैत्यभारार्तायास्तव भारमवतारयितुमयं फल्गुनः प्रक्रान्त इति प्रियं कथयितुमुद्युक्त इवेत्यर्थः । भूभारावतारणार्था फल्गुनस्य तपस्यादिप्रवृत्तिस्तया च भूभारः

---

१. 'नां पु' २. 'र्धे न' क ख.

क्रमेणावतारित इति भारते प्रसिद्धत्वात् प्रियसामान्यमुक्तं, न भारावतारणोद्यमादिरूपः प्रियविशेषः । पयोधेरनिभृतवीचिबाहुत्वं प्रियकथनोद्यमोत्प्रेक्षानिमित्तम् । चलवीचिबाहोः पयोधेरालिङ्गनारोपस्तदालिङ्ग्यमानाया भुवो वेपथुश्च तयोरनुरक्तनायकसाम्यं गमयति । पार्थप्रस्थानसमकालं समुद्रजलोच्चलनं भूकम्पनं च भाविनं भूभारावतारं सूचयाम्बभूवेति तात्पर्यार्थः ॥ ६० ॥

इति चित्रभानुकृतौ शब्दार्थदीपिकायां
किरातार्जुनीयव्याख्यायां तृतीयः सर्गः ।

---

शुभं भूयात् ।

# परिशिष्टम् ।

द्वितीयसर्गे अनुपलब्धव्याख्याना: श्लोकाः ।

१. किमपेक्ष्य फलं पयोधरान् ध्वनतः प्रार्थयते मृगाधिपः ।
प्रकृतिः खलु सा महीयसः सहते नान्यसमुन्नतिं यया ॥

२. कुरु तन्मतिमेव विक्रमे नृप! निर्धूय तमः प्रमादजम् ।
ध्रुवमेतदवेहि विद्विषां त्वदनुत्साहहता विपत्तयः ॥

३. द्विरदानिव दिग्विभावितांश्चतुरस्तोयनिधीनिवायतः ।
प्रसहेत रणे तवानुजान् द्विषतां कः शतमन्युतेजसः ॥

४. ज्वलतस्तव जातवेदसः सततं वैरिकृतस्य चेतसि ।
विदधातु शमं शिवेतरा रिपुनारीनयनाम्बुसन्ततिः ॥

५. इति दर्शितविक्रियं सुतं मरुतः कोपपरीतमानसम् ।
उपसान्त्वयितुं महीपतिर्द्विरदं दुष्टमिवोपचक्रमे ॥

६. अपवर्जितविप्लवे शुचौ हृदयग्राहिणि मङ्गलास्पदे ।
विमला तव विस्तरे गिरां मतिरादर्श इवाभिदृश्यते ॥

७. स्फुटता न पदैरपाकृता न च न स्वीकृतमर्थगौरवम् ।
रचिता पृथगर्थता गिरां न च सामर्थ्यमपोहितं क्वचित् ॥

८. उपपत्तिरुदाहृता बलादनुमानेन न चागमः क्षतः ।
इदमीदृगनीदृगाशयः प्रसभं वक्तुमुपक्रमेत कः ॥

९. अवितृप्ततया तथापि मे हृदयं निर्णयमेव धावति ।
अवसाययितुं क्षमाः सुखं न विधेयेषु विशेषसम्पदः ॥

१०. सहसा विदधीत न क्रियामविवेकः परमापदां
वृणते हि विमृश्यकारिणं [illegible]

११. अभिवर्षति योऽ[illegible]
स सदा फल[illegible]

१२. शुचि भूषयति श्रुतं वपुः प्रशमस्तस्य भवत्यलङ्क्रिया ।
प्रशमाभरणं पराक्रमः स नयापादितसिद्धिभूषणः ॥

१३. मतिभेदतमस्तिरोहिते गहने कृत्यविधौ विवेकिनाम् ।
सुकृतः परिशुद्ध आगमः कुरुते दीप इवार्थदर्शनम् ॥

१४. स्पृहणीयगुणैर्महात्मभिश्चरिते वर्त्मनि यच्छतां मनः ।
विधिहेतुरहेतुरागसां विनिपातोऽपि समः समुन्नतेः ॥

१५. शिवमौपयिकं गरीयसीं फलनिष्पत्तिमदूषितायतिम् ।
विगणय्य नयन्ति पौरुषं विजितक्रोधरया जिगीषवः ॥

१६. अपनेयमुदेतुमिच्छता तिमिरं रोषमयं धिया पुरः ।
अविभिद्य निशाकृतं तमः प्रभया नांशुमताप्युदीयते ॥

१७. बलवानपि कोपजन्मनस्तमसो नाभिभवं रुणद्धि यः ।
क्षयपक्ष इवैन्दवीः कलाः सकला हन्ति स शक्तिसम्पदः ॥

१८. समवृत्तिरुपैति मार्दवं समये यश्च तनोति तिग्मताम् ।
अधितिष्ठति लोकमोजसा स विवस्वानिव मेदिनीपतिः ॥

---

# READY FOR SALE.

| | RS. | AS. | P. |
|---|---|---|---|
| भक्तिमञ्जरी (Stuti) by H. H. Svâti Srî Râma Varma Mahârâjah. | 1 | 0 | 0 |

## Trivandrum Sanskrit Series.

| | RS. | AS. | P. |
|---|---|---|---|
| No. 1—दैवम् (Vyâkarana) by Deva with Purushakâra of Krishnalilâsukamuni. | 1 | 0 | 0 |
| No. 2—अभिनवकौस्तुभमाला-दक्षिणामूर्तिस्तवौ by Krishnalilâsukamuni. | 0 | 2 | 0 |
| No. 3—नलाभ्युदयः (Kâvya) by Vâmana Bhatta Bâna (Second Edition). | 0 | 4 | 0 |
| No. 4—शिवलीलार्णवः (Kâvya) by Nilakantha Dikshita. | 2 | 0 | 0 |
| No. 5—व्यक्तिविवेकः (Alankâra) by Mahima Bhatta with commentary. | 2 | 12 | 0 |
| No. 6—दुर्घटवृत्तिः (Vyâkarana) by Saranadeva. | 2 | 0 | 0 |
| No. 7—ब्रह्मतत्त्वप्रकाशिका (Vedânta) by Sadâsivendra Sarasvati | 2 | 4 | 0 |
| No. 8—प्रद्युम्नाभ्युदयम् (Nâtaka) by Ravi Varma Bhûpa. | 1 | 0 | 0 |
| No. 9—विरूपाक्षपञ्चाशिका (Vedânta) by Virûpâkshanâtha with the commentary of Vidyâchakravartin. | 0 | 8 | 0 |
| No. 10—मातङ्गलीला (Gajalakshana) by Nilakantha. | 0 | 8 | 0 |
| No. 11—तपतीसंवरणम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma. | 2 | 4 | 0 |
| No. 12—परमार्थसारम् (Vedânta) by Bhagavad Âdisesha with the commentary of Râghavânanda | | | |
| No. 13—सुभद्राधनञ्जयम् (Nâtaka) by Kul... Varma with the ... | | | |
| No. 14—नीतिसारः (Nit... | | | |
| No. 15—स्वप्नवासव... | | | |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 16—प्रतिज्ञायौगन्धरायणम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् Do. Do. | 1 | 0 | 0 |
| No. 18—नारायणीयम् (Stuti) by Nârâyana Bhatta with the commentary of Desamangala Varya. | 4 | 0 | 0 |
| No. 19—मानमेयोदयः (Mîmâmsâ) by Nârâyana Bhatta and Nârâyana Pandita. | 1 | 4 | 0 |
| No. 20—अविमारकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 21—बालचरितम् Do. Do. | 1 | 0 | 0 |
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part I. 1st & 2nd Kândas) | 1 | 12 | 0 |
| No. 24—जानकीपरिणयः (Kâvya) by Chakrakavi. | 1 | 0 | 0 |
| No. 25—काणादसिद्धान्तचन्द्रिका (Nyâya) by Gangâdharasûri. | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् (Nâtaka) by Bhâsa. | 0 | 12 | 0 |
| No. 27—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part I, 1st & 2nd Sargas). | 1 | 12 | 0 |
| No. 28—वैखानसधर्मप्रश्नः (Dharmasûtra) by Vikhanas. | 0 | 8 | 0 |
| No. 29—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part II. 3rd Kânda). | 2 | 4 | 0 |
| No. 30—वास्तुविद्या (Silpa). | 0 | 12 | 0 |
| No. 31—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part III. 4th, 5th & 6th Kândas). | 1 | 0 | 0 |
| No. 32—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part II, 3rd, 4th & 5th Sargas) | 2 | 8 | 0 |
| ...संग्रहः (Vyâkarana) with the com- ...rabhâ of Nârâyana. | 0 | 8 | 0 |
| ...) by Râja- ...mimakhin. | 1 | 4 | 0 |
| ...by Gopi- ...nâtha. | 1 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 36—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, *Prakâsikâ* of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part III. 6th, 7th & 8th Sargas). | 3 | 0 | 0 |
| No. 37—आशौचाष्टकम् (Smriti) by Vararuchi with commentary. | 0 | 4 | 0 |
| No. 38—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tikâsarvasva of Vandyaghatiya Sarvânanda (Part I. 1st Kânda). | 2 | 0 | 0 |
| No. 39—चारुदत्तम् (Nâtaka) by Bhâsa. | 0 | 12 | 0 |
| No. 40—अलङ्कारसूत्रम् (Alankâra) by Râjânaka Srî Ruyyaka with the Alankârasarvaswa of Sri Mankhuka and its commentary by Samudrabandha. | 2 | 8 | 0 |
| No. 41—अध्यात्मपटलम् (Kalpa) by Âpastamba with Vivarana of Sri Sankara Bhagavat Pada. | 0 | 4 | 0 |
| No. 42—प्रतिमानाटकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 43—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghatana of Kshiraswamin and Tîkasarvaswa of Vandyaghatiya Sarvananda (Part II. 2nd Kanda 1—6 Vargas). | 2 | 8 | 0 |
| No. 44—तन्त्रशुद्धम् (Tantra) by Bhattâraka Srî Vedottama. | 0 | 4 | 0 |
| No. 45—प्रपञ्चहृदयम् (Prapanchahridaya). | 1 | 0 | 0 |
| No. 46—परिभाषावृत्तिः (Vyâkarana) by Nilakantha Dikshita. | 0 | | |
| No. 47—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Sri Krishnânânda Sarasvati | | | |
| No. 48— Do. | | | |
| No. 49—गोलदीपिका (J | | | |
| No. 50—रसार्णवसुधा | | | |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 51—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghâtana of Kshîraswâmin and Tîkâsarvaswa of Vandyaghatîya Sarvananda (Part III. 2nd Kanda 7—10 Vargas). | 2 | 0 | 0 |
| No. 52—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tîkâsarvaswa of Vandyaghatîya Sarvananda (Part IV. 3rd Kanda). | 1 | 8 | 0 |
| No. 53—शाब्दनिर्णयः (Vedânta) by Prakâsâtmayatîndra. | 0 | 12 | 0 |
| No. 54—स्फोटसिद्धिन्यायविचारः (Vyâkarana) | 0 | 4 | 0 |
| No. 55—मत्तविलासप्रहसनम् (Nâtaka) by Sri Mahendravikramavarman. | 0 | 8 | 0 |
| No. 56—मनुष्यालयचन्द्रिका (Silpa). | 0 | 8 | 0 |
| No. 57—रघुवरिचरितम् (Kavya). | 1 | 4 | 0? |
| No. 58—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Srî Krishnânanda Saraswatî (Part III). | 2 | 0 | 0? |
| No. 59—नागानन्दम् (Nâtaka) by Srîharshadeva with the commentary Nâgânandavimarsinî of Sivarâma. | 3 | 4 | 0 |
| No. 60—लघुस्तुतिः (Stuti) by Sri Laghubhattâraka with the commentary of Srî Raghavânanda. | 0 | 8 | 0 |
| No. 61—सिद्धान्तसिद्धाञ्जनम् (Vedanta) by Sri Krishnananda Sarasvati (Part IV). | 1 | 8 | 0 |
| No. 62—सर्वमतसंग्रहः (Sarvamatasangraha). | 0 | 8 | 0 |
| No. 63—किरातार्जुनीयम् (Kavya) by Bharavi with the commentary Sabdarthadipika of Chitrabhanu (1, 2 and 3 Sargas). | 2 | 8 | 0 |

No.
No. 1
No.
...matî...
Pandita (Part
...संग्रहः (Vyâkaran...
...prabhâ of Na...
...) by Râja-
...mimakhin.
...by Gopi-
...nâtha.
of
Publications,
...andrum.

